*Sri Govindabhattatheri Viracitham*

# MUHURTHA RATHNAM

*(Sri Parameshwarakritha Vyakhyopetham)*

Editor

***Dr. A. Sripada Bhat***

**VARAHAMIHIRA PUBLICATIONS**

TIRUPATI

**1999**

**MUHURTHA RATHNAM**

Edited by

***Dr. A. Sripada Bhat***

First Edition - 1999

Copies - 1000





*The book is published with the financial assistance*
***Tirumala Tirupati Devasthanams*** *under their schem*
***"Aid to publish Religious books"***

Price - 175

For Copies :
***Mrs. Vinathi Sripada Bhat***
Type III Quarters
R.S.Vidyapeetha
Tirupati - 517 507.
✆ : 29074

Printed at
**ANNAPURNA GRAPHICS**
53 (upstairs) R.S. Gardens
Tirupati ✆ : 30184

ग्रन्थोऽयं कीर्तिशेषयोः मम मातापित्रोः दिव्यसन्निधौ

सभक्तिश्रद्धं समर्प्यते।



वात्सल्यतोयसम्पूर्णां मातरं यमुनाभिधाम् ।
स्तौमि तातं गणेशञ्च विष्णुवृद्धकुलोद्भवम् ॥

मन्त्रोपदेशदातारं केशवं च द्विजोत्तमम् ।
लक्ष्म्या सह समायुक्तं मद्गुरुं प्रणमाम्यहम् ॥



कल्याणाद्भुतगात्राय कामितार्थप्रदायिने ।

श्रीमद्वेङ्कटनाथाय श्रीनिवासाय मङ्गलम् ॥

# शुभाशंसनम्

**प्रो. डि. प्रह्लादाचार्यः**
कुलपतिः
राष्ट्रियसंस्कृतविद्यापीठम्
तिरुपतिः

मानवस्य नानाविधक्लेशनिदानेषु प्रधामज्ञानमेवेति विज्ञाय तन्निवारणे बद्धादरैः सर्वलोकहितकाङ्क्षिभिः प्राचीनैः महर्षिभिः स्वानुष्ठितस्य महतस्तपसः प्रभावेणाविष्कृतेषु नैकदर्शनेषु ज्यौतिषदर्शनस्यास्ति महत् स्थानम् । इदं हि वेदाङ्गेष्वन्यतमम् । इदं च शास्त्रं न केवलं वैदिककर्मानुष्ठानतत्पराणां श्रोत्रियाणामेव कर्मानुष्ठानयोग्यकालादिनिर्णायकत्वेनोपकारकमपि तु सामान्यस्यापि सर्वस्य जनस्य तेन तेनानुष्ठेयानां लौकिकानामलौकिकानां च कर्मणां सफलतासिद्ध्यै योग्यकालादिज्ञापनेन नितान्तमुपकारकमिति भौतिकविज्ञानप्रभावास्कन्दितैरपि विवेचनशीलैर्बहुभिरङ्गीकृतमस्ति ।

सिद्धान्तसंहिताहोरारूपस्कन्धत्रयात्मकस्य वेदचक्षुष्ट्वेन प्रथितस्यास्य ज्योतिर्विज्ञानस्य सम्बन्धिन्यः अनेकाः महत्त्वपूर्णाः मातृकाः प्राकाश्यमवेक्षमाणाः तत्र तत्र सन्तीति नाविदितमेतच्छास्त्रपरिचयवतां विदुषाम् । तादृशग्रन्थेष्वन्यतमः **मुहूर्तरत्नाख्यो** ग्रन्थः योऽयं क्रैस्ते त्रयोदशतमे शतमाने केरलेषु लब्धजनुषा गोविन्दभट्टतिरीति सुगृहीतनामधेयेन विद्वत्तल्लजेन विरचितः । नाम्ना मुहूर्तमात्रसम्बन्धिविषयविचारपरतया प्रतीयमानोऽयं ग्रन्थः ज्योतिःशास्त्रसम्बन्धिनः इतरानपि विषयान् प्रस्तौतीतीदमस्य ग्रन्थस्य वैशिष्ट्यम् । नितान्तमुपयुक्तया

परमेश्वरनामकेन विद्वद्वरेण रचितया व्याख्यया सङ्कलितोऽयं ग्रन्थः तिरुपतिस्थराष्ट्रियसंस्कृतविद्यापीठे ज्योतिःशास्त्रविभागेऽध्यापनकर्मनिरतैः ज्योतिःशास्त्रे कृतभूरिपरिश्रमैः डा. श्रीपादभट्टमहोदयैः नानामातृकापरिशीलन-पुरस्सरं महता प्रयासेन सम्पाद्यात्युपयुक्तोपोद्घातादिभिः संयोज्य इदं प्राथम्येन प्राकाश्यं नीयत इति ज्योतिःशास्त्राध्ययने समासक्तचित्तानां समेषां विदुषां विद्यार्थिनां च महते प्रमोदाय कल्पते। डा. श्रीपादभट्टमहोदयाः एवमेव अप्रकटितान् अन्यानपि ज्योतिःशास्त्रग्रन्थान् सम्पादयन्तु, भगवान् श्रीनिवासः एतस्मिन् ज्ञानयज्ञे यशःप्रदानेन समनुगृह्णात्विति प्रार्थये।

*डि. प्रह्लादाचार्यः*

# उपोद्घातः

जगति जन्तवः सर्वे सुखमेव समीहन्ते । तस्मादेव स्वस्वाहारविहारसाधनविधौ प्रवर्तन्ते प्रवर्धन्ते च । आहारविहारादयो यद्यपि जनिभृत्सु समानाः सन्ति तथापि विवेकादेव जन्तुभ्यो भिन्नाः भौतिकपदार्थेषु मिथ्यात्वं मन्वानाः मानवाः निरतिशयं सुखमेव सर्वथा समीहन्ते । समीहेयं "सुखं मे भूयात् दुःखं मा क्वचिदि"ति इच्छापरपर्यायैव । इयं च स्वाभाविकी । तदर्थमेव सर्वाः प्रवृत्तयो विजायन्ते, पुनः सर्वे प्रवर्तन्त इति सार्वजनीनोऽयं विचारः ।

पुनस्तन्निरतिशयं च सुखं कथङ्कारं सिध्यतीति समुदितायां जिज्ञासायां सत्यां वेदार्थज्ञानानुष्ठानादेवेति समाधानं प्रसिध्यति । वेदो हि नो धनम् । वेदो नाम "अपौरुषेयं वाक्यम्" इष्टप्राप्त्यनिष्टपरिहारयोरलौकिकमुपायं यो वेदयते सः" इति लक्षणं भाष्यकारैर्निरटङ्कि । "विद्यन्ते ज्ञायन्ते लभ्यन्ते एभिर्धर्मादिपुरुषार्थाः" इति व्युत्पत्या वेदज्ञानमन्तरा धर्मादयो न सिध्यन्ति, धर्मार्थकामानां सिध्यभावे चतुर्थस्य निरतिशयसुखरूपस्य मोक्षस्यापि सुतरां सिध्यभावः इति तु निश्चप्रचम् । तस्मादेव धर्मार्थकामाः समनुष्ठेयाः निरतिशयसुखैकप्रेप्सुभिरिति साम्प्रतम् ।

## वेदाङ्गानि

अथ च मोहसंसारसागरात् सर्वान् समुत्तितीर्षया परमकारुणिकैर्महर्षिभिर्वेदार्थबोधकसौकर्यायैव वेदाङ्गानि दर्शनानि समाम्नातानि, प्रणीतानि चेति सौभाग्योपचयो हि जनानाम् । न हि वेदाङ्गज्ञानमन्तरा वेदार्थावगतिः सम्भवति । स्थिते चैवं वेदाङ्गानां ज्ञानमनिवार्यमिति तु नातिरिक्तं वचः । तस्मात् कर्मानुष्ठानार्थं वेदाङ्गान्यपि विज्ञेयान्येव । वेदस्य वेदाङ्गानां दर्शनानां च परमं चरमं लक्ष्यं तु मोक्ष एव । विना कर्मानुष्ठानेन किमपि न सिध्यतीत्यत्र नास्ति विप्रतिपत्तिः । कर्मानुष्ठानात् दुरिततक्षयः, दुरितक्षयात् तत्वज्ञानोदयः, तत्वज्ञानोदयात् मिथ्याज्ञानक्षयः, मिथ्याज्ञानक्षयाद्रागादिक्षयः, रागादिक्षयान्मोहक्षयः, मोहक्षयान्मोक्ष इति सोपानानि तस्य । अत एवोक्तं, - "नित्यनैमित्तयोरेव कुर्वाणो दुरितक्षयम्" । इति । तस्मान्नित्यनैमित्तिककर्मानुष्ठानमवश्यमेव । तदर्थं वेदाङ्गानां

ज्ञानमत्यावश्यकम्। वेदाङ्गानीमानि भवन्ति -

[1]छन्दः पादौ तु वेदस्य हस्तौ कल्पोऽथ पठ्यते।
ज्योतिषामयनं चक्षुर्निरुक्तं श्रोत्रमुच्यते॥

[1]शिक्षा घ्राणं तु वेदस्य मुखं व्याकरणं स्मृतम्।
तस्मात्साङ्गमधीत्यैव ब्रह्मलोके महीयते॥

**वेदाङ्गेषु ज्यौतिषस्य महत्त्वम्**

वेदस्य चक्षुर्भूतमिदं ज्यौतिषं शास्त्रं वेदाङ्गेषु षट्सु नितरां महत्त्वं प्राधान्यं च जुषते। यतो हि ज्यौतिषमिदं कालविधायकं शास्त्रम्। कालविधायकमित्यस्य कालविज्ञापकमिति यावत्। समुहूर्तमनुरुध्य क्रियमाणा यज्ञयागादिक्रियाकलापाः फलाय कल्पन्ते, न तु यदृच्छया सम्पद्यमानाः। अत एवोक्तमभियुक्तैः -

वेदा हि यज्ञार्थमभिप्रवृत्ताः
कालानुपूर्वा विहिताश्च यज्ञाः।
तस्मादिदं कालविधानशास्त्रं
यो ज्यौतिषं वेद स वेद यज्ञान्॥

यथा उदिते जुहोति, अनुदिते जुहोति, उपरागे स्नायात् दर्शपूर्णमासाभ्यां यजेत इत्यादीनि विधिवाक्यानि वेदादधिगतानि। परं कस्योदयः? कस्योपरागः? कोऽयं दर्शः? इत्यादिकालज्ञानाभावात् कथं कर्तव्यमिति प्राप्ते ज्यौतिषमेवोत्तरं समभिधत्ते। उदयानुदयदर्शोपरागादीनां कालं सूक्ष्मेक्षिकया सूक्ष्मातिसूक्ष्मं सूर्यादीनां गमनमभिलक्ष्य निर्णयन्ति दैवज्ञाः। तेषां सततपरिश्रमात् प्रसूत एव कालः यज्ञयागाद्यनुष्ठाने योग्यः शस्तश्च।

इदं तु ज्यौतिषं कालविधायकमिति प्रागेवोक्तम्। किन्तु न केवलं कालविधायकं, भूतवर्तमानभविष्यन्निर्णायकमपि। वयं तु फलभागिन इत्यार्योक्त्य-नुगुणं कृतस्य कर्मणः, क्रियमाणस्य कर्मणः, करिष्यमाणस्य कर्मणश्च फलं कीदृक् भवेदिति लोके लोकाः संशेरते जिज्ञासन्ते च। अस्योपायस्तु ज्यौतिषमन्तरा न कश्चिदस्ति लोके।

**ज्यौतिषस्यावान्तरभेदाः**

वेदचतुष्टयस्यापि प्रतिवेदं भिन्नं ज्योतिःशास्त्रमुपलभ्यते; ऋग्ज्यौतिषं, यजुर्ज्यौतिषं, सामज्यौतिषं, अथर्वज्यौतिषञ्चेति। कालक्रमेण शास्त्रस्यास्य बहुविकासः समजनि। गच्छति काले इदं च शास्त्रं सिद्धान्त-संहिता-होरेति स्कन्धत्रयेण विभक्तम्। उक्तं च नारदेन -

सिद्धान्तसंहिताहोरारुपं स्कन्धत्रयात्मकम्।
वेदस्य निर्मलं चक्षुर्ज्योतिःशास्त्रमनुत्तमम्॥ इति।

एवं च प्रश्नमार्गे -

जातकगोलनिमित्तप्रश्नमुहूर्ताख्यगणितनामानि।
अभिदधतीह षडङ्गान्याचार्या ज्योतिषां महाशास्त्रे॥

इति च ज्यौतिषस्य षडङ्गत्वं एषु जातकादिषु आमनन्ति विद्वांसः। इदं च शास्त्रं इतोऽपि विराट्स्वरूपं सम्प्राप्य मनोविज्ञानचिकित्साशास्त्रादिभिरपि समृद्धमभूत्। सूक्ष्मेक्षिकया परिशील्यमाने स्कन्धत्रये एव सर्वेऽपि विचाराः विलीयन्ते।

**होरा -**

अहोरात्रशब्दादेव होराशब्दस्यास्योत्पत्तिरिति विदुषामाशयः। यथोक्तं बृहज्जातके -

होरेत्यहोरात्रविकल्पमेके वाञ्छन्ति पूर्वापरवर्णलोपात्।
कर्मार्जितं पूर्वभवे सदादि यत्तस्य पङ्क्तिं समभिव्यनक्ति॥

होराभागस्यास्य जातकस्कन्धमित्यपि नामान्तरम्। जन्मकाले ग्रहाणां स्थित्यनुसारेण व्यक्तेर्जीवने सम्पत्स्यमानं शुभाशुभफलमत्र होरास्कन्धे आदिश्यते। ग्रहाणां राशीनां च स्वरूपं, वर्णविचारः, दिक्स्थितिः, द्वादश स्थानानि, ग्रहाणां परस्परदृष्टिविचारः, शत्रुमित्रत्वं, अष्टकवर्गः, आयुर्दायनिर्णयः, राजयोगाः, ग्रहाणां दशान्तर्दशाः इत्याद्यनेकविचाराः विमृश्यन्तेऽस्मिन् होरास्कन्धे।

बृहज्जातकम्, सारावलिः, जातकपद्धतिः, होराकौस्तुभम्, जातकपारिजातम् इत्यादयः प्रसिद्धाः केचन होराग्रन्थाः। वराहमिहिराचार्यणां "बृहज्जातकम्" महत्त्वं स्थानं भजते जातकग्रन्थेषु।

**सिद्धान्तः**

सिद्धान्तस्कन्धेऽस्मिन् आकाशस्थग्रहनक्षत्रादीनां स्थितिः, ग्रहाणां गतिविशेषः, ग्रहकक्षाः, अहर्गणानयनक्रमः, ग्रहस्पष्टीकरणप्रकारः, सूर्यचन्द्रयोर्ग्रहणमित्यादिविचारा उपवर्ण्यन्ते। एवमेव दिग्देशकालनिर्णयः सौरसावनादि नव मानभेदाः, ज्यासाधनम्, चर-देशान्तर संस्काराः इत्यादिविषया अपि स्कन्धस्यास्य विचाराः।

कल्पादितः अहर्गणं संसाध्य यत्र ग्रहस्पष्टीकरणं क्रियते स सिद्धान्तः, यत्र च युगादितः अहर्गणमानीयते तत्तन्त्रमिति, तथा च कल्पितेष्टवर्षमारभ्य यस्मिन् अहर्गणमानीय ग्रहकर्म क्रियते तच्च करणमित्युदीर्यते। पुनश्चाङ्कगणित-बीजगणित-रेखागणितमिति त्रिधा भिद्यते। बहुप्राचीनकाले एव भारतीयगणितज्ञाः गणितविषये महता प्रयत्नेन अनुसन्धानं कृत्वा बहूनंशान् प्रतिपादितवन्तः। प्राचीनभारतीयज्यौतिषिकैराविष्कृतदशमलवपद्धतिः आधुनिकैरपि उररीक्रियते। भूमेराकर्षणशक्तिसिद्धान्तः यदधुनातनाधुनिकविज्ञानिभिरुपस्थापितः स सिद्धान्तः भास्कराचार्यैः सिद्धान्तशिरोमणिग्रन्थे स्पष्टं प्रतिपादितो दृश्यते। यथा -

आकृष्टिशक्तिश्च मही तया यत्खस्थं गुरु स्वाभिमुखं स्वशक्त्या।
आकृष्यते तत्पततीव भाति समे समन्तात् क्व पतत्वियं खे॥

इति। आर्यभट्टस्य आर्यभटीयम्, लल्लस्य धीवृद्धिदम्, ब्रह्मगुप्तस्य ब्रह्मस्फुटसिद्धन्तः, भास्कराचार्याणां सिद्धान्तशिरोमणिः इत्यादयः प्रसिद्धसिद्धान्तग्रन्थाः।

**संहिता**

संहितास्कन्धेऽस्मिन् राष्ट्रविषयकशुभाशुभफलं निर्णीयते, न तु व्यक्तिविषयकम्। सूर्यादिग्रहाणां नक्षत्रमण्डले भ्रमणेन जगति शुभाशुभफलं,

अगस्त्यादिसप्तर्षीणां उदयविचारः, ग्रहाणां युद्धसमागमादिविषयः, संवत्सरफलं ग्रहश्रृङ्गाटकं, पर्जन्यगर्भलक्षणं, गर्भधारण-वर्षण-सद्योवर्षणं, कुसुमफललक्षणं इत्याद्यनेकविचाराः विमृश्यन्ते स्कन्धेऽस्मिन्। तथा च दिग्दाहः, भूकम्पः, केतूदयः, उल्कापातः प्रतिसूर्योदयः इत्यादिशकुनानां फलमपि उच्यते।

संहितोक्तवास्तुप्रकरणं, दकार्गलं चातीव महत्त्वमावहति। प्रासादलक्षणं, वृक्षायुर्वेदः, देवप्रतिमाविचारः इत्यादयोऽपि सुष्ठु उपवर्णिता दृश्यन्तेऽस्मिन् संहितास्कन्धे। एतदतिरिच्य वायसविरुत-शिवारुत-गवेङ्गित-अश्वेङ्गित-मृगचेष्टितादीनां फलमपि विचार्यते। ज्यौतिषे संहिताभागः प्रधानं स्थानमावहति।

गर्गः, पराशरः, असितः, देवलः, कश्यपः, भृगुः वसिष्ठः, बृहस्पतिः, भद्रबाहुः, वराहमिहिरः इत्यादयः प्रसिद्धाः संहिताग्रन्थप्रणेतारः। वराहमिहिराचार्याणां "बृहत्संहिता" ग्रन्थः प्रचलितः प्रसिद्धश्च विराजते।

## मुहूर्तः

मुहूर्तशब्दोऽयं कालविशेषवाचकः। वेदकाले एव मुहूर्तः कालपरिमाणपर्यायान्तरेण व्यवहृतः संदृश्यते। अह्नः पञ्चदशो भागः मुहूर्तशब्देन व्यपदिश्यते। तथा रात्रेश्च। एवमाहत्य एकस्मिन् दिने त्रिंशत् मुहूर्ताः भवन्ति। अत्र प्रमाणीभूतानि वाक्यानि उपनिषद्ब्राह्मणादिषु गोचरीक्रियन्ते। यथा -

"अथ यदाह। चित्रः केतुर्दाता प्रदाता सविता प्रसविताभिशास्तानुमन्तेति। एष एव तत्। एष ह्येव ते अह्नो मुहूर्ताः। एष रात्रेः।"

(तैत्तिरीयब्राह्मणे 3-10-6)

शुक्लकृष्णपक्षभेदेन दिवारात्रिभेदेन च मुहूर्तानां पृथक् नामान्तराणि ब्राह्मणादिषूपलभ्यन्ते। यथा -

"चित्र केतुः प्रभानाभात्संभात्। ज्योतिष्मा; स्तेजस्वानातप; स्तपन्निभितपात्। रोचनो रोचमानः शोभनः शोभमानः कल्याणः"॥

(तैत्तिरीयब्राह्मणे 3-10-1)

इमानि भवन्ति शुक्लपक्षे दिवसस्य मुहूर्तनामानि। शुक्लपक्षस्य रात्रेस्तु मुहूर्ताः -

"दाता प्रदाताऽनन्दो मोदः प्रमोदः। आवेशन्निवेशयन् संवेशनः स; शान्तः शान्तः। अभवन् प्रभवन् संभवन् सम्भूतो भूतः ॥"

(तैत्तिरीयब्राह्मणे 3-10-1,2)

कृष्णपक्षे दिनस्य मुहूर्तनामानीमानि भवन्ति -

"सविता प्रसविता दीप्तो दीपयन् दीव्यमानः। ज्वलन् ज्वलिता तपन् वितपन् सन्तपन्। रोचनो रोचमानः शुम्भूः शुम्भमानो वामः ॥" इति।

(तैत्तिरीयब्राह्मणे 3-10-1-2)

कृष्णपक्षस्य रात्रेर्मुहूर्ताः -

"अभिशास्तानुमन्तानन्दो मोदः प्रमोदः। आसादयन् निषादन् स; सादनः स; सन्नः। आभूर्विभूः प्रभूः शम्भूर्भुवः ॥"

(तैत्तिरीयब्राह्मणे 3-10-1-2)

प्रत्येकमुहूर्ते पञ्चदशसूक्ष्ममुहूर्ता अपि वर्तन्ते इत्ययमंश उपलभ्यते तैत्तिरीयब्राह्मणे। यथा -

"अथ यदाह। इदानीं तदानीमिति। एष एव तत्। एष ह्येव ते मुहूर्तानां मुहूर्ताः।"

(तैत्तिरीयब्राह्मणे 3-10-6-6)

एषां प्रतिमुहूर्तानां नामानि अपि मन्त्रेषु निर्दिष्टानि उपलभ्यन्ते। यथा -

"इदानीं तदानीमेतर्हि क्षिप्रमजिरं। आशुर्निमेष फणोद्रवन्नतिद्रवन्। त्व; स्त्वरमाण आशुरशीयान् जवः ॥" इति।

(तैत्तिरीयब्राह्मणे 3-10-1-4)

अथर्वज्यौतिषेऽपि मुहूर्तशब्दः कालवाचकत्वेनोपलभ्यते। तेषां नामानि तथा च चतुर्षु अङ्गेषु मुहूर्तस्य स्थितिरपि कल्पिता दृश्यते। यथा -

चतुर्भिः कारयेत् कर्म सिद्धिहेतोर्विचक्षणः ।
तिथिनक्षत्रकरणमुहूर्तैरिति नित्यशः ॥ इति ।

निरुक्ते द्वितीयाध्याये पञ्चविंशतितमे खण्डे मुहूर्तक्षणनामककाल-परिमाणयोर्नामानि निर्दिष्टानि सन्ति ।

एवमेव पाणिनीयव्याकरणे महाभारते च मुहूर्तशब्दोऽयं कालपरिमाणकत्वेनोल्लिखितः दरीदृश्यते ।

गच्छति काले मुहूर्तशब्दस्य अर्थव्याप्तिः बहुविस्तृता सञ्जाता । विवाहादिसंस्कारविशेषास्तथा चान्यानेकव्यावहारिककर्मविशेषाश्च निर्दिष्टसमयानुरोधेन विहिता एवाभीप्सितफलदा भवन्तीति लोके लोकाः अनुमन्वते। तत्तत्कर्मानुरोधेन वारतिथिनक्षत्रादीनां परस्परसंयोगेन अत्यन्तंगुणाधिक्यं दोषन्यूनत्वं च यस्मित् काले प्रसिध्यति सः कालः मुहूर्तः इति व्यवहारः क्रमेण समभवत् । प्रथमतया संहिताग्रन्थेषु विविधकर्मोपयुक्तमुहूर्तानां वर्णनमुपलभ्यते । संहितास्कन्धस्य वैशाल्यकारणात् मुहूर्तानां बहूपयोग्यत्वात् च मुहूर्तः प्राधान्यमविन्दत । एवं ज्यौतिषे मुहूर्तः प्रत्येकभागत्वेन कल्पितः अभियुक्तैः ।

## मुहूर्तस्य प्रयोजनम्

दिग्देशकालानुकूलकर्मैव यथार्थफलं प्रदत्ते, नान्यथा । बहूषूपकरणेषु सत्स्वपि, सततोद्योगे कृतेऽपि बहुकर्माणि अनिष्टफलप्रदानि भवन्तीति सार्वजनीनोऽयं विचारः । आकाशस्थसूर्यचन्द्रादिग्रहाणां किरणविशेषैः जगति वर्तमाना जन्तवः वस्तुविशेषाश्च प्रभाविता भवन्तीति आधुनिकाः अपि अनुमन्यन्ते। तेषां ग्रहनक्षत्रादीनां प्रभावः कदा कस्योपरि पतति, कश्च तत्परिणामः इत्यादिविषयान् यौगिकदृष्ट्या सञ्चिन्त्य पूर्वसूरयः लोकोपकारार्थं प्रत्येकं कर्मविशेषस्य करणे समुचितकालनिर्णयं बहुभिः प्रकारैरनुसन्धानैः महता प्रयत्नेन आविश्चक्रुः । तदर्थमेव फलैकेप्सुभिः मानवैः मौहूर्तिकैरुक्तकाले एव नित्यनैमित्तिककार्याणि अनुष्ठीयन्ते ।

## लोके दैनन्दिनजीवने मुहूर्तस्य प्राधान्यम्

गर्भाधानादिसंस्कारविशेषेषु मुहूर्तानां प्राधान्यं सिद्धमेवास्ति। मानवस्य दैनन्दिनजीवने अपि मुहूर्ताः प्रमुखं स्थानमावहन्ति। लोकेऽस्मिन् अनुभववेद्योऽयं विषयः यत्पामरात् पण्डितपर्यन्तं सर्वेऽपि स्वस्वनित्यकार्येषु कालानुरोधेनैव कार्याणि अनुतिष्ठति। कृषिकः कर्षणार्थं, बीजवापनार्थं, फलकर्तनार्थं च निर्दिष्टकालमनुलक्ष्यैव प्रवर्तते। एवं क्रयविक्रयादिव्यवहारे, गृहप्रवेशनिर्माणादिषु, वापीतटाकादिखनने सुमुहूर्तमनुरुध्य जनः प्रारभते। प्रयाणौषधसेवनादिष्वपि कालस्यानुकूल्यं जनैरन्विष्यते। एतेन सामान्ये दैनिकव्यवहारे मुहूर्तस्य प्राधान्यं कियदस्तीति सुष्ठु अभिव्यज्यते।

## मुहूर्तग्रन्थेषु सामान्यतः प्रतिपाद्यमानविषयः

प्रत्येकं कर्मविशेषस्य फलावाप्तये शुभाशुभकालनिर्णयार्थमेव मुहूर्थगन्थाः प्रवृत्ता इति प्रागेवोक्तम्। सामान्यतः मुहूर्तग्रन्थेषु तिथि-वार-नक्षत्रयोगकरणानां परस्परयोगवशात् शुभाशुभयोगास्तेषां तिथ्यादीनामधिदेवताश्च उच्यन्ते। त्याज्यप्रकरणम्, सङ्क्रान्तिविचारः, पुण्यकालनिर्णयः, प्रत्येकं संक्रान्तिवशाच्छु-भाशुफलमित्यादीनि विचार्यन्ते मुहूर्तग्रन्थेषु। पुनश्च ग्रहगोचारविषयः, ग्रहाणां वेधस्थानानि, चन्द्रबलं, जन्मादिनवताराणां विचारः, ग्रहदोषनिवृत्यर्थं धार्यद्रव्याणि इत्याद्यपि विषयः प्रोच्यते।

गर्भाधानादिसंस्कारविशेषाणामुपयुक्तमुहूर्ताः, विवाहे वधूवरमेलापने कूटानि, गुरुशुक्रयोः बालावृद्धत्वं, राजाभिषेकः, यात्राप्रकरणं, यात्रायां जनितदुष्टदोषाणां शान्तिः, वास्तुविचारः गजादिविविधायानां स्वरूपकथनं, सौधनिर्माणविधिः इत्यादिविचाराश्च मुहूर्तग्रन्थेषु प्रस्तूयन्ते।

मुहूर्तग्रन्थेषु देशभेदेन तत्तद्देशानुष्ठानकर्मविशेषाणां मुहूर्ताः भिन्नाः भवन्ति। यतो हि अस्माकं देशे प्रदेशभेदेन आचार भेदोऽपि संदृश्यते। उत्तरभारतीयानां दक्षिणभारतीयानां वा सम्प्रदायविशेषकारणात् मुहूर्तग्रन्थेषु व्यत्यासः स्पष्टं भवति। दक्षिणेऽपि केरळीयमुहूर्तग्रन्थेषु किञ्चिद्वैलक्षण्यं गोचरीक्रियते।

## मुहूर्तग्रन्थानामितिहासः

मुहूर्तग्रन्थानामितिहासविषये दिङ्मात्रेणेह प्रस्तूयते। प्राचीनकाले मुहूर्तः संहिताविषयक एव आसीदिति प्रागेवोक्तम्। मुहूर्तः स्वतन्त्रभागत्वेन कदा स्थानमवापेति विचार्यमाणे वराहमिहिराचार्याणां कालानन्तरमेवेति समाधानं प्रसिध्यति। वराहमिहिराचार्याणां बृहत्संहिताग्रन्थानन्तरं तादृशः संहिताग्रन्थः अन्यः नोपलभ्यते। इतः परमेव संहिताविषयेषु मुहूर्तः प्राधान्यं प्राप्य मुहूर्तविषयकग्रन्थानां रचनापरम्परा प्रारब्धा इति तर्क्यते। उपलभ्यमानेषु मुहूर्तग्रन्थेषु लल्लस्य रत्नकोशः प्रप्रथममुहूर्तग्रन्थः इति मौहूर्तिकैः कल्प्यते। लल्लः क्रिस्ताब्दे षष्ठे शतमाने व्यलसदिति इतिहासज्ञा अभिप्रयन्ति। मतमेतदवलंब्य मुहूर्तग्रन्थानां आरम्भकालः क्रिस्ताब्दषष्ठशतमानमिति निश्चिन्वन्ति। कालक्रमेण मुहूर्तविषये बहुग्रन्थाः प्रादुरभूवन्। मुहूर्तग्रन्थेष्वपि अत्यन्तमुपयोगयोग्यविचाराः स्थानं अवापुः। तेन च लघुलघुतरग्रन्थानां रचनाक्रमः आरब्धः।

## प्रसिद्धाः केचन मुहूर्तग्रन्थास्तत्प्रणेतारश्च

गच्छति काले मुहूर्तग्रन्थानां प्रचारः बहुविस्तृतरूपेण समभूत्। ज्यौतिषसाहित्ये मुहूर्तग्रन्थाः बहु उपलभ्यन्ते। अत्र केषाञ्चन प्रसिद्धमुहूर्तग्रन्थानां परिचयः सङ्ग्रहेण समुपस्थाप्यते।

| ग्रन्थनाम | ग्रन्थकर्ता | रचनासमयः शकवर्षेषु |
|---|---|---|
| रत्नकोशः | लल्लः | 560 |
| रत्नमाला | श्रीपतिः | 961 |
| राजमार्तण्डः | भोजः | 964 |
| विद्वज्जनवल्लभः | भोजः | 964 |
| अद्भुतसागरः | बल्लाळसेनः | 1090 |
| व्यवहारप्रदीपः | पद्मनाभः | 1082 |
| ज्योतिर्विदाभरणम् | कालिदासः | 1164 |
| विवाहवृन्दावनम् | केशवः | 1165 |
| विवाहपटलः | शार्ङ्गधरः | 1400 |

| | | |
|---|---|---|
| मुहूर्ततत्वम् | केशवः | 1420 |
| विवाहपटलः | पीताम्बरः | 1444 |
| ज्यौतिषदर्पणः | कञ्चपल्लुः | 1479 |
| मुहूर्तमार्तण्डः | नारायणः | 1493 |
| तोडरानन्दः | नीलकण्ठः | 1509 |
| मुहूर्तचिन्तामणिः | रामदैवज्ञः | 1522 |
| मुहूर्तचूडामणिः | शिवः | 1540 |
| मुहूर्तकल्पद्रुमः | विठ्ठलदीक्षितः | 1549 |
| मुहूर्तदीपकः | महादेवः | 1583 |
| मुहूर्तगणपतिः | गणपतिः | 1607 |
| मुहूर्तमाला | रघुनाथः | 1660 |
| मुहूर्तसिन्धुः | गङ्गाधरशास्त्री | 1744 |

**ग्रन्थकर्तुः परिचयः**

अनुसन्धानविषयीभूतस्य मुहूर्तरत्नस्य ग्रन्थस्यास्य प्रणेतुर्नाम गोविन्दभट्टतिरीति। केरलदेशीयोऽयं तलक्कुलमित्याख्यग्रामे व्यलसदिति ज्ञायते। यद्यपि अस्य वंशगोत्रादिविषये विवरणं कुत्रापि ग्रन्थेषु नोपलभ्यते, अथापि व्याख्याकर्तुः परमेश्वरस्य वचनमवलम्ब्य केरलीब्राह्मणवंशेऽसौ समुत्पन्न इति ज्ञायते। परमेश्वरः स्वरचित आचारसङ्ग्रहाख्ये ग्रन्थे गोविन्दममुमेवं स्मरति यथा -

पितुः पितुर्मे गुरुरग्रजन्मा गोविन्दनामा भुवि विश्रुतोऽयम्।
ततोदितो यो गुरुपङ्क्तितो मां प्राप्तः स आचार इह प्रदिष्टः ॥ इति ॥

एतेन परमेश्वरस्य पितामहस्य गुरुरयं गोविन्दः आसीदिति च स्पष्टं भवति। मुहूर्तरत्नस्य व्याख्यावसरे आदौ परमेश्वरस्य वचनं विषयमिमं स्पष्टीकरोति। यथा -

गोविन्दपूज्यपादेन कृपासंसिक्तचेतसा।
मुहूर्तागमदुग्धाब्देर्मुहूर्तमणिरुद्धृतः ॥

तस्मिंस्तच्छिष्यपौत्रेण कियांश्चित्परमादिना।

भागो विव्रियते स्वल्पमीश्वरेण यथाश्रुतम् ॥ इति ।

**ग्रन्थकर्तुः कालनिर्णयः**

ग्रन्थकर्तुर्गोविन्दस्य कालविषये तत्कृतग्रन्थेषु कुत्रापि सूचना नोपलभ्यते । तथापि मुहूर्तरत्नस्य व्याख्याकर्तुः परमेश्वरस्य कालमाधारीकृत्य अस्य गोविन्दस्य आसन्नकालः साधयितुं शक्यते । गोविन्दोऽसौ सामान्यतः 1234-1295 क्रिस्ताब्दे काले आसीदिति निश्चिन्वन्ति इतिहासज्ञाः ।

**ग्रन्थकर्तुः अन्याः कृतयः**

अस्य लेखकस्य गोविन्दस्य अन्यग्रन्थानां विषये बहुमतभेदः दृश्यते । वराहमिहिराचार्याणां बृहज्जातकस्योपरि दशाध्यायीनामकव्याख्याग्रन्थमसौ गोविन्दः रचितवानिति अभिप्रयन्ति । अन्ये च केचन स च दशाध्यायीकर्ता अन्य इति निराकुर्वन्ति । अयं च दशाध्यायीग्रन्थः केरलदेशेषु अतीवप्रसिद्धः विराजते । ग्रन्थेऽस्मिन् वराहमिहिराचार्याणां "स्वल्पं वृत्तविचित्रमर्थबहुलं" इति प्रतिज्ञानुसारेण योऽभिप्रायः प्रकटितः विद्यते सः स्पष्टतया प्रतीतो विद्यते इति महानस्ति प्रत्ययः । प्रश्नमार्गरचयिता प्रश्नमार्गे प्रथमाध्याये दशाध्यायीविषये बहु प्रशंसति । यथा

"होरायास्तु दशाध्याय्यां व्याख्यायां क्रियतां श्रमः ।
दैवज्ञेन विशेषेण फलमादेष्टुमिच्छता ॥ 30 ॥

दशाध्याय्यां विशेषेण श्रमो नैव कृतो यदि ।
दुष्करः फलनिर्देशस्तद्विदां च तथा वचः ॥ 31 ॥

अदृष्ट्वा यो दशाध्यायीं फलमादेष्टुमिच्छति ।
इच्छत्येव समुद्रस्य तरणं स प्लवं विना ॥" 32 ॥ इति ।

एतेन केरलदेशे दशाध्यायीग्रन्थस्य वैशिष्ट्यं कियदासीदिति स्फुटं भवति ।

"मुहूर्तपदवी" इति मुहूर्तग्रन्थमपि अयं गोविन्दः रचयामासेति वदन्ति । मुहूर्तपदवीकर्ता गोविन्दः अन्यः कश्चिदिति अभिप्रायभेदोऽपि विद्यते ।

स्वकृते मुहूर्तरत्नगन्थे असौ गोविन्दः अन्यस्वरचितग्रन्थानां विषये कुत्रापि नोल्लिखिवान्। तस्मात् एतदतिरिच्य तस्यान्यग्रन्थविषये कापि सूचना नोपलभ्यते।

## ग्रन्थकर्तुर्वैदुष्यम्

यदि दशाध्यायीग्रन्थकर्तापि असावेव गोविन्दः स्यात्तर्हि स ग्रन्थ एव स्पष्टीकरोति अस्य वैदुष्यम्। मुहूर्तरत्नस्यावलोकनेनापि अस्य ज्यौतिषशास्त्रे महाननुभवः आसीदिति ज्ञायते। श्लोकरचनाशैली, अनुप्रासः, विषयनिरूपणकौशलमित्यादिना तस्मिन् संस्कृतभाषायामपि पाण्डित्यं सुष्ठु आसीत्तथा चासौ व्युत्पन्नोऽपि अवर्ततेति स्पष्टं प्रतिभाति।

ज्यौतिषस्य स्कन्धत्रयेऽपि प्राप्तानुभवः आसीदयं गोविन्दः। यद्यपि मुहूर्तरत्नग्रन्थः मुहूर्तसम्बधी वर्तते तथापि क्वचित् स्पष्टावबोधाय गणितप्रक्रियामपि सम्यङ्निरूपितवान्। अधिमासानयनक्रमः, तत्र च मतभेदः सुष्ठु वर्णितः उपलभ्यते। मुहूर्तरत्ने प्रथमाध्याये 132 तमश्लोकमारभ्य 138 तम श्लोकपर्यन्तं अधिमासविषये बहु चर्चा कृता विद्यते। अहर्गणेनाधिमासानयनक्रममयमेवामाह-

सत्यात्मा वेदशायीति हीनात्त्रिघ्नाद्दिनाद्धृते।
यथार्धीरैर्भवन्त्येते स्त्भकाब्दे च नाडिकाः॥ 133॥

इति। अर्केन्दुस्फुटतः एव अधिमासः साध्यः इत्युक्त्वा अन्येषां मतमुपस्थापयति-

शास्त्रेषु तावद्ग्रहमध्यमेन कर्माणि नोक्तानि तदर्थविद्भिः।
अन्येऽधिमासा रविचन्द्रमध्याद्वदन्ति कर्माण्यपि राममध्याः॥ 137॥ इति।

एवमेव तृतीयाध्याये 319 श्लोकमारभ्य "जनोदिनज्ञे"ति अश्विन्यादीनां उदयमानानि चोक्तानि सन्ति। एवमेव मुहूर्तज्ञानाय तत्कालछायाङ्गुलानयनक्रमः ग्रन्थेऽस्मिन् प्रतिपादितो विद्यते।

असौ गोविन्दाचार्यः न केवलं शास्त्रवित् अपि च देशाचारविषयानपि सम्यगवगतवानासीत्। विवाहस्य कूटानुकूल्यविषयनिरूपणसमये पाण्ड्यानां मतं, चोलानां मतं च प्रदश्र्य तत्कालीनसम्प्रदायविशेषाणां परिचयः अनेन दर्शितः विद्यते।

विविधयोगानामानुकूल्यकथनावसरे अन्येषां मतभेदानपि तत्र तत्र उल्लिखितवानस्ति।

**ग्रन्थकर्तुः औदार्यम्**

वराहमिहिराचार्याणां बृहत्संहितायां सांवत्सरसूत्राध्याये दैवज्ञेषु अपेक्षिताः गुणाः सम्यगुपवर्णिताः दृश्यन्ते। एते च गुणविशेषाः अस्मिन् गोविन्दे समुल्लसन्ति। अस्य सत्यवाक्त्व- अनसूयकत्वप्रभृतिगुणान् मुहूर्तरत्नस्यावलोकनेनैव जानीमः। तस्य उदारचरितत्वं ग्रन्थारम्भसमये तेनोदितवाक्येन स्पष्टं प्रतीयते। यथा -

सुवर्णचूतप्रमुखैः ज्योतिःशास्त्राब्धिचुञ्चुभिः।
गोपितापि मुहूर्तोक्तिर्दिङ्मात्रेणेह दृश्यते॥ 2 ॥

पूर्वोक्तश्लोकस्य व्याख्यावसरे परमेश्वरः एवं लिखति - ''पूर्वं केनचित् द्विजमुख्येन सर्वसिद्धिसंज्ञितं मुहूर्तशास्त्रं कृतम्। तत् कैश्चिदनङ्गीकृतमभूत्। ततस्तद्द्विजवरहितकामोऽयं गोविन्दाचार्यः तत्सर्वसिद्धिपरिग्रहे यत्नं कृतवानिति श्रूयते।'' इति। एतेन गोविन्दस्य गुणग्राहित्वं, दूरदृष्टित्वं च सुष्ठु व्यज्ञते।

**व्याख्याकर्तुः परिचयः**

मुहूर्तरत्नस्य व्याख्याकर्तुर्नाम परमेश्वर इति। व्याख्यातासौ परमेश्वरः क्वचित् स्वनाम ''परमादिना ईश्वरेण'' इति निर्दिशति। छन्दस आनुकूल्यार्थमित्थं तेन निर्दिष्टमिति ज्ञायते। प्रकृतमुहूर्तरत्नस्य व्याख्यानावसरे -

तस्मिंस्तच्छिष्यपौत्रेण कियांश्चित् परमादिना।
भागो विव्रियते स्वल्पमीश्वरेण यथाश्रुतम्॥ इति

एवं च गोलदीपिकायां -

परमादिनोक्तमेवं संक्षेपादीश्वरेण गोलस्य।
संस्थानं लघुतनये वक्तव्यं चान्यदस्ति गोलगतम्॥

इति च स्वनाम निर्दिशति। भृगुगोत्रीयब्राह्मणोऽसौ आश्वलायनसूत्रानुयायी आसीत्। केरलदेशे दक्षिणमलबारक्षेत्रे भारताप्पुजानद्यास्तीरे (संस्कृते नीलातीरेति) स्थितः अलत्तूरुग्रामः अनेन स्वजनुषा विभूषितः। अलत्तूरुग्रामोऽयं संस्कृतभाषायां

वटश्रेणीति व्यवह्रियते स्म। अयमंशः तस्य कृतिषु बहुत्र तेन निगदितः।

"नीलाब्ध्योः सङ्गमात् सौम्ये स्थितेन" इति सूर्यसिद्धान्तस्य स्वरचितव्याख्यावसरे आत्मनः देशविषये निर्दिशति।

गोलदीपिकाव्याख्यानावसाने -

"समरेखायाः पश्चादष्टादशयोजनान्तरे ग्रामे।
स्वरकृतषट्तुलिताक्षे --------- ॥"

समरेखाया अष्टादशयोजनान्तरे ग्रामे 10-47 उत्तराक्षांशपरिमिते देशे न्यवसदिति सविस्तरं स्वदेशविषये परमेश्वरेणोपवर्ण्यते।

परमेश्वरस्य मातापित्रोर्विषये न किमपि विवरणमुपलभ्यते। पर सः स्वगुरोर्नाम रूद्र इति बहुत्र समुल्लिखति। एवमेव गोलदीपिकाव्याख्यानावसरे नीलकण्ठसोमयाजी एवमुद्घोषयति -

"परमेश्वरस्तु रुद्रपरमेश्वरात्मजनारायणमाधवादिभ्यो गोलविद्भ्यो गणितगोलयुक्तीरपि बाल्य एव सम्यग्गृहीत्वा" इति।

एतेन परमेश्वरस्य गुरुविषये विररणमुपलभ्यते। परमेश्वरस्य पितामहः मुहूर्तरत्नकर्तुः गोविन्दस्य अन्तेवासी आसीदिति प्रस्तुतग्रन्थव्याख्यानावसरे परमेश्वरः स्वयं प्रस्तौति।

**परमेश्वरस्य कालः**

परमेश्वरोऽसौ स्वयमेव स्वस्य ग्रन्थरचनाकालविषये स्वरचितदृग्गणिते "एवं दृग्गणितं शके त्रीषुविश्वमिते (1353) कृतम्॥" इति उल्लिखति। एवं च गोलदीपिकायां -

"शकेऽक्षषट्त्रिचन्द्र (1365) मिते" इति च ग्रन्थरचनाकालं निर्दिशति। अयं च परमेश्वरः पञ्चपञ्चाशत् वर्षाणि यावत् अहोरात्रं विचिन्त्य बहुभिरनुसन्धानैः प्रमाणीकृत्य नवीनं दृग्गणितसिद्धान्तं आविश्चकार, तथा चायं ग्रन्थः 1431 क्रिस्ताब्दे समाप्तिमयासीदिति च महाभास्करीयभाष्ये स्वयं परमेश्वरः निगदति।

एतैः प्रमाणैः परमेश्वरः 1365-1460 क्रिस्ताब्दे न्वयसदिति निश्चिन्वन्ति इतिहासज्ञाः।

**व्याख्याकर्तुः परमेश्वरस्य अन्याः कृतयः**

असौ परमेश्वरः बहून् स्वतन्त्रग्रन्थान् तथा च व्याख्यानग्रन्थान् च लिखितवानस्ति। सिद्धान्तफलितद्वयेऽपि अस्य योगदानं महत्वं विद्यते।

परमेश्वरस्य स्वतन्त्रकृतयः -

1. आचारसङ्ग्रहः
2. गोलदीपिका
3. ग्रहानयनयदीपिका
4. ग्रहणमण्डनम्
5. ग्रहणाष्टकम्
6. चन्द्रच्छायागणितम्
7. जातकपद्धतिः
8. दृग्गणितम्
9. वाक्यकरणम्
10. विवाहानुकूल्यम्
11. सद्वर्गफलम्

परमेश्वरस्य व्याख्यानग्रन्थाः -

| **व्याख्यानस्य नाम** | **मूलग्रन्थः** | **लेखकः** |
|---|---|---|
| भाटदीपिका | आर्यभटीयम् | आर्यभटः |
| विवृत्तिः | गोलदीपिका | परमेश्वरः |
| विवृत्तिः | जातककर्मपद्धतिः | श्रीपतिः |
| पारमेश्वरी | प्रश्नषट्पञ्चाषिका | पृथुयशाः |
| कर्मदीपिका | महाभास्करीयम् | भास्करः I |
| सिद्धान्तदीपिका | महाभास्करीयभाष्यम् | गोविन्दस्वामी |
| मुहूर्तरत्नं सव्याख्यानम् | मुहूर्तरत्नम् | गोविन्दभट्टतिरिः |

| | | |
|---|---|---|
| विवरणम् | लीलावती | भास्करः |
| विवरणम् | व्यतीपाताष्टकम् | अज्ञातः |
| विवरणम् | सूर्यसिद्धान्तः | अज्ञातः |
| दीपिका | मुहूर्ताष्टकम् | अज्ञातः |
| पारमेश्वरम् | लघुमानसम् | मुञ्जालः |

एतदतिरिच्य "मुहूर्तदीपिका" इत्यस्य व्याख्यानमपि परमेश्वरोऽसौ रचयामासेति महाभास्करीय भाष्यस्य व्याख्यानावसरे तेनैव सूचितं विद्यते।

## व्याख्याकर्तुर्वैदुष्यम्

परमेश्वरस्य वैदुष्यं तेन विरचितग्रन्थानां संख्याविशेषादेव स्पष्टं प्रतिभाति। परमेश्वरोऽसौ त्रिस्कन्धे ज्यौतिषे आमूलमध्ययनं कृतवान् अपि च अन्यशास्त्रेष्वपि प्राप्तानुभवः आसीत्। गणितशास्त्रे अस्य असाधारणं पाण्डित्यमासीत्। तस्यैव उक्त्यनुसारेणायं पञ्चपञ्चाशत् वर्षाणि यावत् सततपरिश्रमेणानुसन्धानैः प्रमाणीकृत्य नवीनं दृग्गणितसिद्धान्तंमाविष्कृतवानिति अवगम्यते। आर्यभटभास्कराचार्यादीनां सिद्धान्तग्रन्थानां व्याख्यानं लिखितवान्। गोलदीपिकेति खगोलविषयकग्रन्थरचनेन परमेश्वरस्य गोलज्ञानं स्फुटं प्रकाशते।

आचारसङ्ग्रहाख्यफलितज्यौतिषसम्बन्धीग्रन्थश्चानेन व्यरचि। प्रकृतमुहूर्तरत्नस्य व्याख्यानावसरे वसिष्ठ; गर्ग; पराशर; नारदः इत्यादिपूर्वसूरिणां वचनानि क्वचित् उद्धृत्य व्याख्याने स्वपाण्डित्यं सुष्ठु निरूपितं विद्यते। अपेक्षितस्थलेषु मुहूर्तरत्नस्य व्याख्यानावसरे विस्तृतव्याख्यया ग्रन्थकर्तुः हृद्गतांशः प्रकाशितः दृश्यते अनेन परमेश्वरेण।

## सव्याख्यानस्य मुहूर्तरत्नस्य वैशिष्ट्यम्

प्रस्तुतग्रन्थः इतरमुहूर्तग्रन्थानामपेक्षया किञ्चिद्वैशिष्ट्यं भजते। यद्यपि ग्रन्थोऽसौ मुहूर्तविषयकस्तथापि स्कन्धत्रयस्यापि बहुविचाराः ग्रन्थेऽस्मिन् तत्र तत्र विमृष्टाः दृश्यन्ते। स्पष्टावबोधनार्थं होरा-सिद्धान्त-संहिताविषयक विचाराणामपेक्षितस्थलेषु विवरणमुपलभ्यते।

प्रथमाध्याये 148 तमश्लोकमारभ्य 153 तमश्लोकपर्यन्तं लग्नादिषड्वर्गाणां निरूपणं, मेषादीनामधिपाश्चोक्ताः । द्वितीयाध्याये 839 तमश्लोकमारभ्य 846 तमश्लोकपर्यन्तं ग्रहाणां परस्परदृष्टिविचारः, मूलत्रिकोणराशयः, ग्रहाणां कालबलं, दिग्बलविचारः, 847 तमश्लोकमारभ्य 855 तमश्लोकपर्यन्तंमष्टकवर्गविचारः इत्यादिहोरास्कन्धगतविषयस्य प्रस्तावः दृश्यते।

प्रथमाध्याये 131 तमश्लोकात् 138 तमश्लोकपर्यन्तं संसर्पाहस्पत्यधिमासादीनां लक्षणं, अहर्गणेनाधिमासानयनक्रमः, तत्र मतभेदश्च मूले व्याख्याने च सम्यगुपवर्णितः विद्यते । "पलाङ्गुलहते"ति 64 तमश्लोके पलभाज्ञानेन दिनमानानयनक्रमः, तृतीयाध्याये जनो दिनज्ञ इति 319 तमश्लोकात् 321 तमश्लोकपर्यन्तंमश्विन्यादीनां उदयवाक्यानि, मुहूर्तकालपरिज्ञानाय तत्कालछायाङ्गुलानयनक्रमः, पलभाज्ञानाय 330 तमश्लोके अन्यप्रकारश्च निर्दिष्टो विद्यते। एवं सिद्धान्तप्रकियापि केषुचित् स्थलेषु प्रदर्शिता दृश्यते।

द्रव्याणां सुलभत्वज्ञानाय फलकुसुमादीनां उत्पत्तिविशेषात् न्यूनाधिक्यबोधकविचारः तृतीयाध्याये विवृतो विद्यते । चतुर्थाध्याये भूमिष्ठजलविषयचिन्ता, चन्द्रगुप्तिचक्रेण भूगतजलचिन्ता, चतुर्थाध्याये पुरुषस्त्रीलक्षणमित्यादिसंहितागतविषयोऽपि मुहूर्तरत्नेऽस्मिन् उपलभ्यते।

प्रथमाध्याये स्थूण-कण्डक-कण्डकस्थूणेत्यादिनक्षत्राणां संज्ञाविशेषः, विवाहे कृष्णपक्षाष्ट्याः स्वीकारः इत्यादिविषया अस्मिन्नेव ग्रन्थे दृश्यन्ते । विवाहानुकूल्यविषये ग्रन्थेऽस्मिन् विंशतिकूटानि निर्दिष्टानि सन्ति । सामान्यतः अन्यमुहूर्तग्रन्थेषु अष्टानां कूटानामेव कथनं निर्दिश्यते । अश्विन्यादिनक्षत्राणां लिङ्गपक्षिनाडीत्यादिविषयः ग्रन्थेऽस्मिन् विस्तरेणोक्तः ।

द्वितीयाध्याये -

लग्नाद्विधुर्विधोः शुक्रः शुक्रादुपचये गुरुः ।
महाबलास्त्रयो योगा एको वापि समुच्चयात् ॥ 251 ॥

एवं पूर्णकुम्भयोगः -

रोहिण्यामुदये शशाङ्कतनये लग्नाम्बरे वा गुरौ
पापेष्वात्मजमृत्युहानिरहिते पूर्णाख्ययुक्ते विधौ।
योगोऽयं किल पूर्णकुम्भगदितस्तस्मिन् गृहं स्थापितं
आयुः श्रीधनपुत्रदारसहितं पूर्णं सहस्राब्दकम् ॥ 410 ॥

पूर्वोक्तविशिष्टशुभयोगा अन्यत्र मुहूर्तग्रन्थेषु नोपलभ्यन्ते। विविधकर्मणां मुहूर्तकथनावसरे अन्येषां मतभेदोऽपि कुत्रचित् प्रदर्शितो विद्यतेऽस्मिन् ग्रन्थे। अत्र तु संक्षेपेणै व ग्रन्थस्यास्य वैशिष्ट्यं समुपस्थापितं विद्यते।

**प्रकृतग्रन्थे प्रस्तुतविषयः**

प्रकृतमुहूर्तरत्नग्रन्थोऽयं चतुर्भिरध्यायैः विभक्तो विद्यते। प्रत्येकस्याध्यायस्य परिचयोऽत्र किञ्चित्प्रस्तूयते

**प्रथमाध्यायोक्तविचाराः**

अध्यायस्यारम्भे दोषविशेषाणां विवरणमुपलभ्यते। वैधृत-लाट-सूर्यचन्द्रग्रहणं, नक्षत्रतिथिगण्डान्तं-अश्विन्यादिषु नक्षत्रेषु त्याज्यघटीः-वसन्तादिऋतवः-नक्षत्रतिथिवशात् मृत्युयोगाः, तिथिवारयोर्योगवशात् दग्धयोगाः-हुताशन-वज्रयोयाः इत्यादिदुष्टयोगाः उच्यन्ते। गुरुसौम्यादीनां दृष्टिवशात् पूर्वोक्तयोगानां शमनं-चन्द्रस्य शुभत्वं-सिंहादिकरणानि-विष्ट्युदयकालः-गुलिकोदयकालः-पलाशादिविष्टिवृक्षाः-पलभाज्ञानेन दिनमानानयनक्रमः सूर्यस्थितनक्षत्रवशात् उल्का-,कम्प-ब्रह्मदण्डध्वजादिचतुर्दोषास्तेषां फलं-धूमव्यतीपातपरिवेषेन्द्रदण्डकेत्वादिदोषाः-एकार्गलदोषः-तत्परिज्ञानाय खार्जूरिकाचक्रस्य रचनाक्रमः-व्याघातादीनामन्ते वर्ज्याः नाडिकाः-चन्द्रस्य षड्विधं दुष्टत्वं,-नक्षत्राणां अन्ध-काण इत्यादिसंज्ञाश्च उक्ताः।

अर्कस्थितनक्षत्रवशात् स्थूण-कण्डक-कण्डकस्थूण-संज्ञितनक्षत्राणि-अर्धप्रहारघटिकाः-ग्रहणभस्य वर्ज्यत्वं ग्रहणात् निर्दिष्टकालानन्तरं पुनः योग्यत्वं-गुरुशुक्रयोः बाल्यवृद्धत्वं-तत्रमतभेदश्च-संसर्पांहस्पत्यधिमासलक्षणं,

अधिमासानयनक्रमः, तत्र मतभेदः - तिथीनां नन्दादिसंज्ञाः, तेषां प्रत्येककार्येषु शुभाशुभत्वं-द्रेक्काणादिषड्वर्गाः, तेषामधिपाः-केतुनिर्णयः-प्रत्येकग्रहाणां निर्दिष्टकार्येषु शुभत्वं दम्पत्योः सप्तमशुद्धिविचारः इत्यादिविषयः प्रस्तूयते।

पुनश्च दोषाणामपवादाः, नक्षत्रवारयोगेन मैत्री-मङ्गल-शिशु-तरुणक-स्थविरकादियोगाः, नरयोगः-अहियोगः इत्यादिशुभाशुभयोगाश्च कथ्यन्ते। वारमासवर्षाधिपाः-चन्द्रेच्छाचन्द्रवेलयोरानयनक्रमः-षट्त्रिंशत्वेलाफलानि-चन्द्रस्य चरितादि द्वादशावस्थास्तेषां च फलं इत्यादिविचाराश्च प्रथमाध्याये सम्यगुपवर्णितः विद्यते।

अध्यायोऽयं दोषतदपवादगुणविषयः इति नामविशिष्टः विद्यते।

**द्वितीयाध्यायस्य परिचयः**

कन्यायाः प्रथमार्तवकालविशेषात् शुभाशुभफलं, विवाहे कन्यावरयोः कूटानुकूल्यं, विंशतिकूट भेदाः तथा च तेषां विवरणमस्मिन् द्वितीयाध्याये उपलभ्यते। विवाहप्रश्नः तत्र वधूवरयोः शुभाशुभफलं-द्वादश शुभयोगाः विवाहकर्मणि संस्कारविशेषाणां शुभाशुभकालः उच्यते। उपसंवेशनविधिः-निषेकविधिः-पुंसवनविधिः-सीमन्तविधिः-विष्णुबलिः-सूतिकागृहविधिः, जातकर्म इत्यादीनां करणे शुभमुहूर्ताश्च उच्यन्तेऽस्मिन् द्वितीयाध्याये।

एवं च पञ्चमारिष्टं, तत्फलं, नामकरणविधौ मुहूर्ताः, मेषादिराशीनामक्षराणि-घातकाक्षरणि-घातक पोषकसेवकादिगणाः-कर्णवेधविधिः-उपनिष्क्रामणविधिः दुग्धपानविधिः-अन्नप्राशनविधिः-चौलविधिः-तैलाभ्यंगदन्तधावने मुहूर्तः-उपनयनविधिः तत्र च गुरुबलं, उपनयने विहितनक्षत्राणि-उपनयने अत्यन्तशुभाः दशयोगाः उपाकरणविधिः-विद्याग्रहणं-शस्त्रबन्धविधिः-गृहनिर्माणविधिः-गृहनिर्माणे पूर्णकुम्भनामकशुभयोगः-गृहस्य छादने शुभकालः, गृहप्रवेशे वर्ज्यनक्षत्रतिथिवाराः प्रतिष्ठाविधिः-यात्राप्रकरणं-यात्रायां नक्षत्रदोषनिवृत्यर्थं भक्ष्यविशेषः-यात्रयां शुभाशुभशकुनानि-यात्राया द्विचत्वारिंशत् शुभयोगाः-राज्याभिषेकविधिः-वश्यविधिः-द्वेषयोगाः

शत्रोरुच्चाटनविधिः-चतुष्पाद्विधिः०गजवाजिशालानिर्माणे शुभयोगाः-वस्त्रविधिः-वैद्यविधिः-औषधसेवने शुभाशुभवारतिथिनक्षत्राणि-श्राद्धोपवासविधिः-प्राह्व-पूर्वाह्न मध्याह्न-अपराह्न-सायाह्न-इति पञ्चदिनभेदाः-अनध्यायविधिः-भूमिप्रवेशविधिः-कृषिविधिः-हलकर्षणे मुहूर्तः बीजवापनविधिः-बीजवापने सप्तशुभयोगाः-धान्यसङ्ग्रहविधिः-धान्यानां व्यये शुभवारतिथिनक्षत्राणि। ख्यादीनां रश्मिसंख्याः-क्रयविक्रयविधिः-कूपखनने योग्यनक्षत्राणि, वाराश्च-कुष्ठादिरोगाणामौषधं-रोगमुक्तस्य स्नानकालः-नेत्राञ्ज्यविधिः-योग्यनक्षत्राणि, तिथिवाराः शूलचक्रं, तेन च रोगशमतमरणादिज्ञानं-मातृपूजाविधिः पवित्रारोहणविधिः-आभिचारकविधिः-रिपुनाशनार्थं मृदुग्रहयोगः, तत्र च 22 शुभयोगाः-शत्रोर्वशीकरणं-वारनक्षत्रादि अष्टाङ्गबलं-करणदेवताः-तिथिदेवताः-अश्विन्यादिनक्षत्राणां देवताः-नक्षत्राणां चरादिसंज्ञाः-मेषादिराशीनां देवताः-नक्षत्रतिथिवारकरणराश्यादिषु विहितकार्याणि ख्यादिग्रहाणां परस्परदृष्टिविचारः-शत्रुमित्रविचार-मूलत्रिकोणराशयः-अष्टकवर्गः-ग्रहाणां वेधस्थानानि-ग्रहदोषनिवृत्यर्थं धार्यद्रव्याणि-ग्रहशान्तिहोमविधौ समिधः, दक्षिणा, मन्त्रादयः-

एते विचाराः ग्रहशान्तिकर्मपर्यन्तावधिकनामक द्वितीयाध्याये विवृताः सन्ति।

**तृतीयाध्यायस्य परिचयः**

तृतीयाध्याये प्रथमतया एकराशौ एकांशकगतयोर्द्वयोर्ग्रहयोरुदयकाले फलं, भौमादीनामंशकगतसूर्यादीनां फलं च आदिश्यते। पुनश्च पातालयोगाः-पार्वतयोगाः-प्रत्येकवारे तल्लग्ने च क्रियमाणानि कार्याणि भोदयफलं-प्रत्येकनक्षत्रे तल्लग्ने च क्रियायोग्यं कर्म-आनन्दयोगः-सुधायोगः-अश्विन्यादिनक्षत्राणां पक्षीलिङ्गयोनिवर्णानि-नक्षत्राणां तिथिमासशून्यत्वं-इत्यादि विचारा उपवर्ण्यन्ते।

तथा च यत्र विषुवच्छाया द्व्यङ्गुलमिता भवति तत्र श्रवणादिषु नक्षत्रेषु खमध्यं गतेषु तेषां उदयवाक्यानि, मुहूर्तकालपरिज्ञानाय तत्कालच्छायाङ्गुलानयनप्रकारः-अश्विन्यादीनामुयवाक्यानि-दिवारात्रौ च पञ्चदशमुहूर्तास्तेषां नामानि-वारवशाद्वर्जनीया मुहूर्ताः-पौराणिकैरुक्तमुहूर्ताः-

वनस्पतीनां विलोकनेन द्रव्याणां वृद्धिन्यूनत्वं-इत्यादिविचारास्तृतीये प्रकीर्णाध्याये विमृश्यन्ते।

**चतुर्थाध्यायस्य परिचयः**

चतुर्थाध्यायस्य आदौ विविधवर्षणयोगाः उच्यन्ते। सूर्यादिग्रहाणां राशिषु स्थितिवशात् वृष्टेः सम्भवः-अतिवृष्टिरनावृष्टियोगाः-कुजादीनां ग्रहाणां परस्परसमागमेन शुभाशुभफलविचारः-प्रतिसूर्यलक्षणं अश्विन्यादिनक्षत्रेषु किंस्तुघ्नादिकरणेषु स्थितसूर्यवशात् अवृष्टिः, महावर्षणादिफलं-प्रश्नलग्नवशात् वृष्टिसम्भवज्ञानं-भूमिष्ठजलविषयचिन्ता-जलज्ञाने नानायोगाः भूमौ तृणवृक्षवल्मीकादीनां स्थितिवशात् जलज्ञानं प्रष्टुरभिमते क्षेत्रे सामान्यतो जलमस्तीति ज्ञाते सति तस्मिन् क्षेत्रे जलस्थितस्थानस्य ज्ञानाय चन्द्रगुप्तिचक्ररचनाक्रमः-मध्याह्नादिकालभेदेन दिगनुगुणं चन्द्रगुप्तिचक्रस्य रचनाप्रकारस्तथा तत्र मत भेदश्च उच्यते।

प्रष्टुस्पृष्टाङ्गवशात् भूमिष्ठजलचिन्ता-पुराणकूपज्ञानं-वास्तुलक्षणं-वासयोग्यस्थलकथनं-स्थलदोषे तत्परिहाराय शान्तिः-वास्तुपुरुषलक्षणं वास्तुविन्यासः-प्रत्येकखण्डेषु गृहनिर्माणेन शुभाशुभफलं-ध्वजादि अष्टायाः-दिग्वशात् ध्वजादीनां श्रेष्ठत्वं-इत्यादि विचाराः अध्यायेऽस्मिन् कथ्यन्ते।

एवं च पुरुषलक्षणं-क्रमेण शरीरस्य जङ्घादि अवयवलक्षणं-वर्ज्यानि स्त्रीलक्षणानि-स्त्रीप्रशंसा एतेऽपि विचाराः निर्दिष्टाः सन्ति चतुर्थाध्याये।

# मातृकाविवरणम्

ग्रन्थोऽयं तिसृभिर्मातृकाभिः सम्बद्धो विद्यते तिरुवनन्तपुरस्थप्राच्यहस्तलिखितपुस्तकालयात् (The Curators Office Library Trivandrum) सम्पादिते द्वे मातृके No.131 T संज्ञयाङ्किता तथा 144A, 144B. $T_1$ संज्ञयाङ्किता च। तृतीया च मद्रपुरीस्थप्राच्यहस्तलिखितग्रन्थालयात् (Government Office Library Madras) आनीता No.3295 M संज्ञयाङ्किता।

T मातृकामूलमातृकात्वेन स्वीकृता।

$T_1$ मातृकायां बह्वशुद्धिः दृश्यते। पाठभेदेषु वैशिष्ट्यं नास्ति।

M मातृका इतरमातृकापेक्षया किञ्चिद्वैशिष्ट्यपूर्णा विद्यते।

तस्या मातृकाया वैलक्षण्यमिह दिङ्मात्रेण प्रदर्श्यते । मातृकायामस्यां अन्यमातृकोक्तविषयः कुत्रचित् शब्दान्तरेण लिखितो दृश्यते । लिपिकारः लेखनसमने अन्यग्रन्थोक्तश्लोकं स्मरन् एतादृशपरिवर्तनं भ्रांत्या कृतवान् स्यात्। एतेनासौ लिपिकारोऽपि धीमानासीदिति स्पष्टमेव । कानिचिदुदाहरणानि अत्र प्रस्तूयन्ते।

उदाहरणप्रदर्शिनी -

| T पाठः | M पाठः | पाठभेद संख्या | पृष्ठ संख्या |
|---|---|---|---|
| आपत्कल्पविधानार्था | आपद्विधिरयं प्रोक्तः | 1 | 95 |
| अजेन्द्वार्यार्कमैत्रेषु वैष्णवे च मुनीरितम् | अजेन्द्वार्यार्कमित्रर्क्ष-हरिभेषु विधीयते | 3 | 100 |
| हस्तपञ्चमिसंयोगे | हस्ते तु पञ्चमीयुक्ते | 1 | 110 |
| घटीगीरतिसूक्ष्मस्य | घटीशब्दस्तु सूक्ष्मस्य | 4 | 144 |
| यन्निगदितं | यत्कथितं | 2 | 213 |

एतादृशोदाहरणानि बहून्युपलभ्यन्ते।

## मूलमातृकानिर्णयः

तिरुवनन्तपुरस्थग्रन्थालयादानीता T चिह्निता मातृका मूलमातृकात्वेन स्वीकृता।

1. दोषाणां न्यूनत्वमस्यां संदृश्यते।
2. मातृकायां वर्तमानलिपिवैशिष्ट्येनात्र लिखिताक्षराणि प्राक्तनमलयाळ-भाषाक्षराणि इति स्पष्टं भवति।
3. ताडपत्रेषु वर्तते मातृकेयम्

पूर्वोक्तैरेतैः कारणैः T मातृका उपलब्धासु मातृकासु मूलमातृका भवेदिति निश्चयः कृतः।

## मातृकाणां स्वरूपम्

T मातृका

The Curators Office Library, Trivandrum.
मुहूर्तरत्नं सव्याख्यानम् C.O.L. No.131.

Substance : Palm leaf Size 16 ½" x 2" Pages 155 8 lines per page.

Script : Malayalam. Complete. Subject - Astrology [55 letters per line].

Beginning :

श्रीमहागणपतये नमः। अविघ्नमस्तु।
अरुणस्वर्णसङ्काशं लसद्बालेन्दु भूषणम्।
अर्धनारीश्वरं ज्ञाननिधिं वन्दे कृपालयम्॥
गोविन्दपूज्यपादेन कृपासंसिक्तचेतसा।
मुहूर्तागमदुग्धाब्धेर्मुहूर्तमणिरुद्धृतः॥
तस्मिंस्तच्छिष्यपौत्रेण कियांश्चित्परमादिना।
भागो विव्रियते स्वल्पमीश्वरेण यथाश्रुतम्॥

End :

रविचन्द्रादितिमिङ्गिललोल-
ज्योतिषदुग्धमहाम्बुधिमध्यात् ।
गोविन्देन मुहूर्तमणिरुद्धृत
एष तु लोकहिताय ॥

अमावास्या तु सौम्येन आदित्ये सप्तमी सह ।
चतुर्थ्यङ्गारकश्चैव अक्षयं च दिनत्रयम् ॥

श्रीकृष्णाय नमः ॥ शुभमस्तु ॥

Colophone : इति मुहूर्तरत्नं समाप्तम् ।

Author - Govindapujyapada

Com : Parameshwara.

Remarks : The last portion of the text discloses that the work is also known as "Muhurthamani". The commentator was the grandson of the Author's desciple.

$T_1$ मातृका मुहूर्तरत्नम् (सव्याख्यानम्)

No.750 A. C.O.L.No.144 ( A and B )

Substance : Paper. Size : 13 ½" x 8 ½". Pages 379. 17 lines per page and 16 letters per line.

Script : Devanagari. No. of Granthas 3250. Complete.

Owner C.O. Subject : Astrology.

Beginning :

यत्स्वातन्त्र्यकलाकालश्चिल्लवो ज्योतिषां गणः ।
चन्द्रभूषमदः पूर्णचिदानन्दमहः श्रये ॥
सुवर्णचूतप्रमुखैः ज्योतिःशास्त्राब्धिचुम्बिभिः ।
गोपितापि मुहूर्तोक्तिर्दिङ्मात्रेणेह दृश्यते ।

लाटवैधृतसूर्येन्दुग्रहसंध्याचतुष्टयम् ।
निर्घाताशनि भूकम्पकेतूल्कानष्टचन्द्रता ॥

End :

अथोपसंहरति -
रविचन्द्रादितिमिङ्गिललोलज्योतिषदुग्धमहाम्बुधिमध्यात् ।
गोविन्देन मुहूर्तमणिरुद्धृत एष तु लोकहिताय ॥

इति गोविन्दशिष्यपौत्रेण परमेश्वरेण कृते मुहूर्तरत्नव्याख्याने चतुर्थोऽध्यायः ।

शुभमस्तु ॥

Author : Govindapujyapada

Com : Parameshwara.

Remarks : The last portion in the text discloses that the Commentator was the grandson of the Author's desciple.

M मातृका

The Government Oriental Manuscript Library Madras.

G.O.M.L.No.3295.

मुहूर्तरत्नम्

Substance : Paper : Size 12" x 9" Pages 200. 20 lines per page and 16 letters per line.

Script : Devanagari.Complete.

Subject : Astrology.

Author : Govindapujyapada.

# ग्रन्थेऽस्मिन् प्रयुक्तानां सङ्केतानां विवरणम्

ग्रन्थेऽस्मिन् सौकर्यार्थं शोधकर्त्रा केचन सङ्केताः प्रयुक्ता विद्यन्ते। सङ्केतानामेषां विवरणं अधो निर्दिश्यते।

T = O.R.I. Trivandrum No.131. मातृका

$T_1$ = O.R.I Trivandrum No.144. (A;B) मातृका

M = G.O.M.L. Madras No.3295 मातृका

[ ] = 1. यत्र च यद्यपि व्याख्याने मूले चाधारः नास्ति, तथापि प्रकरणानुरोधेन शोधकर्त्रा एव सोधनं कृतं तत्र शोधितांशः पूर्वनिर्दिष्टकंसे प्रदर्शितः।

2. ग्रन्थेऽविद्यमनांशः क्वचित् छन्दोरक्षणार्थं योजितः पूर्वोद्धृतकंसे प्रदर्शितः।

( )= 1. पकारवकारयोः मिथः परिवर्तनं मातृकासु बहुत्र दृश्यते। तादृशस्थलेषु पूर्वनिर्दिष्टः कंसः रचितः

2. प्रकरणानुरोधेन वर्णे एव किञ्चिदपेक्षितपरिवर्तनं च यत्र कृतं तत्रापि शोधितांशः पूर्वसूचितकंसे योजितः।

द्र.व्या. =यत्र मूले व्याख्यानानुसारेण शोधितं तत्र सङ्केतोऽयं प्रयुक्तः।

द्र.मू. = व्याख्याने मूलानुरोधेन शोधितस्थलेषु अयं सङ्केतः प्रयुक्तः।

ग्रन्थस्यास्य सम्पादनापसरे अपेक्षितस्थलेषु यथामति परिवर्तनं संसूचनं वा कृतम्। कुत्रचित् प्रमादवशात् अनभिज्ञेन मया दोषः कृतः स्यात्। शोधितांशाः संख्याङ्किताः, मातृकायां विद्यमानांशाः यथावत् Foot Notes मध्ये प्रदर्शिताः। पूर्वनिर्दिष्टसङ्केतानां नियमाः शोधप्रबन्धस्य आदित अन्तपर्यन्तं परिपालिताः। यदि क्वचित् स्खलनं स्यात् गुणैकपक्षपातिभिः सहृदयैः जनोऽयं क्षन्तव्यः।

# कृतज्ञतानिवेदनम्

ग्रन्थस्यास्य सम्पादनकर्मणि समुचितमार्गदर्शनं कृतवद्भ्यः साहित्य-ज्योतिःशास्त्रनिष्णातेभ्यः विद्वत्तल्लजेभ्यः मद्गुरुचरणेभ्यः *डा. एम.ए. भट्टमहोदयेभ्यः* सर्वप्रथमं साञ्जलिभरं हार्दिकीं कृतज्ञतामावेदयामि ।

ग्रन्थस्यास्य मातृकाः परिशीलयितुमवकाशं प्रदत्तवतां तिरुवनन्तपुरस्थ-प्राच्यहस्तलिखितग्रन्थालयाधिकारिणां तथा मद्रपुरीस्थसर्वकारीयप्राच्य-हस्तलिखितग्रन्थालयाधिकारिणां च धन्यवादान् निवेदयामि ।

मातृकातोलने विशिष्य मलयाळलिपिमातृकावाचनकर्मणि उपकृतवद्भ्यः कीर्तिशेषेभ्यः विद्वद्धौरेयेभ्यः *डा. बालसुब्रह्मण्यमहोदयेभ्यः* तथा सुहृदे श्रीमते गीतानाथन्महोदयाय च कार्तज्ञं ज्ञापयामि ।

ग्रन्थस्यास्य प्रकाशनाय प्रेरकाः सन्ति तिरुपतिस्थराष्ट्रियसंस्कृत-विद्यापीठस्य कुलपतिचरास्तथा श्रीवेंकटेश्वरवैदिकविज्ञानसंस्थायाः प्रधाननिदेशकाः सुधीशेखराः श्रीमन्तः *प्रो. एस्.बि. रघुनाथाचार्यवर्याः* तेभ्यश्च स्वीयमाधमर्ण्यं प्रकाशयामि ।

ग्रन्थस्यास्य शुभाशंसनं विलिख्य मामनुगृहीतवद्भ्यः न्यायवेदान्तादिशास्त्रनिष्णातेभ्यः तिरुपतिस्थराष्ट्रियसंस्कृतविद्यापीठस्य कुतिपतिपदमधितिष्ठद्भ्यः श्रीमद्भ्यः *प्रो. डि. प्रह्लादाचार्यवर्येभ्यः* सश्रद्धं कार्तज्ञं निवेदयामि ।

ग्रन्थप्रकाशनकर्मणि अनभिज्ञं मां प्रसङ्गोचितसूचनादिपुरःसरं प्रोत्साहितवद्भ्यः *प्रो. एल्.एन. भट्टमहोदयेभ्यः* तथा *प्रो. एम्.एल्.एन्. मूर्तिमहोदयेभ्यश्च* धन्यवादान् वितनोमि।

ग्रन्थस्यास्य प्रकाशनार्थं धनसहायं कृतवद्भ्यः तिरुमलतिरुपतिदेवस्थान-कार्यनिर्वहणाधिकारिभ्यः कार्तज्ञं प्रकटयामि।

सन्दर्भेऽस्मिन् ज्योतिःशास्त्रविद्याप्रदातॄन् मद्गुरुचरणान् प्रो.एच्.सुब्रायभट्टपादान्, *प्रो. श्रीनिवास अडिगमहोदयांश्च* सभक्तिश्रद्धं स्मरामि।

ग्रन्थस्यास्य मुद्रणकार्यं सम्यङ् निरूढवत्यै **अन्नपूर्णा ग्राफिक्स्** अधिकृतायै *श्रीमत्यै जे. राजेश्वरीमहोदयायै* कार्तज्ञं निवेदयामि।

विद्वद्विधेयः

**ए. श्रीपादभट्टः**

# विषयसूची

## (प्रथमोऽध्यायः)



## (द्वितीयोऽध्यायः)

# मुहूर्तरत्नम्

यत्स्वातन्त्र्यकलाकालश्चिल्लवो ज्योतिषां गणः ।
चन्द्रभूषमदः पूर्णचिदानन्दमहः **श्रये** ॥ 1

सुवर्णचूतप्रमुखैः ज्योतिःशास्त्राब्धि [1] चुम्बिभिः ।
गोपितापि मुहूर्तोक्तिर्दिङ्मात्रेणेह दृश्यते ॥ 2

---

[2]श्रीगणपतये नमः । अविघ्नमस्तु ।
अरुणस्वर्णसङ्काशं लसद्बालेन्दुभूषणम् ।
अर्धनारीश्वरं ज्ञाननिधिं वन्दे कृपालयम् ॥
गोविन्दपूज्यपादेन कृपासंसिक्तचेतसा ।
मुहूर्तागमदुग्धाब्धेर्मुहूर्तमणिरुद्धृतः ॥
तस्मिंस्तच्छिष्यपौत्रेण (कि)[3]यांश्चित् परमादिना ।
भागो [4]विव्रियते स्वल्पमीश्वरेण यथाश्रुतम् ॥

**यत्स्वातन्त्र्येति** । चिल्लवो ज्ञानकला: । यस्येति शेषम् । [A]उ
स्वेन्द्रियेण प्रत्यक्षीकृतत्वात् । श्रये सेवां करोमि । इह कालग्रहात्मकस्
स्तवनसामर्थ्यात् कालग्रहाश्रितं ज्योतिःशास्त्रमभिधीयत इति प्रदर्शितं
[5]**सुवर्णचूतः** इति । इह वक्ष्यमाणे प्रबन्धे । मुहूर्तोक्तिर्मुहूर्तागमपाठः । ।
असमस्ततया सारभूतेति यावत् । दृश्यते प्रदर्श्यते । या च [6]सुवर्णचूतादिभिः
संवृता, मुहूर्तोक्तिः सर्वसिद्धिसंज्ञिता, सापि दिङ्मात्रेण [7]प्रदर्श्यते इति स
सुवर्णचूत इति स्वग्रामजो द्विजवर उच्यते । पूर्वं केनचित् द्विजमुख्येन सर्वसि
मुहूर्तशास्त्रं कृतम् । तत् कैश्चिदनङ्गीकृतमभवत् । ततस्तद्द्विजवरहित

---

1. $T_1$ चुञ्चुभिः
2. $T_1$ इयं पङ्क्तिर्मातृकायां नास्ति ।
3. T क्रियांश्चित्
4. $T_1$ भागे
5. $T_1$ सुवर्ण**सूच इति** द्र.मू.
7. $T_1$ सुवर्ण**सूचादिभिसे**वित
8. $T_1$ व्रदश्यते

---

A. अत्र 'अद' इति भवेद्वा ।

## अथ मुहूर्तदोषाः ।।

लाटवैधृतसूर्येन्दुग्रहसन्ध्याचतुष्टयम् ।
निर्घाताशनिभूकम्प[1]केतूल्कानष्ट[2]चन्द्रता ।। 3 ।।

शिवादिक्रोशनं [3]स्वा(न्त)दृष्ट्यनिष्टसमागमः ।
विश्वप्रदोषो रात्रिश्च शिखितोयसमीपता ।। 4 ।।

शिखिदिक्चापि गण्डान्तो दैवज्ञस्य [4]कमुण्डनम् ।
सुप्तिभुक्तिच्छेदभेदमुक्तकेशगदार्तता ।। 5 ।।

अशुद्धता श्रान्तता च [5]शिखोष्णा विषनाडिका ।
सङ्क्रान्तिमृत्युदग्धादि[6]योगा मन्दारयोर्दिनम् ।। 6 ।।

मध्याह्नतः परं जीवदिनं स्वस्य विपद्दिनम् ।
वधप्र [7] त्यरिभंरन्ध्रचन्द्र[8]भे हार्ददा[9]न(पौ) ।। 7 ।।

---

गोविन्दाचार्यः तत्सर्वसिद्धिपरिग्रहे यत्नं कृतवानिति च श्रूयते । मुहूर्तोक्तिर्दृश्यत इत्यनेनैतदपि द्योतितं, पूर्वाचार्यकृतेष्वागमेषु यथा पाठो दृश्यते तथैवात्र लिख्यते, न तु शब्दान्तरेण। तदर्थः कुत्रचिद्विवरणरूपेण विशेषश्च लिख्यते इति ।

अथ दोषानाह - [10]लाटेति । सूर्येन्दु(ग्रह)ग्रहणात् सूर्येन्दुग्रहणम् । निर्घातोद्घातरूपो महाशब्दवान् वायुः । केतुः धूमकेतुदर्शनम् । शिवादयः सृगालमहिषादयः । स्वान्तं मनः । विश्वप्रदोषश्च त्रयोदश्यामस्तमयसन्ध्या । कमुण्डनम् शिरसः क्षुरकर्म । सुप्त्यादयश्च दैवज्ञस्य । शिखोष्णा उष्णशिखाः । सङ्क्रान्तिः सूर्यसङ्क्रमः । दग्धादीत्यत्रादिशब्देन हुताशनमहानाशकरादिदुष्टयोगा उक्ताः । स्वस्य कर्मकर्तुः । रन्ध्रचन्द्रभे अष्टमचन्द्राष्टमराशी । हार्दोऽष्टाशीतिः । [11]दान(पो)ऽष्टाशतम् । जन्मचन्द्रांशात् अष्टाशीतितमाष्टोत्तरशततमौ चन्द्रांशावित्यर्थः ।

---

1. M पाठः । T केतूल्कां
2. M चन्द्रनष्टता
3. T स्वान्तवं । M ध्वान्तं द्र.व्या.
4. M क.... नाम्
5. M शिवोष्णा द्र.व्या.
6. M पाठः । T यौगेमन्दा
7. $T_1$ प्रत्यक्षं, M प्रत्यक्षरभं
8. $T_1$ चन्द्रसे
9. $T_1$ दानषौ
10. T लाभेति । द्र.मू.
11. T दानवोऽष्टाशतम्

**चन्द्रांशौ विष्टिगुलिकौ राहुकेत्वादिवीक्षणम् ।**
**एतेषामुद्गमश्चापि यदा तत्र न शोभनः ॥ 8 ॥**

**मुहूर्तगोऽपि चारोऽपि दूरे तद्वा शुभक्रिया ।**
**वेदेषुमुनिरन्ध्राख्याः [1]सार्पमूर्द्धैकमर्गलः ॥ 9 ॥**

**तिथ्यर्क्षनिम्नशून्यमन्धर्क्षं दिनरुन्मृती ।**
**[2]कण्टकस्थूणमर्धादिप्रहारं यम[3]कण्टकम् ॥ 10 ॥**

**सग्रहर्क्षं च षड्दोषो [4]गुरोर्मौढ्यादयोऽवमम् ।**
**दिनं [5]त्रि(स्पृ)क् ति[6]थिश्चापि रिक्ता पर्वाष्टमी तथा ॥ 11 ॥**

**ज्येष्ठाश्लेषाग्निमूलेशत्रिपूर्वयमपित्र्यभम् ।**
**शूर्पर्क्षं [7](पा)पवर्गाश्च तेषां केन्द्रत्रिकोणयोः ॥ 12 ॥**

**स्थितिरस्तगतः शुक्रः शत्रुमूर्तिगतः शशी ।**
**रिःफरन्ध्रगताः सर्वे जन्मभत्रितयं तथा ॥ 13 ॥**

---

एतेषामुद्गमः राहुकेत्वादीनां [8](पापा)नामुदयः । अत्र राहुकेत्वोः प्राथम्यप्रदर्शनात् उत्तरत्र तेषां केन्द्रत्रिकोणयोः स्थितिरिति पापानां केन्द्रत्रिकोणस्थितिनिषेधाच्च । कैश्चिदेवं [9 A] स्वर्यतेः - यस्मिन् ग्रहचारे राहुकेतू प्रधानौ स [10]चारोऽत्राङ्गीकृत इति । स चार्कगतिवशादीनांशवशाद्वा कल्प्यते ? मुहूर्तगोऽपीत्यस्मान्मौहूर्तविचारः ।

तद्वा शुभक्रिया तत्कालकृतशुभक्रि[11](या) । [12]अत्यन्तमशुभेत्यर्थः । वेदेषु-मुनिर[13](न्ध्रा)ख्याः चतुःसंख्या, पञ्चसंख्या, सप्तसंख्या नवसंख्याश्च । ये दोषाः ते । एकमर्गलं एकार्गलः। अर्धादिप्रहारं अर्धप्रहरम् । या तिथिरुदयद्वितयेऽपि न दृश्यते

---

1. $T_1$ सार्पमूर्धैतमर्गलः
2. T कण्डक
3. T यमकण्डकम्
4. T गुर्वो
5. T त्रिसृक्र द्र.व्या.
6. $T_1$ थिस्थापि for तिथिश्चापि
7. T वापवर्गाश्च
8. T वावानामुदयः
9. $T_1$ यतेः for स्वर्यतेः
10. $T_1$ चाराव्रवङ्गीकृत इति
11. T क्रियो
12. $T_1$ अत्यन्तभशुभेत्यर्थः
13. T रप्रख्याः for रन्ध्राख्याः द्र.मू.

---

A अत्र स्मर्यते इति स्याद्वा ।

पदाघातो [1]गन्धकालौ मृतिभावे खगस्थितिः ।
शुभक्रियासु सर्वासु निन्द्या न तु विचारणे ॥ 14 ॥

लाटवैधृतसूर्येन्दुग्रहसन्ध्या शिखोष्णिका ।
नाडी विषाह्वयेत्याद्या न भिद्यन्तेऽपवादतः ॥ 15 ॥

शुभवर्गे शुभैर्दृष्टो [2]नष्टेन्दुर्नातिदोष(दः)[3] ।
तिथिवृद्धिक्षयौ शुक्लकृष्णपक्षसमौ स्मृतौ ॥ 16 ॥

मित[4]सन्ध्यस्त्रयोदश्यामस्मरन्नात्मनो हितम् ।
अह्नोऽष्टांशेन संयुक्तं [5]रात्र्यर्धं मौनमाचरेत् ॥ 17 ॥

मघाभुजगसन्धौ तु द्वे द्वे ज्येष्ठासुरर्क्षयोः ।
तिस्रस्तिस्रः पौष्णदस्रसन्धौ [6]नाड्योऽब्धिसख्य(काः)[7]॥ 18 ॥

गण्डान्तः स्यात् कुलीरालिमीनभान्त्यांशकास्तथा ।
मेषसिंहशरासानामाद्यांशाश्च तदाह्वयाः ॥ 19 ॥

---

तस्यां तिथौ [8]दिन(म)वमदिनमुच्यते । या तिथिरुदयद्वितयेऽपि दृश्यते तद्दिनं त्रिस्पृगित्युच्यते ।

पदाघातो घ्नन्ति पदादिनामिति वक्ष्यमाणः । मृतिभावे खगस्थितिः यो ग्रहो यस्मिन् स्थाने मृतिप्रदो भवति, तस्य तत् स्थितिः । उक्ता वेदसंख्यादयो दोषाः शुभक्रियासु निन्द्याः न तु मुहूर्तविचारे । अथोक्तानां दोषाणां लक्षणमपवादश्च प्रदर्श्यते । तत्र लाटादीनामपवादाभावमाह - लाटेति । न भिद्यन्तेऽपवादतः अपवादो न विद्यते इत्यर्थः । आदिशब्देन [9]विष्टयुदयकालादयो गृहीता इति कल्प्यते । तत्कालभूरपि निजोदययामाबाह्याग्राह्या इत्यादिवचनात् ।

शुभवर्ग इति नष्टेन्दोरपवादः । तिथेः षष्टिनाडिकात आधिक्यं तिथिवृद्धिः ।

---

1. M गन्धकालेन
2. $T_1$ नेष्टेन्दु
3. T तः for दः
4. $T_1$ सन्ध्यस्त्ययोद
5. $T_1$ रत्रिर्धं
6. $T_1$ तथा M नास्योब्धि
7. T स्वाः for काः
8. T दिनमवदिनामु द्र.मू.
9. $T_1$ विष्युदय

पञ्चम्यन्ते दशम्यन्ते पर्वान्ते च क्रमादियम् ।
संख्या वेद्या गुहार्थेशवह्न्यादौ चापि दृश्यताम् ॥ 20 ॥

भौमारसौर्यांशशरार्णवेषु [1]घटीस्त्यजेदुष्णशिखाः क्रमेण ।
अंशार्धवस्विष्ववहिरन्ध्रपङ्क्तीः सर्वत्र [2]विद्याद्वसुवर्ज्यमन्त्यम् ॥ 21 ॥

मृगान्ते कलशादौ च व्यासङ्गेन प्रवर्तते ।
पङ्क्तिरर्णवनक्षत्रेष्विति केचिद्बुधा जगुः ॥ 22 ॥

अङ्गेनैव वियत्पयोनिलनटो [3]रागी नगन्नाखुना
दिव्यं राष्ट्रनरो भया[4]द्विटनटैर्वाद्यैर्नरो वीरनुत् ।

---

[5]तत ऊनत्वं क्षयः । अन्त्यांशका [6]अन्त्यनवां(शाः) । शरासो धनुः । [7]**तदाद्व(याः)** गण्डान्ताख्याः । गुहः षष्ठी । अर्थेश एकादाशी । वह्निः प्रतिपत् ।
**भौमा**रेत्यनेनोष्णशिखोच्यते । भौमांशो मेषांशः । आरांशो वृश्चिकांशः । सौर्यांशो मकरांशः । [8]मे(षां)शसहितेषु शरेषु पञ्चसु [A]दस्रदस्रारोहिणी पुनर्वस्वादिषु नक्षत्रेषु । मेषांशस्यान्ते सार्धाः सप्तनाडिकाः उष्णशिखासंज्ञिताः । तथा मेषांश-सहि[9](ते)ष्वर्णवेषु चतुर्षु । शूर्पादिषु नक्षत्रेषु मेषांशस्यादौ वसुसंख्याः अष्टौ नाड्यः । तथा मकरांशसहितेषु पञ्चसु कृत्तिकादिषु मकरांशस्यान्ते नवनाड्यः । ज्येष्ठादिषु चतुर्षु मकरांशस्यान्ते दशनाड्यः । वसुवर्ज्यमन्त्यमिति । सर्वत्रांशकेषु नाडिकामानंमन्त्य[10]मन्दगतं विद्यात् ? वसुनाडीमानं तु नवांशकादौ वेद्यम् । ज्येष्ठादिषु चतुर्षु नक्षत्रेषूक्ता पङ्क्तिसंख्या मृगान्ते कलशादौ च व्यासङ्गेन प्रवर्तते । द्वयोः सह वर्तते इति केचित् बुधा जगुः । मकरांशान्ते पञ्चनाड्यः, कुम्भांशादौ च पञ्चनाड्यः इत्यर्थः । अङ्ग इत्यादिभिर्वर्णद्वयैः [11]प्रदर्शितनाड्याः परतश्चतस्रो नाड्यः

---

1. M नाडी for घटी
2. M **पाठः** । T वर्ज्यात् for **विद्यात् द्र.व्या.**
3. $T_1$ **राशी** for रागी
4. M द्विटनटौ
5. त for ततः
6. T नवाङ्काः
7. T तदाद्वये
8. T **मेशांश**
9. T **तास्वर्णवेषु**
10. T दन्तगता for मन्दगतं
11. $T_1$ व्रदशीतिनाऽयां

---

A. अत्र दस्ररोहिणी - इत्येवालं वा ।

निष्ठा नित्यनयोदयं तु कविरान्निम्बो निशा[1]वार्कनु-
द्धव्याशादिषु तान्यतीत्य[2]परतो नाड्यश्चतस्रो विषम् ॥ 23 ॥
शिवर्क्षे [3]वर इत्यन्ये पर इत्यपरे [4]पठेत् ।
द्वौ च पाठौ समीचीनाविति [5]वृद्धव्यवस्थितिः ॥ 24 ॥

## अथ सङ्क्रान्तिविषयः ॥

[6A] कलधी जगन्नूपुरघ्नाब्दं तत्सप्तमं दिनं भवेत् ।
[7] शिष्टात्सङ्क्रमणं [8]नाडीनवकं द्विदिनोत्थितम् ॥ 25 ॥
भौखौऽनुपतिष्ठेऽह्नि कल्यब्दो धेनुभावनः ।
अतश्च पुररात्रीष्टो विषुवत्सङ्क्रमोऽपि च ॥ 26 ॥

---

हव्याशादिषु कृत्तिकादिषु विषाख्या भवन्ति । पादान्तवर्णाः पादपूरणे । समीचीनाविति ।

सा स्त्री जगन्नूपुरेत्यादिना विषुवत्सत्सङ्क्रमकालः उच्यते । इत्यनेन विभक्ते फलं कलिदिनं भवति । शिष्टात् षष्टिघ्नात् तत्समेन सङ्क्रमणस्य [9]नाड्यादयो भवन्ति । अस्मात् दिननाड्यादिकात् फलात् दिनद्वये नाडीनवके च विशोधिते पुनर्दिने सप्तहृते च शुक्रवारादि सङ्क्रमकालो भवति । एवं नाडिकान्तकालः साध्यः । विनाडिकान्ते सङ्क्रमकाले साध्ये सति दिनद्वयं नाडिकानवकं पञ्चदशविनाडीश्च शोधयेत् । अस्मिन् सङ्क्रमकाले चरदलकालं देशान्तरकालं च ग्रहव्यत्ययेन कुर्यात् । स [10]कालः स्वदेशे स्फुटो भवति । विषुवत्सङ्क्रमकालो ध्रुवार्थं साधितश्चेत् तस्मिन् देशान्तरकाल एव कार्यः । चरदलकालः पुररात्रीष्ट इत्ययं नाडीनवकद्विदिनो[11]-(त्थि)तमित्यनेनानीतः, अतः स स्थूलः। तस्मिन् पुनः पञ्चदशविनीडीश्च

---

1. $T_1$ वर्क for वार्क
2. $T_1$ वरतो
3. M पथ for वर
4. $T_1$ पठेन्
5. M पाठः । वृद्धिस्थिति
6. $T_1$ कलशि
7. $T_1$ शिष्टाः for शिष्टात्
8. M पाठः । नाडी न च.
9. $T_1$ गाड्यादयो
10. $T_1$ कावः for कालः
11. T नोज्धित द्र.मृ.

---

A. अस्मिन् श्लोके बह्वशुद्धिः दृश्यते । व्याख्यनमपि अस्फुटम् । मतृकात्रयेऽपि एवमेव दृश्यते। तस्मादत्र शोधनं दुष्करम् ।

**रङ्गे ममारिर्विविधाकृतिज्ञो रौद्रोऽतिशूरो [1]भगवान् कृतं नः ।**
**विभाति रुद्रो धनवंशभिन्नो गोपीजभक्तः स्थलदिव्ययानः ॥ 27 ॥**
**अलब्धगोत्रः [2]सविता न [3]भानु[4] र्नित्यो ममात्मा कलशाय यत्नः ।**
**विनाडिकादीनि दिनावसानवाक्यानि भानोर्भवन [5] प्र(वे)शे ॥ 28 ॥**

---

शोधयित्वा तनुरात्रीष्टः इति पठितव्यः । अत्र भौरव इति पाठस्तु स्फुटविषुवद्दिनापेक्षया कृतः । शुक्रादिकाद्वाक्यात् पुनरपि दिनद्वये विशोधिनेऽर्कवारादिवाक्यं भवति । पुररात्रीष्ट इतीदमर्कवारादिकम् । ममारिरित्यादिषु सङ्क्रमवाक्येषु काश्चिद्विनाडिका अन्त्यहीनेषु क्षेप्याः । आचार्यस्तु केनचिद्वाक्यकृतापठितं वाक्यं प्रदर्शितवानेव । [6]सूक्ष्मगणितविद्भिरेवं पठ्यते - "शृङ्गाणि मेरोर्दिवि धूपिनानि चर्के च शक्रोनवपि श्रुतानि । प्रणौति रुद्रं भयवंशभिन्नं परं हि भक्तो गविदिव्ययानम् । मृद्गन्धिगात्रं उदकेन हीनं भूत्यामशीर्णं कुलशी ह्ययं नात् । [7]भूत्यामशीर्णं कुलशी ह्ययं नात् । विनाडिकादीनि दिनान्तिकानि वाक्यानि भानोर्भवन[8]प्र(वे)शे ॥" इति । सङ्क्रान्तिशब्दो दक्षिणायनादीनां प्रदर्शक इति तदुक्तिः।- "मासा मृगाद्या याम्योदगयने सङ्क्रमस्तथा । कल्प्यन्ते केवलो नैव रविणा सायने न तु । याम्योदर्शति विज्ञाने रवेचरस्यायनां [9] शकाः । गृह्यन्ते राशिचारे तु नापेक्ष्यन्ते ग्रहस्य ते । अश्विन्या(द्यर्क्ष)[10]युग्मेन सपादेन हि राशयः । [11]जाय(न्ते)ऽजादयस्तेषां स्थानं भे कल्प्यते ततः । योग भाग[12]समस्येन्दोः केवलस्य हि दृश्यते । तारायोगस्ततो व्यक्तः स्फुटौकः [13]केवलस्विति । अयने प्राकृते प्रोक्ते मृगकर्क्यादिके बुधैः । ततः प्राह [14]पराशब्दे वैकृते इति कीर्तिते । तथा च वराहमिहिरः - "अप्राप्य मकर[15]मर्को (वि)निवृत्तो हन्तिसापरां याम्याम् । कर्कटकमसंप्राप्तो विनि[16]वृत्तश्चोत्तरां [17]सैन्दीम् ॥ उत्तरमयनमतीत्य व्यावृत्तः

---

1. M धगवान् कतुर्नः
2. M सुपिता
3. $T_1$ भासुं
4. M निन्द्यो, $T_1$ नीत्यो
5. T प्रदेशे
6. $T_1$ गुणितवद्भिः
7. $T_1$ भूम्यशीर्णं
8. T प्रदेशे
9. $T_1$ कांशकाः
10. T दृक्षयुग्मेन
11. T जायन्तैजाद
12. $T_1$ समन्येन्दोः
13. $T_1$ केवलन्त्विति
14. $T_1$ चराश्ब्दे
15. T मकौऽपि निवृत्तो
16. $T_1$ वृत्तश्तो गदोत्तरां
17. T सैन्द्राम्

अयने विषुवत्यन्यास्वर्कसङ्क्रान्तिषु क्रमात् ।
त्रिदिनैकदिनत्रिंशन्ना[1]ड्यस्त्याज्याः स्वपार्श्वयोः ॥ 29 ॥

दक्षिणायनसायाह्नकृष्ण[2] पक्षा विनिन्दिताः ।
मृगादिराशिद्वय [3]भानुभोगात् षडर्तवः स्युः शिशिरो वसन्तः ।
ग्रीष्मश्च वर्षा च शरच्च तद्वद्धेमन्तनामा कथितस्तु षष्ठः ॥ 30 ॥

शिशिर[4] पू(र्व)मृतुत्रयमुत्तरं
ह्ययनमाहुरहश्च तदामरम् ।
भवति दक्षिणायनमन्यदृतुत्रयं
निगदिता रजनी मरुतां सा ॥ 31 ॥

## अथ वारतिथिनक्षत्रदोषाः ॥

विशाखाशतभिषग्रौद्रविश्वा भौमदिने[5] युताः ।
रिक्तया यदि योगाः [6]स्युर्मृत्युदाः कर्मकर्तृणाम् ॥ 32 ॥
[A]बुधद्वितीया कुजपञ्चमी च षष्ठी गुरोरष्टमिशुक्रवारे ।
एकादशीचन्द्रशनिर्नवम्यां द्वादश्यथार्केण च दग्धयोगाः ॥ 33 ॥

---

क्षेमसस्यवृद्धिकरः । प्रकृतिस्थश्चाप्येवं विकृतिगति[7]र्भ(य)कृदुष्णांशुः । इति । तथा च वृद्धगर्गः "अयने सुप्रभः स्निग्धः सेवते यदि भास्करः । सुवृष्टिं च [सुभिक्षं च] योगक्षेमं च निर्दिशेत् । अनिवृत्ते समे वापि निवृत्ते शस्यते रविः । हीने भयावहो लोके दुर्भिक्षमरकप्रदः ।" इति अतो मुहूर्तादौ केवलार्केणायनादि वेद्यम् ।
विशाखेत्यादिभिर्दग्धयोगा उच्यन्ते । बुधद्वितीयेति । अयं श्लोकः बार्हस्पत्ये पठितः। अतोऽस्य योजनैवास्माभिर्निरूप्या । बुधे द्वितीया । गुरोवरि इति शेषः । अष्टमिशुक्रवारे इत्येकं पदम् । विभक्तिस्तु प्रथमा सप्तमी वा एकादशीचन्द्रशनि-

---

1. M नाड्यास्त्याज्याः
2. M पाठः । T पक्षापि निन्दिताः
3. M पाठः । T राशी for भानु
4. T पूर्पमृतु
5. $T_1$ युता
6. $T_1$ मृत्युदं
7. T र्भवकृदु

---

A. "बुधस्तृतीया" इति मुहूर्तचिन्तामणौ विशेषः ।

मासा रुद्रा दिशो रामा षड्दस्र [1] मुनयः क्रमात् ।
तिथयः सूर्यवाराद्यैर्दग्धयोगा इति स्मृताः ॥ 34 ॥
षष्ठ्यादितिथयः सप्त चन्द्रवारादिभिर्युताः ।
क्रमात् पक्षद्वयेऽ[2]प्येते सप्तयोगा हुताशनाः ॥ 35 ॥
मखायां [3]दिनकृद्वारो विशाखा चेन्दुवारगा ।
आर्द्रायां [4]त्वारवारश्च नैर्ऋतं बुधवारगम् ॥ 36 ॥
[5]वारुणं गुरुवारस्थं रोहिणी सितवारगा ।
आषाढः [6]शनिवारस्थो महानाशकरा अमी ॥ 37 ॥
[7]अश्विचित्रोत्तराषाढा वस्वर्यम्णेन्द्रपौष्णभम् ।
अर्कादियुक्तमशनिः सर्वकर्मविनाशकृत् ॥ 38 ॥
भरणी[8]मित्रभादित्य भद्रभाद्रौ सपैतृकम् ।
सवैष्णवं क्रमादर्काद्योगोऽशनिविषाह्वयाः ॥ 39 ॥
दग्धोमृत्युसमाख्याश्च ये योगास्ते न दोषदाः ।
जीवने स्वामिना वापि लग्ने दृष्टेऽथवा युते ॥ 40 ॥

---

रित्येकं पदम् । तत्र प्रथमोक्तयोरेकादशीचन्द्रयोः [9] क्रमप्राप्त्या सम्बन्धः स्यात् । अतः शनिरित्यवशिष्यते । तस्य शेषतया नवम्यामिति । अथवा एकादशी [10] इत्ये(कं) पदम् । चन्द्रशनिरित्येकम् । अत्रापि क्रमवशात् सम्बन्धः पूर्ववत् । यदा यथोक्तवारतिथी भवतस्तदा दग्धयोगः स्यादिति योजना । अतः सप्तमी च युज्यते । मासा द्वादशी । रुद्रा एकादशी । मन्दारयोर्दिनमित्यस्यापवादत्वेन सामान्यवार[11]दोषापवादो वारदोषा इत्यादिनोच्यते ।

---

1. M मनुयस्तथा
2. $T_1$ प्येताः
3. $T_1$ दिनकृद्वारं
4. $T_1$ त्वारवारञ्च
5. M पाठः । T वारूणेन गुरोर्वारं
6. M शशि for शनि ।
7. $T_1$, M पाठः । T अश्विचित्राचतुर्वकत्रा for अश्विचित्रोत्तरा
8. $T_1$ मित्रमादित्य M भरणीचित्रमादित्य
9. $T_1$ क्रमप्राध्या
10. T इत्येवं
11. $T_1$ वार इति ग्रन्थपातः

वारदोषहरो वारनाथ(स्त्र्या)यारिवित्तगः ।
वक्री पराजितो वापि क्रूरः क्रौर्यहरो मतः ॥ 41 ॥
शुभवर्गगतश्चन्द्रः शुभकर्मा शुभेक्षितः ।
त्रिजन्मप्रत्यरविपद्वधदोषानपोहति ॥ 42 ॥
शुभवर्गगतत्वादि प्रत्येकमपवादकम् ।
जन्माष्टमेशमित्रत्वे राशिर्जन्माष्टमो [1]वरः ॥ 43 ॥
जन्मकर्मेशमित्रत्वे वैनाशिकमदूषितम् ।
अष्टमेशेति शब्देन [2]खरपोऽभिमतः किल ॥ 44 ॥
तथा कर्मेशशब्देन [3]हार्दांशकप ईरितः ।
पूर्वपक्षेऽ[4]नलान्त्यार्धात् सिंहादिकरणस्थितिः ॥ 45 ॥

## अथ करणविषयः ॥

सिंहो व्याघ्रो वराहश्च खरश्च गजसंज्ञितः ।
वृषभः कुक्कुरश्चेति क्रमा[5]द्गण्याः पुनः पुनः ॥ 46 ॥
पक्षी चतुष्पान्नागश्च किंस्तुघ्नश्चा[6]न्त(तः)स्थिताः ।
[A]द्युजामृणीसिते पक्षेन्द्रछिदसितेतरे ॥ 47 ॥
हलातिथिं विजानीयादचा [7] दिग्यामनाडिकाः ।
चतुर्थ्यां मृगनाड्यन्तः [8]सूक्ष्माविष्टिः प्रचेतसः ॥ 48 ॥

---

पराजितो ग्रहयुद्धेऽप्राप्तजयः । शुभवर्गगत इत्यादिष्वेकैकं त्रिजन्मादीनामपवादकम् । खरपो द्वाविंशत् द्रेक्काणाधिपः । हार्दांशकपोऽष्टाशीत्यंशकाधिपतिः । अनलः प्रतिपत् । कुक्कुरो विष्टिः, [9]किस्तुघ्नः कृमिः । अन्ततःस्थिताः कृष्णचतुर्दश्या[10]मपरार्धादिषु चतुर्षु तिथ्यर्धेषु स्थिताः । [11]भुजाट्टणी इति सितपक्षे इत्यादिना सूक्ष्मविष्टेस्तिथिं

---

1. $T_1$ परः
2. M पाठः । T खरवो द्र.व्या.
3. T हार्दशकव द्र.व्या.
   $T_1$ हार्ददंश परं रिताः
4. M अनलोत्यार्धात्
5. $T_1$ गणयित्वा M गणयात्
6. T चान्तकस्थिताः द्र.व्या.
7. $T_1$ दिङ्यामनादिकाः
8. M पाठः T सूक्ष्मावृष्टिः द्र.व्या.
9. $T_1$ किन्तुन्घः
10. $T_1$ मवरार्दादिषु
11. $T_1$ धुजादृणी

---

A. अस्य व्याख्याने ''भुजाट्टणी'' इति दृश्यते । श्लोकोऽपि अपूर्णः ।

[1]दिश्युदेत्यष्टमीस्ता सा दिङ्नाड्यन्तः कवेर्दिशि ।
अनया विधयान्येषु चैतत्सर्वं समुन्नयेत् ॥ 49 ॥
कालो नेयो नमो नागी नभो नारी न तत्पुनः ।
सूक्ष्मा [2] विष्टिः परैरुक्ता शिरसो वा तिलोदकम् ॥ 50 ॥
न्यग्रोधः किंशुको वेणुः कारस्करविकङ्कतौ ।
घातकी स्नुहिकर्णी च [3] विष्टिवृक्षा इमे स्थिताः ॥ 51 ॥
अन्धयोगे तु तत्काले [4] विष्टिवृक्षाः स्वदिक्स्थिताः ।
राजचोरमृगादिभ्यो रक्षां कुर्वन्ति भाविताः ॥ 52 ॥
दाक्षं यज्ञं संहरता पुरेशेनैव निर्मिताः ।
वीरभद्रांशजाश्चैते कुक्कुरा इति भावनाः ॥ 53 ॥

---

तिथौ यामं यामे नाडिकां स्वदिशं चाह । [5]भकारेण चतुर्थी तिथिः, उकारेण पञ्चमी दिक्पश्चिमाख्या, तिथौ पञ्चमो यामश्च । तस्मिन् यामे पञ्चमीनाडिका च । पञ्चमनाडिकान्ते विष्टयुदय इत्यर्थः । एवं हलातिथिर्वेद्या । अचादिग्यामनाडिका वेद्याः । [A]गूशिं दृढ इति कृष्णपक्षे। अस्य विवरणं चतुर्थ्यामिति । दिङ्नाड्यन्त इति। अष्टम्यां दशमनाडिकान्ते विष्टिः एकयामं नाडीकाद्वयं चातीत्येत्युक्तत्वात् । मतान्तरेण सूक्ष्मविष्टेर्नाडिकां दिशं चाह - **कालो** नेय इति । कालः [6] ए(क)त्रिंशन्नाडिका। शि इति पश्चिमा दिक् । एवं चतुर्थ्यां नेय इति । दशमी नाडिका, र इत्याग्नेयी दिक्। एवमष्टम्याम् । न्यग्रोधादयो विष्टिवृक्षाः । किंशुकं [B] मुरिक्क । विकङ्कतं वैय्यङ्कतम् । घातकि आरुपुलि । घातकि तातिरि इति च पठ्यते । स्नुहि कर्णी । अन्धयोगे दृष्टिहीनदिने । तत्काले विष्टयुदयकाले । स्वदिक्स्थिताः विष्टिदिशि स्थापिताः । भाविताः वक्ष्यमाणविष्टिरूपा इति [7] ध्या(त्वा)विष्टिमन्त्रं जप्त्वा । कुक्कुराः शुनक्यः ।

---

1. $T_1$ दिश्यदेर्यष्टमीस्था
2. $T_1$ वृष्टिः
3. $T_1$ वृष्टिः
4. $T_1$ वृष्टिः
5. $T_1$ धकोरण
6. T एतत्रिंशन्नदिका
7. T ध्याताः

---

A. अस्य मूलं न दृश्यते। मूले ग्रन्थपातो वा।

B. मरिक्क, आरुपुलि इत्यादिपदैः व्याख्याकारः स्वमातृभाषापदैः व्याख्यानं करोति इति भासते।

पलाशरवदिशश्वत्थापामार्गविषपादपान् ।
[1]डुण्डूककण्डकिशमी शाकूनर्कस्य [2] (वा)तरोः ॥ 54 ॥
भिन्नानुभयतस्तीक्ष्णान्यस्येद्ध्यात्वाधिपान् [3] दिशा(म्) ।
क्षेत्रादौ विष्टिदिक्ष्वष्टस्वेतद्रक्षाकरं परम् ॥ 55 ॥
अर्काद्यश्वादिवारर्क्षं नवभक्तावशेषितम् ।
दृष्टिदृग्दृष्टिदृक्काणकाणान्धनिर्दिशः ॥ 56 ॥
शरैकदिग्वेदरसवेदनाड्यो मुखं गलम् ।
[4]वक्षो नाभिः कटिः पुच्छं कार्यनाशो मृतिस्तदा ॥ 57 ॥
धननाशो [A] वृद्धिनाशो युद्धं च विजयं क्रमात् ।
फलमत्राति [5] कृष्णोग्रा भीषणास्याग्निलक्षणम् ॥ 58 ॥
[6] उद्गिरन्ती [7] शुनक्येषा केतोर्विकृतिरुद्भटा ।
तिथेःपूर्वार्धजा विष्टिर्निशि पुच्छे च शोभनम् ॥ 59 ॥
मुखेऽह्नि चापरा शस्ता [8] पुच्छास्यौ त्र्यक्षनाडिकौ ।
लग्नेशः [9] स्वांशगः सौम्यः प्रबलो विष्टिदोषहृत् ॥ 60 ॥

---

विषपादपं (कञ्चिरम्), डुण्डूकं (पलकप्प्याणि), कण्डकि (कार), अर्कतरु (एरिक्क) धिन्ने सति शङ्कौ बुहच्छकलं ग्राह्यं स्वल्पमानशकलं त्याज्यमिति प्रयोगविदः । [10]दिशामधिपान् ध्यात्वा न्यसेत् । एतदपि विष्टिकाले । अन्धयोगमाहुः- **अर्कादिति** । अर्कवारादिवारान् अश्विन्यादिनक्षत्राणि च गणयित्वा संयोज्य नवभिर्भक्ते शिष्टं दृष्टिदृग्दृष्टिदृक्काणका[11]णान्धनिर्दिशः इति क्रमेण गणयित्वा दृष्टिं काणत्वमन्धत्वं च कलपयेत् । [12]विष्टचाख्य शुनक्यामुखादिषु षट्सु अवयवेषु विष्टिकालस्य त्रिंशन्नाड्यात्मकस्य शरादिमिता नाडिकाः [13]कल्प्याः ।

---

1. $T_1$ डुण्डूत
2. T पा तरोः
3. T दिशान्
4. $T_1$ पाठः । T पक्षो
5. M तीक्ष्णोग्रा for कृष्णोग्रा द्र.व्या.
6. M पाठः । T उद्गिरन्ति
7. $T_1$ शुनत्येषा
8. $T_1$ पुच्छान्यौ
9. $T_1$ स्वांशकः
10. $T_1$ दिशामधिमान्
11. $T_1$ काण इति ग्रन्थपातः
12. $T_1$ विध्याख्य
13. $T_1$ कल्पान्तेषु for कल्प्याः । तेषु

---

A. अत्र बुद्धिनाशो इति भवेद्वा ।

## अथ गुलिकः ॥

अष्टौ दिनाधिपमुखोदयिनो दिनांशाः
मन्दापरार्धमुदितं गुलिकोदयाख्यम्।
[1] तात्कालिकोऽपि च तथैव तदष्टमांशो
वारेशपञ्चममुखोदयिनो निशांशाः ॥ 61 ॥
नारीमुखं वनं शैद्रं तावद्देयं हरिः स्वयम्।
प्रियो नित्यं मणिर्मानं धिगोऽयं हि निकृत्स्थितिः ॥ 62 ॥
दिनरात्रिप्रमाभिस्तु निहत्य त्रिंशता हृते।
सुसूक्ष्म [2] मान्दिलाभः स्यादित्याचारविदां स्थितिः ॥ 63 ॥

---

तेषु षट्सु भागेषु क्रमात् कार्यनाशादयो भवन्ति। एवमत्र फलम्। अतिकृष्णेत्यादिना विष्टेः स्वरूपमुच्यते। उद्भटा उद्युक्ता। विष्टेरपवादमाह - **तिथेरिति**। गुलिककालमाह - **अष्टाविति**। दिवसस्याष्टांशो येऽष्टौ तेष्वाद्येषु वाराधिप [3] मुखाः सप्तग्रहाः उद्यंति। [4] अष्टमेंऽशे पुनरपि वाराधिप उद्यति। एवं वाराधिप [5] मुखानामुदयैः सहिता अष्टौ दिनांशाः स्युः। तेषु मन्दयामस्यापरार्धं गुलिकोदयसंज्ञं भवति। तथा तस्य मन्दयामस्यापरार्धस्याष्टमांशस्तात्कालिकयामः स्यात्। एतदुक्तं भवति - मन्दयामापरार्धस्य च ये अष्टावष्टांशास्तेऽपि वाराधिपमुखोदयिनः स्युः। तेष्वपि मन्दयामस्यापरार्धान्तात् कालिकगुलिकोदयाख्यं, पुनस्तस्यापि मन्दापरार्धस्य ये अष्टौ भागाः तेष्वपि मन्दापरार्धं गुलिकोदयाख्यम्। एवं सूक्ष्मगुलिको [6] वेद्यः। पुनस्तस्यापि मन्दापरार्धस्य अष्टभिः भागैरुक्तत्वात् सुसूक्ष्मगुलिकसिद्धिः। एवं पुनः कृत्वा सूक्ष्मादपि सूक्ष्मतरो गुलिको वेद्यः। रात्रौ तु अष्टौ निशाङ्का वारेशस्य पञ्चममुखोदयिनः स्युः। तेष्वपि मन्दापरार्धं गुलिकोदयाख्यम्। पुनस्तात्कालिकोऽपि एवं वेद्यः। मतान्तरेण गुलिकमाह - **नारीमुख**मिति। अर्कवारे विंशतिनाडिकाः पञ्चविंशतिघटिकाश्च गुलिकोदयकालः। एवं त्रिंशन्नाडिकामिते दिने [7]गुलिक(वाक्या)नि। अन्यत्र तेषां

---

1. $T_1$ तत्कालिक
2. $T_1$ मानि
3. $T_1$ मुख्याः
4. $T_1$ अष्टमांशे
5. $T_1$ मुख्यान्तानामुदयैः
6. $T_1$ वेद्यम्
7. T व्याख्यानि

[1] पलाङ्गुलहता सूर्यदोर्ज्या [2] व्योमाष्ट भूहृताः ।
सूर्येऽजादितुलादिस्थे स्वर्णं त्रिंशति तद्दिनम् ॥ 64 ॥
[3] पलाङ्गुलेति शब्देन विषुवद्भासमीरिता ।
बली वाराधिपोऽङ्गस्थः शुभो गुलिकदोषहृत् ॥ 65 ॥

अथ दोषाः ॥

सूर्यार्क्षाद्दिक्सप्ततिथ्येकविंशेषू -
[4] (ल्का)कम्पब्रह्मदण्डध्वजेषु ।
नक्तं शश्वत् प्राह्णसायाह्नगेषु
शैलेनाशा षट् च नाड्योऽतिनिन्द्याः ॥ 66 ॥
[5] कम्पः कम्पयते [6] स्थानादुलका दहति तत्कुलम् ।
[7] ब्रह्मदण्डो विनाशाय [8] ध्वजे मरणमुच्यते ॥ 67 ॥

---

संस्कारमाह - **दिनरात्रीति** । दिनरात्रिप्रमाणनाडिकाभिः तानि वाक्यानि निहत्य त्रिंशता विभजेत् । तत् लब्धानि सुसूक्ष्मगुलिकवाक्यानि भवन्ति । प्रमाशब्देन नाडिका विवक्षिता ।

दिनमानानयनमाह - **पलाङ्गुलेति** । [9] पलाङ्गुलानि विषुवच्छायाङ्गुलानि । सूर्यदोर्ज्या सायनस्य स्फुटरवेः भुजफलज्या । जनेन सत्येनेत्यादि परहितपठिताः । सूक्ष्मचराप्तये तु सूर्यभुजाफलतः [10] कतिपयकलाः शोध्याः स्युः । द्युज्या भेदेन चरस्यापि [11]भेदसम्भवात् तल्लिप्ताः प्रदर्श्यन्ते - धनी सूनुः रवनी इत्यादि सूर्यराशिज्याः । तद्दलेन तुहिनार्कदोर्ज्या स्पष्टा स्यात् अत्रोक्ते चरकर्मणि । अत्र पूर्वोक्तो गुलिको मुहूर्ते अङ्गीकृ तः इति सम्प्रदायविदः । चतुर्दोषानाह - [12]**सूर्यर्क्षादिति**। सूर्यस्थितनक्षत्रात् नक्तं शश्वत् प्राह्णसायाहनगेषु दशमं नक्षत्रं

---

1. T वलाङ्गु द्र.व्या.
2. M व्योमाष्टभूर्हृताः
3. M पाठः । T वलाङ्गुलेति द्र.व्या.
4. T त्का द्र.वाया.
5. $T_1$ कम्पं
6. $T_1$ स्थानादुत्का
7. M ब्रह्मदण्डोऽपि नाशाय
8. M ध्वजो
9. $T_1$ पलाङ्गुलेक
10. $T_1$ कतिपलाः
11. $T_1$ भेदे सम्भवात्
12. $T_1$ "सूर्यर्क्षादिति" इति ग्रन्थपातः

[1] उलका शुक्रोदये नश्येत् कम्पश्चन्द्रनिरीक्षिते ।
दण्डध्वजौ न दोषाय लग्ने शुभयुतेक्षिते ॥ 68 ॥
अष्टम्यां च नवम्यां च सप्तम्यां प्रतिपद्यपि ।
[2] ध्वजोलकाकम्पदण्डाः स्युः क्रमाच्छु भकराः स्मृताः ॥ 69 ॥
यस्मिन् भांशे दिने स्थानं तत [3]आशादिभेऽपि च ।
तत्प्रदेशत आरभ्य शैलादिघटिका [4] धुताः ॥ 70 ॥
धूमश्च व्यतिपातश्च परिवेषेन्द्रकार्मुकौ ।
केतुश्चेति क्रमाद्वेद्या श्लोकतो वक्ष्यमाणतः ॥ 71 ॥
[5] सविश्वांशे चतुर्भेऽर्के विलोमे षड्ग्रहान्विते ।
विलोमेत्यष्टि भागाढ्ये [6] यास्ता(राः) पञ्च तास्त्यजेत् ॥ 72 ॥

---

रात्रावुलकाख्यो दोषो भवति। सूर्यर्क्षात् सप्तमं नक्षत्रं सदा कम्पसंज्ञितो दोषः स्यात्। तथा पञ्चदशर्क्षं प्राह्ण ब्रह्मदण्डाख्यः स्यात्। एकविंशर्क्षं सायाहने ध्वजसंज्ञो भवति। एषु चतुर्षु क्रमेण शैलादिमिता घटिकाः विशेषाध्दुताः। अष्टमीनवम्यादिषु [7] तिथिषु च [8] ध्वजोल्कादयः शुभकराः न दोषदा इत्यर्थः। नक्षत्रस्य यस्मिन् भागे दिने स्थानं दिनेशस्य स्थितिः। दशमादिनक्षत्रेष्वपि तत्प्रदेशत आरभ्य पूर्वोक्तशैलादिघटिकाः धुताः स्युः। धूमादीनां पञ्चदोषानाह - **सविश्वांशेति**। राशिभिः चतुर्भिस्त्रयोदशभिरंशैश्च सहिते सूर्ये यन्नक्षत्रं भवति तत् धूमसंज्ञो दोषो भवति। तस्मिन् धूमसंज्ञितेऽर्के विलोमे मण्डलाच्छुद्धे सति दृष्टं नक्षत्रं [9]व्यतीपातदोषो भवति। तस्मिन् व्यतीपाताख्येऽर्के [10] राशिषड्क्युते परिवेषाख्यो भवति। तस्मिन् मण्डलाच्छुद्धे इन्द्रधनुःसंज्ञो भवति। तस्मिन्नत्यष्टि भागैर्युते केतुसंज्ञो भवति। एवं पञ्चदोषाः वेद्याः। तस्मिन् केतावपि एकराशियुते सूर्यस्फुटश्च सिध्यति।

---

1. $T_1$ उत्का
2. $T_1$ ध्वजोत्का
3. $T_1$ आचादि
4. $T_1$ धुनाः
5. M सविशंशेश चतुर्भे
6. T यास्तारां
7. $T_1$ तिथिषु इति ग्रन्थपातः
8. $T_1$ ध्वजोत्कादयः
9. $T_1$ "व्यतीपातदोषो भवति" इति द्विवारं लिखितम्।
10. $T_1$ पाठः। T राशिष्टर्कयुते

शुभयोगेऽर्कवारेण नक्षत्रे सहिते तथा।
[1] सुकृति [2] प्राणिनीन्दौ वा शुभे वा केन्द्र उच्चगे ॥ 73 ॥
[A] पञ्चदोषा न दोषाय एते [स्युः] धूमपूर्वकाः।
चन्द्रार्कयोगजा[3]त्तारात् द्वितीयं नवमं च भम् ॥ 74 ॥
त्रयोदशं च षष्ठं च रुद्र [4] धृत्याह्वये च भे।
एकोनविंशं नक्षत्रं सप्तदोषा विनाशदाः ॥ 75 ॥
[5] विरोधपरिघौ वज्रो दण्डः खण्डश्च शूलकः।
व्यतीपात इति ख्याताः सर्वे चाशीविषोपमाः ॥ 76 ॥
अपवादैर्न भिद्यन्ते बलिभिर्वा गुणैरपि। ½।
यदा शशाङ्कात् गुरुराहितार्चिः
केन्द्रत्रिकोणेषु समग्रवीर्य :।
तदा ययुर्नाशमुदग्रवीर्या
दोषा यथा हालहलं हरेन ॥ 77 ॥
लग्ने जीवबुधाधीशैर्दृष्टे युक्ते न [6] चापरैः।
[7] योगदोषा विनश्यन्ति सप्तदोषास्तथैव च ॥ 78 ॥
[8] हस्तमूलानिलं मैत्रं पौष्णप्रेतशि [9]वोरगाः।
दस्रश्चेन्द्विनसंयोगे व्याघाताद्या यथाक्रमम् ॥ 79 ॥
व्याघातः परिघो वज्रो व्यतीपातोऽथ वैधृतिः।
गण्डातिगण्डौ शूलश्च विष्कम्भसहिता नव ॥ 80 ॥

---

सप्तदोषानाह - चन्द्रार्केति। आहितार्चिः रश्मिभिर्युतः। अधी [10] (शःराश्य)धिपतिः। नवदोषानाह - हस्तेति। प्रेतो मखर्क्षं व्याघातादिषु नवदोषेषु त्रीणीत्याद्युक्ता घटिका

---

1. M पाठः। T सुकृति
2. $T_1$ पाणिनीन्दौ
3. M तारा for तारात्
4. $T_1$ वृत्याह्वये
5. M विरोधपरिधो
6. $T_1$ वा परैः
7. $T_1$ योगदोषापि नश्यन्ति
8. $T_1$ हस्तमूलानिकं
9. $T_1$ शिवोरगोः
10. T अधीरास्वधिपतिः द्र.मू.

---

A. अत्र छन्दो भङ्गः दृश्यते। तस्मात् ''स्युः इति योजितम्।

त्रीणि त्रीणि नव त्रिंशत् तिथ्यङ्गाङ्गमुनीषवः ।
व्याघातपरिघादीनामन्ते वर्ज्यास्तु नाडिकाः ।। 81 ।।
चन्द्रार्कयोगे मैत्रस्य परार्धं यदि सम्भवेत् ।
सार्पमस्तकसंज्ञस्तु तदा दोषोऽतिनिन्दितः ।। 82 ।।
व्याघातशूलपरिघव्यतिपातपूर्व
गण्डडातिगण्डकुलिशेषु सवै धृतेषु ।
आदित्यचान्द्रपितृ [1] सार्पभदास्रमूल
मैत्राख्यतिष्य [2] सुरवर्धकि भानि मूर्ध्नि ।। 83 ।।

---

अन्ते विशेषाद्वर्ज्याः। मैत्रस्यापरार्धं उत्तरार्धं व्याघातादिषु नवदोषेषु सत्सु तदूर्ध्वभागे एकार्गलो नाम महादोषः स्यात् । तत्परिज्ञानाय व्याघातशूलादिषु दृष्टेषु खार्जूरिकाख्यचक्रस्य मूर्ध्निगतानि नक्षत्राणि क्रमेणाह - **आदित्य** [3]चान्द्रेति । [4]सुखव(र्धकि)र्देवतक्षः चित्रभं इति यावत्। अत्रोक्तानि नक्षत्राणि मूर्ध्निनक्षत्राणि। न्यायतश्चसिद्धानि कथमितिचेदुच्यते - यत्ताराद्वन्द्वमध्यस्थसूर्येन्द्वोर्योगतो भवेत्, योगर्क्षं तयोर्मध्यगतं भमूर्ध्निसंस्थितमिति । अत्रोदाहरणं - कृत्तिकामध्ये चन्द्रः, पुष्यमध्ये सूर्यः। तयोर्योगे मघान्तं भवति। तत्र पुष्यभात् त्रयोविंशभं कृत्तिकाख्यम्। अतः पुष्यभात् द्वादशर्क्षं कृत्तिकातश्चोत्क्रमेण [5] द्वादशर्क्षं मूल भं मखाख्ययोगर्क्षे मूर्ध्निभं भवति। अथवा ताराद्वन्द्वमध्यशब्दः नक्षत्रयोरन्तरालभाग उच्यते। अतो वसुभस्य तृतीयपादान्ते सूर्यः, स्वात्याः [6] प्रथमपादान्ते चन्द्रः, अत्रापि तयोर्योगो मघर्क्षांतं भवति । तत्र स्वातिभं नवमं वसुभं, अतः पञ्चम वसुभादुत्क्रमेण च [7]पञ्चमभं मघायोगे मूर्धिभं भवति। तदपि मूलभमेव स्यात्। अत्र वसुभादिगणिते तु संख्यायाः समत्वात् मध्यमपि न भवति। एवं सर्वत्र दृष्टव्यम्।

---

1. T सर्पभ
2. $T_1$ सुखवर्धति
3. $T_1$ चान्तेति
4. T सुखत्मीत्रिदैव for सुखर्धकिर्देव द्र.मू.
5. $T_1$ दादर्क्षं
6. $T_1$ पाथान्ते
7. T पञ्चमसं

## अथैकार्गलादिदोषाः ।

एकामूर्ध्व[1]गतां त्रयोदश तथा तिर्यग्गताः स्थापये
[2]द्रेखाचक्रमिदं बुधैरभिहितं खार्जूरिकं तत्र तु ।
व्याघातादिषु मूर्ध्निभं तु कथितं तत्रैक[3]रेखास्थयोः
सूर्याचन्द्रमसोर्बुधैर्निगदितो दृक्पात एकार्गलम् ।। 84 ।।

खर्जूरदेश इष्ट[4]त्वादस्य खार्जूरि[5]काह्वयः ।
केचित् परे [6]तु खार्जूरदलसन्नि भरेखतः ।। 85 ।।

मघेन्द्वग्न्यम्बुपौष्णार्कदशमाच्च क्रमोत्क्रमात् ।
गणिते भगणेऽर्केन्दुभे समे व्यतिपातकः ।। 86 ।।

---

एकामूर्ध्वगतामिति । ऊर्ध्वगतामेकां रेखां विलिखेत् । पूर्वायतामित्यर्थः । तस्यां रेखायां तिर्यग्गता[7](स्त्र)योदश रेखा विलिखेत्, यथा तासु प्रथमा पूर्वायतरेखायां मूले भवति अन्तिमा पूर्वायतरेखायाः कण्ठप्रदेशे च भवति । एवं सप्तविंशतिरेखाग्रयुतं चक्रं [8]खार्जूरिकाख्यं भवति । यत्पुनर्व्याघातादिषु मूर्ध्निभं कथितं नक्षत्रं तस्मिन् चक्रे मूर्ध्निगतं भवति । चक्रस्य मूर्ध्नि नक्षत्रं विन्यस्य नक्षत्राणि क्रमेण गणयेदित्यर्थः । तत्र एकरेखास्थयोः सूर्याचन्द्रमसोः दृक्पात एकार्गलो भवति । एतदुक्तं भवति-एकस्यां तिर्यग्रेखायां अग्रद्वये यदा सूर्येन्दू भवतः तदैकार्गलः स्यादिति । दृक्पातशब्देन अग्रद्वयमङ्गीकृतम् । ऊर्ध्वाग्रे तु अग्रद्वयाभावात् अर्केन्द्वोरेकाग्रस्थित्याप्येकार्गलः [9]स्यात् । तत्सिद्धये ह्ये[10](क)रेखास्थयोरित्येवोक्तम् । अस्यैकार्गलस्य खार्जूरदेशे इष्टत्वात् दोषत्वेनाङ्गीकृतत्वात् खार्जूरिकाह्वयमेतच्चक्रमित्येके वदन्ति । अपरे तु खर्जूराख्यमिति वदन्ति । [11]मघर्क्षात् तद्दशमर्क्षात् मूलाच्च, कमेणोत्क्रमेण च गणिते नक्षत्रगणे सति सूर्येन्द्वाश्रिते द्वे नक्षत्रे यदि समे भवतः तदा [12]व्यतीपा(त)दोषः स्यात् । एवं इन्दुभादिनक्षत्रेभ्यश्च [13]तद्दशमनक्षत्रेभ्यश्च क्रमोत्क्रमगणनया व्यतीपा[14](ता) वेद्याः ।

---

1. M गताः
2. M द्रेखाश्चक्र
3. $T_1$ रेखस्त्रयोः
4. $T_1$ सस्य for दस्य
5. $T_1$ कां ह्वितम् for काह्वयः
6. $T_1$ तु इति ग्रन्थपातः
7. T सुयोदश for स्त्रयोदश
8. $T_1$ खार्जूदिकास्यं
9. $T_1$ स्यार्क for स्यात्
10. $T_1$ ह्येतरेखा
11. $T_1$ दखर्क्षात्
12. T पाद
13. $T_1$ तद्दशमनक्षत्रेभ्यश्च
14. T व्यतीपादा

येन ग्रहेण यो दोषः तस्मिन् बलिनि [1]सोऽफलः ।
शुभवर्ग[2]गतौ चन्द्ररवी पूर्णबलौ यदा ॥ 87 ॥
शुभेक्षितौ च तत्काले तदा नार्केन्दुयोगजाः ।
व्याघाताद्याः सार्पशीर्षो नैकार्गल[3]बलं तथा ॥ 88 ॥
दोषानिमानतिबलः स्फुरदंशुजालो
लग्ने स्थितः प्रशमयेत् सुरराजमन्त्री ।
एको बहूनि दुरितानि सुदुस्तराणि
भक्त्या प्रयुक्त इव शूलधरे प्रणामः ॥ 89 ॥

## अश्विन्यादिषु निम्नाख्या मुहूर्ताः ॥

दारे सूनुर्मया नेत्रे सेनामध्ये [4]शुकी पयः ।
हरो गिरिस्तनुः सूपः [5]शाकः शोकः पटुर्नरे ॥ 90 ॥
शुकसूनुः शकस्थाने काकस्थानं सनिर्मया ।
हरो [6]जारो मुनिर्निम्ना[A]न्यश्वाप्यादिषु [7]वर्जयेत् ॥ 91 ॥
दार[8]सून्वादयः शब्दाः मुहूर्तानां प्रदर्शकाः ।
दारे मणिचणे नाड्यौ सूनुर्नाड्यौ [9]लिपद्विभे ॥ 92 ॥
[10]केशो नागः सनिः क्रूरः घरो नन्दादिषु क्रमात् ।
निम्नानि वर्जयेत् पश्चात् पुरश्चैषां घटीद्वयम् ॥ 93 ॥

---

शुभवर्गगताविति । तत्काले शुभेक्षितौ चेति योज्यम् । अश्विन्यादिषु दार इत्याद्यक्षरद्वयनिदिष्टा मुहूर्ता निम्नाख्या भवन्ति । तद्विवरणं दारसून्वादय इत्यादि । केशो नाग इति । केशाद्यक्षरद्वयनिर्दिष्टनाडिकान्तादूर्ध्वा नाडिकाधोनाडिका चेति नाडिकाद्वयं [11]नन्दादिषु निम्नसंज्ञ[12](कं) भवति । एषामिति । तद्विवरणं तद्विशेषणं केशादय इति । दुष्टस्य चन्द्रस्य योऽपवादः स एव [13]निम्नानामपवादः स्यात् ।

---

1. $T_1$ सोफलः
2. $T_1$ गते चन्द्ररवि
3. M बलस्तथा
4. M शुकः
5. M शोकः
6. M जारौ
7. $T_1$ विज्जयेत्
8. M पाठः । T सुन्वादयः
9. M लिपद्विरे
10. $T_1$ तथा M मातृकायां च इयं पङ्क्ति नास्ति ।
11. $T_1$ नन्ददषु
12. T संज्ञतः
13. $T_1$ निम्नो नामपवादः

---

A. अत्र र्निम्नान्यग्न्यादिषु विवर्जयेत् "इति भवेद्वा । यतो हि अस्य व्याख्याने" अग्न्यादिषु इत्याद्यक्षरद्वयनिर्दिष्टा मुहूर्ता निम्नाख्याः" इति दृश्यते ।

## अथ दुष्टचन्द्रतदपवादाश्च ॥

केशादयस्तु नाडीनां [1]सपराणां प्रदर्शकाः ।
केशः कुशरमे [2]नाड्यौ नगो नाड्यो नडीकुले ॥ 94 ॥
सनिस्थानजे नाड्यौ परत्रापीत्थमुन्नयेत् ।
षष्ठगोऽष्टमगोऽन्त्यस्थः सपापः पापभागगः ।
दुष्कर्मा षड्विधश्चन्द्रो मृत्युदः पक्षयोर्द्वयोः ॥ 95 ॥
इत्युक्तं [3]षट्प्रकारेण दुष्टस्येन्दोः समाहितिः ।
लग्न[4]लग्नांशवचसा योक्ता सात्रापि कथ्यते ॥ 96 ॥
लग्नलग्नांशकेन्द्रस्थः शुभारूढांशकेन्द्रगः ।
[5]शुभद्व्यङ्गांशगः कालहोरेशांशर्क्षकेन्द्रगः ॥ 97 ॥

## अथ चैत्रादिमासेषु शून्यताराः ॥

[6]सतांशपेन वा दृष्टः [7]षो(ढे)न्दुर्वृद्धिदः सुकृत् ।
[8]अजाश्वौ त्वाष्ट्रवायव्य[9]विश्वतिष्याः पुनर्वसू ।
[10]वसुभाग्यौ विश्वपूर्वौ शतपौष्णावजैकपात् ॥ 98 ॥

---

अतस्तद्दुष्टचन्द्रं तदपवादं च प्रदर्शयति । षष्ठगोऽष्टमग इति । यस्य चन्द्रस्य चन्द्रक्रिया दुष्टा सः दुष्कर्मेत्युच्यते । एवमुक्तैः षड्भिः प्रकारैः दुष्टस्य मृत्युदस्य [11]चन्द्रस्य या समाहितिः, लग्नलग्नांश इत्यादिना सार्धेन श्लोकेनोच्यते । सात्र निम्ने विकल्प्यते । समाहितिशब्देनापवादः उक्तः । तमपवादमाह - **लग्नलग्नांशकेन्द्रस्थ** इति । द्व्यङ्गांशो द्वादशांशाः । अंशर्क्षं स्वावस्थांशकराशिः, स चकालहोरेशस्य । सता अंशपेन शुभेन चन्द्रस्यांशपेन । सुकृत् सत्क्रियाकृत् । अत्र क्रमो न [12]विवक्षित इति स्वेनैव सिध्यति । चैत्रादिषु मासेषु क्रमात् [13]शून्यभान्या(ह) - **अजाश्वाविति** । चैत्रे अजाश्वे, वैशाखे त्वाष्ट्रवायव्यविश्वतिष्याः, ज्येष्ठे [14]पुनर्वसुभं, [15]आषाढे वसुभाग्यौ, श्रावणे विश्वपूर्वौ, प्रोष्ठपादे शतपौष्णौ, आश्वयुज अजैकपात्,

---

1. M सर्पराणां
2. $T_1$ नाख्या
3. $T_1$ षं प्रकारेण
4. $T_1$ लग्नाङ्गवचसा
5. $MT_1$ शुभदव्यंशांशयगः
6. T शतांशपेन $T_1$, M सतांसपेन द्र.व्या.
7. T षोडेन्दु
8. $T_1$ अजाश्वा
9. $T_1$ विश्वमिष्याः
10. $T_1$ व...भाग्यः
11. $T_1$ चन्द्र for चन्द्रस्य
12. $T_1$ विक्षितः
13. T शून्य भान्यार्हं
14. $T_1$ वसु for पुनर्वसुभं
15. $T_1$ "अषाढे वसु" इति ग्रन्थपातः

**पुष्येन्द्वग्निमघा मित्रशूर्पाहिर्बुध्नितारकाः ।**
**हस्ताश्विनहरा [1]मूल[2]हरी यमसुराधिपौ ॥ 99 ॥**

**चैत्रादिषु क्रमाच्छून्यताराः पदमितास्त्यजेत् ।**

**अथ चान्द्रमासनामानि ॥**

**चान्द्रा मासाश्चैत्रवैशाखसंज्ञौ**
**ज्येष्ठाषाढौ श्रावणः प्रोष्ठपादः ।**
**अश्विन्याख्यः कार्तिको मार्गशीर्षः**
**पौषो माघः फालगुनः पर्वतिष्ठाः ॥ 100 ॥**

**अथ मासविचारः ॥**

**चित्रादितारकाद्वन्द्वे पौर्णमासीसमन्विते ।**
**मासाश्चैत्रादयः कल्प्यास्त्रिकैः षष्ठान्त्यसप्तमाः ॥ 101 ॥**

**[3]शरर्क्षार्कादिरिग्वेद[4]दिग्भूरुद्रादि भूदृशी ।**
**[5]त्र्यंष्टांशकेऽथास्यैकाद्याः कृष्णपक्षे [6]परास्त्यजेत् ॥ 102 ॥**

**कुम्भो मीनो वृषो वीणा मेष[7]कन्याष्टमस्तुला ।**
**धनुः कर्किमृगः सिंहो वर्ज्याश्चैत्रादिषु क्रमात् ॥ 103 ॥**

---

कार्तिके पुष्येन्द्वग्निमघाः, मार्गशीर्षे मित्रशूर्पाहिर्बुध्नितारकाः, पौषे हस्ताश्विनहराः, माघे मूलहरी, फालगुने यमसुराधिपौ चेति । पदमिता एकैकपदोदिता । पर्वतिष्ठा अमावास्यान्तावसानाः । चित्रादीति । यदा चित्रा स्वाती वा पौर्णमासीयुता [8]भवति तदा चैत्रमास इति कल्प्यः । एवं परेऽपि । षष्ठान्त्यसप्तमा मासा यथाप्राप्तैः त्रिभिस्त्रिभिर्नक्षत्रैः पौर्णमासीयुतैः कल्प्याः । एतत्सामान्यलक्षणमेव न[7]खव्यभिचारी [9]शरर्क्षादिसंख्येषु पञ्चदशसु मासेषु शुक्लपक्षे प्रतिपदाद्याः पञ्चदशतिथयः शून्याः स्युः । तेष्वेव मासेषु कृष्णपक्षे [10]द्वितीयादितिथयः शून्याख्याः । तत्रोपान्तिमे [11]पञ्चदशी प्रतिपच्च । तथा च बार्हस्पत्ये "[12]ऊ(र्जे)चतुर्दशी श्वेते कृष्णे पञ्चदशी न सत् । पौर्णमासी कुहु चैव सहे प्रतिपदत्यसत् ॥" चैत्रादिषु घटादयो यथोक्तराशयः शून्याः ।

---

1. $T_1$ मूलाहरि
2. M हरिमसुराधिपौ
3. $T_1$ शरार्क्षा
4. $T_1$ दिररुद्रा
5. M त्र्ययष्टांशके
6. M पाठः । T चरास्त्यजेत्
7. $T_1$ मेषं कल्प्याष्टमस्तुला
8. $T_1$ भवन्ति
9. $T_1$ शराखयादि
10. $T_1$ द्वित्रियदि
11. $T_1$ पञ्चमी
12. T ऊर्णे

[1]वर्ज्यास्तुलेणौ सिंहैणावुक्ष भौ कर्किधनुर्धरौ।
[2]सिंहा(ली) गुरुभौ गोऽन्त्यावोजासु तिथिषु क्रमात्॥ 104॥

धनुर्धटाज-मिथुनसिंहजूका मृतिप्रदाः।
सचतुर्था द्वितीयादियुग्मासु तिथिषु क्रमात्॥ 105॥

[3]शभैर्योगे गुणं [4]या(ति) शून्यर्क्षतिथिराशिपः।
शुभः केन्द्रत्रिकोणस्थः शून्यतारादिदोषहृत्॥ 106॥

मासशून्याह्वयास्तारा राशयो वा विषाह्वयाः।
स्वामिजीवबुधैर्दृष्टा युक्ता [5]वा स्युर्न दोषदाः॥ 107॥

लग्नस्य [6]शुभयोगत्वं [7]शुभैर्योगेति कीर्तितम्।
सार्कं नक्षत्रमन्धं स्यात्तस्मादूर्ध्वं त्रिकं त्रिकम्॥ 108॥

---

[8]धनुरादयः स्वस्वचतुर्थयुता द्वितीयादिषु द्वा[9]द(श्यन्ता)सु युग्मासु तिथिषु [10]मृतिप्र(दाः ज्ञेयाः)। तथा च बार्हस्पत्ये "द्वादश्या मृगज्ञकभौ इमे मृत्युप्रदा योगाः"? इति। प्रतिपदादिषु त्रयोदश्यन्तासु तिथिषु [11]तुले(णा)वित्यादिपठितानि राशिद्वन्दानि वर्ज्यानि। तथा च बार्हस्पत्ये "त्रयोदश्यां तु गोमत्स्यौ दग्धसंज्ञा इमे गृहाः" इति। **लग्नस्येति** पूर्वोक्तस्य विवरणम्। शुभैर्योगे गुणं यातीत्यत्र लग्नराशेः शुभग्रहयो[12]गत्वम्। पूर्वमन्धयोगप्रसङ्गात् (के[13])षाञ्चित् अभिमतम[14](न्ध)र्क्षमुक्तम्। इदानीं क्रमप्राप्तमन्धर्क्षमाह **सार्कं** नक्षत्रमिति।अर्कारूढनक्षत्रमन्धं स्यात्। तस्मादूर्ध्वगतानि नक्षत्रत्रिकाणि नव क्रमादन्धानि भवन्ति।

---

1. $T_1$ तथा M मातृकायांच "वर्ज्यास्तु-लेणौ .." इत्ययं श्लोको नास्ति
2. T सिंहालि
3. $T_1$ शुभे योगे
4. T यान्ति द्र.व्या.
5. M पा for वा
6. M तुभयोगत्वं
7. $T_1$ पाठः। T शुभयोगेति द्र.व्या.
8. $T_1$ धनुरादाय
9. T द्वादशश्चतसु
10. T मृतिप्रजा यज्ञाः
11. T तुलेनावित्यादिं
12. $T_1$ योनित्वम्
13. T तेषाञ्चित्
14. T मतर्क्षमुक्तम् for मन्धर्क्षमुक्तम्

अन्धकाणाक्षिदृक्काणदृक्दृक्काणान्धसंज्ञिताः ।
लग्नादुपचये सौम्ये स्वोच्चे [1]कोणेऽथवा शशी ।
[2]शुभकृद्वर्धमानात्मा नक्षत्रान्धत्वनाशनः ॥ 109 ॥

द्विनेत्रर्क्षोदये लग्ने [3]शु भांशे शुभकृद्विधुः ।
नक्षत्रस्यान्धतादोषं नाशयेद्बलसंयुतः ॥ 110 ॥

लग्नकेन्द्रे द्विनेत्रर्क्षे यदि सौम्यो बलान्वितः ।
चन्द्रो वा शुभकृत्पूर्णो नक्षत्रान्धत्वनाशनः ॥ 111 ॥

या [4]चोपनयने भानोः [5]स्वा(न्त्य)स्थस्यारदर्शनात् ।
गुर्वन्धतोक्ता [6]सा न स्यात् चन्द्रः शुभकरो यदि ॥ 112 ॥

लग्नार्थ[7]त्रिव्ययायस्थे लग्नेशे [8]चार्किवक्रयोः ।
द्विनेत्रर्क्षग[9]योर्वापि नाचार्योऽन्धत्वमाप्नुयात् ॥ 113 ॥

धर्मलग्नाधिपो नेत्रद्वय[10]नक्षत्रगो यदा ।
नान्ध्यं गच्छेत्तदाचार्यो यथा शम्भुप्रसादतः ॥ 114 ॥

---

(आ[11])द्यन्ते त्रिके अन्धसंज्ञे । द्वितीयपञ्चमाष्टमानि त्रिकाणि काणाख्यानि, एकलोचनानि । तृतीयचतुर्थषष्ठसप्तमानि त्रिकाणि दृष्टिद्वययुतानि । **द्विनेत्रर्क्षोदये लग्ने इति** । लग्नगतनक्षत्रस्य द्विनेत्रत्वे इत्यर्थः । अन्धनक्षत्रापवादप्रकरणे उपनयनकर्मणि गुरोः प्राप्तस्यान्धत्वस्य व्यपवादं प्रदर्शयति -**या चेति** । स्वान्त्यस्थस्य । स्वशब्देनोपनयनकाललग्नं विवक्षितम् । उपनयनलग्नात् द्वादशस्थस्य भानोः कुजदर्शनात् आचार्यस्यान्धत्वं भवति । भानोस्त्वन्त्यस्थस्येति वा पाठः । [12]तथा च माधवीये "व्ययस्थमर्कं क्षितिजोऽभिपश्यन्नाचार्यमन्धं कुरुते बलाढ्यः ।" इति । बार्हस्पत्ये च अर्कं लग्नाद्व्ययस्थं यदि भौमोऽभिपश्यति।" इति ।

---

1. M स्वार्क्षेऽथवा for कोणेऽथवा
2. M पाठः । T शुभकृद्वर्तमानात्मा
3. $T_1$ शुभान्ते
4. $T_1$ चोवनयने
5. T स्वात्यस्थस्या द्रव.व्या.
6. $T_1$ साग्न स्यात्
7. M त्री for त्रि
8. M पाठः । T शार्किवक्रयोः
9. M योश्चापि
10. M पाठः । T नक्षत्रयो यदा
11. T उद्यन्ते
12. $T_1$ तथाथ for तथा च

हस्तवस्वोर्हरैन्द्राग्न्योरहिर्बुध्न्यहिनाथयोः ।
मूलयाम्योः क्रमादाद्याद्यंशकास्तु दिनामयाः ॥ 115 ॥
सार्पबुध्न्योर्मूलयाम्योः [1A]श्रवणाज्ञेशयोस्त था ।
[2]सोमवा(य्वोः) क्रमादाद्याद्यंशका दिनमृत्यवः ॥ 116 ॥
निशि निर्दूषणावेतौ दिवापि प्रबले विधौ ।
[3]अर्कारस्थर्क्षतो मूलं यावत्तावति [4]कण्डकम् ।
स्थूणं च कण्डकस्थूणं तत्संख्याद्वयतः क्रमात् ॥ 117 ॥
कण्डकस्थूणपूर्वाणां येऽर्काराद्याश्च हेतवः ।
ते [5]स्ववर्गोच्चगाः सौम्यैर्दृष्टास्तद्दोषघातकाः ॥ 118 ॥
वन्द्यश्चन्द्रस्तनुर्दिव्यो नागो [6B]नित्यो रुरुः क्रमात् ।
अर्धप्रहारघटिका वेद्याः सूर्यादिवारतः ॥ 119 ॥

---

हस्तबस्वोरिति । क्रमादाद्याद्यंशका प्रथमस्य नक्षत्रद्वयस्य प्रथमांशकः द्वितीयस्य [7]भद्वयस्य द्वितीयोंऽशकः इत्यादि । एतौ दिनामय दिनमृत्युसंज्ञौ दोषौ । **अर्कारेति** । अर्कारूढनक्षत्राद्यावत् [8]संख्यं मूलं भवति मूलभात्तावत् संख्यं नक्षत्रं कण्डकसंज्ञं भवति । भौमारूढनक्षत्रात् [9]यावत्संख्यं मूलभं, मूलभात् तावत्संख्यं नक्षत्रं स्थूणसंज्ञं भवति । पुनरर्कारूढमूलभान्ता [10]संख्या यावती भौमारूढमूलभान्ता संख्या च यावती, मूलभात् तत्संख्याद्वययोगमितभं नक्षत्रं कण्डकस्थूणसंज्ञं भवति । अर्धप्रहारघटिकामाह - वन्द्य इति । बन्द्यः चतुर्दशीघटिका । चन्द्रः षड्विंशी घटिका । एवं सर्वत्र घटिका वेद्याः । माधवीये तु अत्रोक्तघटिकाश्रिता यामाः प्रदर्शिताः । "अर्धप्रहारमरुणादि दिनेषुवेदशैलाक्षिबाणवसुवह्नि[11]गुहा(नं)शान्" [12]इति । अरुणोर्कः अंशो दिनाष्ट [13]भा(गः) ।

---

1. M श्रवणोत्तरयोस्त था
2. T सोमवायोः
3. M अर्कारस्वर्क्षतो
4. M कण्टकः
5. $T_1$ स्ववर्गोध्यगः
6. $T_1$ पाठः ।T दित्यो गुरुः क्रमात् for नित्यो रुरुः क्रमात्
7. $T_1$ भद्वयस्य इति ग्रन्थपातः
8. $T_1$ संज्ञ for संख्यं
9. $T_1$ यावत्संज्ञं
10. $T_1$ संख्यायाः वति
11. T गुहान्नाशान्
12. $T_1$ इतः for इति
13. T भागं

---

A अत्र M पाठोऽपि साधुर्वा ।
B अत्र माधवीयवचनानुसारेण नित्यो तथा रुरुः इति $T_1$ पाठः स्वीकृतः ।

**नार्धप्रहारदोषोऽस्ति लग्नेऽर्के च बलान्विते।**
**दिव्यो वन्द्यो नयस्तज्ज्ञैः प्राज्ञश्चन्द्रो नगः क्रमात्।**
**यमकण्टकना[1]ड्यः स्युर्वर्ज्याः सूर्यादिवारतः ॥ 120 ॥**

**यमकण्टकहृत्सौम्यो लग्नकेन्द्रत्रिकोणगः।**
**तथोपचयगश्चन्द्रः [2]सुकर्मा शुभवीक्षितः ॥ 121 ॥**

**तद्राशित्रयमर्केण युक्तं मुक्तं च काङ्क्षितम्।**
**सर्वकर्मसु वर्ज्यं स्यात् ज्ञार्यशुक्रोदये शुभम् ॥ 122 ॥**

**ग्रहयुक्तं [3]सपार्श्वर्क्षं त्यजेत् [4]ग्रहणभं तथा।**
**वक्रश्चास्तमयो युद्धं ग्रहाणां येषु तान्यपि ॥ 123 ॥**

**[5]त्रिमासक्षणषण्मासत्रिदिनाब्दैः कुजादिभिः।**
**युक्त भं प्रकृतिं [6]याति विंशत्यर्कहतैर्दिनैः ॥ 124 ॥**

---

एवं दिव्य इत्याद्युक्तयमकण्टकेऽपि नाडिका वेद्या। ग्रहयुक्तं सपार्श्वर्क्षमित्यत्र ऋक्षं नक्षत्रम्। यस्मिन् नक्षत्रे ग्रहणं तत् ग्रहण भम्। ग्रहण भस्य ग्रहणानन्तरमेव दोषदत्वं, न तु वै[7]धृतादिवत् प्रागपि। तथा च बार्हस्पत्ये "पश्चादेवोपरागेण दोषः स्यान्नैव पूर्वतः। गृहदाहादयो दोषाः यथा स्यु(र्द)[8]हनात् परम्॥" इति। यस्मिन्नक्षत्रे ग्रहाणां वक्रारम्भः स्यात्, यस्मिन् नक्षत्रे ग्रहाणां मौढ्यारम्भश्च ग्रहयुद्धं च यस्मिन् नक्षत्रे स्यात् तानि नक्षत्रणि वर्ज्यानि। तथा माधवीये "यस्मिन्नस्तमयन्ति वक्रगमनं यत्रारभन्ते [9]ग्रहाः", यस्मिन् देवमहोत्सवाश्च विविधोत्पाताश्च [10]तं वासरम्।" इति। ग्रहयोगे दुष्टमृक्षं ग्रहे तस्माद्गते पुनस्त्रिमासादिकाले [11]प्रकृ(तिं) याति। अर्कहतमर्कयोगे दुष्टम्।

---

1. $T_1$ नाड्याः
2. $T_1$ सकर्मा
3. $T_1$ स्वपार्श्वर्क्षं द्र.व्या.
4. T ग्रहणामु
5. $T_1$ त्रिभास°
6. $T_1$ यान्ति
7. $T_1$ चै धृतावत्
8. T दुहनात् परं
9. $T_1$ ग्रहाः इति ग्रन्थपातः
10. $T_1$ संवत्सरं for तं वासरं
11. $T_1$ प्रकृतं

चन्द्रशुक्रसमायोगादुडूनि शुभतां ययुः । ½ ।
[1]गुरुशुक्रौ यदा मूढौ यदा चान्योन्यवीक्षितौ ।
यदा चाह्नि [2]जनैर्दृश्यौ तदा कर्म शुभं त्यजेत् ।। 125 ।।
संसर्पांहस्पतीमासावधिमासश्च [3]निन्दिताः ।
अमी न सन्ति [4]षड्दोषा अनब्दोक्तेषु कर्मसु ।। 126 ।।

---

चन्द्रेति । उडु[5]शब्देनाश्विन्यादिज्यो[6](तीं)ष्युक्तानि । चन्द्रेण शुक्रेण वा युक्ते उडुनि दग्धं ऋक्षं शुभं भवतीत्यर्थः । तथा च माधवीये "[7]ऋक्षस्य दग्धस्य च दाहकस्य ग्रहस्य मध्ये [8]विचरन् हिमांशुः" इति । ताराचन्द्रयोः [9]समागमे सञ्जाते शुभं भवतीत्यर्थः । बार्हस्पत्ये तु ग्रहादिभिः दुष्टमृक्षं [10]षण्मासा(त्) स्वभावं यातीत्युक्तम् । अत्र निरूप्यते - "ग्रहैरनिन्द्विन्दुज भार्गवैर्यन्मुक्तं च युक्तं यियासिकं च । क्रमेण दग्धं ज्वलितं तदृक्षं धूमायमानं च शुभेषु जह्यात्" । इत्येवं बहुशास्त्रेषूक्तम् । तत्र ऋक्षशब्देन राशौ गृहीते सति गुरुयुक्तराशे[11]र(पि) त्याज्यत्वं स्यात् । तथा "भास्वमन्दाचार्यभौमैर्गृहं यद्दग्धं भूयस्तत्प्रयाति स्वभावं । मासादब्दाद्वत्सरार्धात्तदर्धात् [12]राहूत्पातास्तापवाद्यैश्च दुष्टं" इत्येवं दग्धराशेरपवादश्च शास्त्रेषूक्तः । कोऽत्राभिप्रायः शास्त्रकृतमिति । अत्र केचिदाहुः । ज्वलितत्वं धूमायमानत्वं च ताराया [13]ए(व) स्यात् । दग्धत्वं तु राशेरपि भवति । तत्सिद्धयेऽपवादविधौ राशिग्रहणं कृतमिति अन्ये ब्रुवते । ताराया राश्यवयवत्वाद्राशिग्रहणं कृतम् । अतो ग्रहमुक्तराशेरपि दग्धताराभावे दग्धत्वं भवति इति । राहूत्पातेत्यत्र राहुशब्देनोपराग उक्तः । दोषानाह- **गुरुशुक्राविति** । अनब्दोक्तेषु दिनविहितेषु मासविहितेषु [14]चेत्यर्थः ।

---

1. $T_1$ गुरुशुक्रो
2. $T_1$ दिने दृश्यों for जनैर्दृश्यौ
3. $T_1$ निन्दितौ
4. M षं दोषा
5. $T_1$ °शब्देनाश्चिन्यादि
6. T ज्योतिष्युक्तानि
7. $T_1$ वृक्षस्य
8. $T_1$ विचिरन्
9. $T_1$ समं गमे
10. T षण्मासान्
11. T रवि for रपि
12. $T_1$ पाठः । T रा भूत् पाता
13. T एवं
14. $T_1$ वेत्यर्थः

प्रियः सौम्यो लयः पूज्यो धनी मान्यः शशाङ्कतः ।
प्रियः सौम्यो लयः पूज्यो धनी मान्यः शशाङ्कतः ।
एतेभ्योऽन्तरगाः [1]सूर्यादस्तगाः किल ते ग्रहाः ॥ 127 ॥

प्रागुद्गतः शिशुरहस्त्रितयं [2]सितः स्यात्
पश्चाद्दशाहमिह पञ्चदिनानि वृद्धः ।
प्राक्पक्षमेवं [3]कथितोऽत्रिवसिष्ठमुख्यै -
र्जीवस्तु [4]पक्षमिह वृद्धशिशू विवर्ज्यौ ॥ 128 ॥

उक्तकालार्धतोऽन्ये तु शैशवादि जगुर्बुधाः ।
गोंऽशस्थो गोगतो [5]वा(च्छो) गुरुदर्शनदोषहृत् ॥ 129 ॥

प्राह्णसायाह्नयो[6]र्मध्यकालोऽत्राह्नि[7]पदोदितः ।
[8]आद्यन्त्यौ त्रिमुहूर्तौ तु प्राह्णसायाह्नशब्दितौ ॥ 130 ॥

---

**प्रिय** इत्यादयश्चन्द्रादिमन्दान्तानामंशकाः । एतेभ्योंऽशकेभ्यः सूर्यादूर्ध्वाधो गतेभ्यो अन्तरगाः मध्यं गताः ग्रहाश्चन्द्रादयोऽस्तगाः मौढ्यं प्राप्ताः स्युः । किलेति उक्तविधेः स्थौलयसूचनार्थम् । शुक्रजीवयोर्बाल्याकालं [9]वृद्धताकालं चाह-**प्रागिति** । पूर्वस्यां दिशि मौढ्यनिवृत्तौ दृश्यमानः शुक्रो दिनत्रयं बालो भवति । पश्चिमदिङ्मौढ्यनिवृत्तौ दृश्यमानो दशदिनानि बालो भवति । इह पश्चिमदिशि मौढ्यारम्भात् प्राक् दृश्यमानः पञ्चदिनानि [10]वृद्धो भवति । पूर्वस्यां दिशि मौढ्यारम्भदिनात् प्राग्दृश्यमानः पक्षं पञ्चदशदिनानि वृद्धो भवति । [11]एवमत्रिवसिष्ठमुख्यैः कथितः शुक्रः । जीवस्तु[12]पञ्चदशदिनानि वृद्धो बालश्च भवति । अस्य न हि [13]दिग्भेदः । वृद्धशिशुशुक्रजीवौ शुभकर्मसु वर्ज्यौ भवतः । गुरुदर्शनदोषहृत् । स्वस्वगुरुदर्शनेन जातं परस्परदृश्याख्यं दोषं यथोक्तः शुक्रो हरतीत्यर्थः । यदा चाह्निजनैरित्यत्राह्निशब्देन प्राह्णसायाह्नयोर्मध्यकाल उक्तः । आद्यः षण्णाडिकाः प्राह्णकालः, अन्त्याः षण्णाडिकाः सायाह्नकालः ।

---

1. M पाठः । T सूर्यदस्नगाः द्र.व्या.
2. $T_1$ स्थितः स्यात्
3. कथितोऽत्र वसिष्ठ
4. $T_1$ वक्षमिह
5. T वाच्छे
6. $T_1$ तथा M र्मध्यो कालो.
7. $T_1$ वदोदितः
8. $T_1$ आद्यान्तौ
9. $T_1$ वृद्धकालं
10. $T_1$ मुद्धो
11. $T_1$ एवमत्र वसिष्ठं°
12. $T_1$ पञ्चदिनानि for पञ्चदशदिनानि
13. $T_1$ दिग्भिदः

**अथाधिमासविचारः ॥**

**द्विपर्वयुक्सौरमासः संसर्प इति कीर्तितः ।**
**एकेनापि विहीनस्तु पर्वणांहस्पतिः स्मृतः ॥ 131 ॥**

**रविमध्यमसङ्क्रान्त्योर्मध्ये मध्यसमागमौ ।**
**चन्द्रार्कयोर्यदि स्यातां तदा स्यादधि[1]मासकः ॥ 132 ॥**

**सत्यात्मा वेदशायीति हीनात्त्रिघ्नाद्दिनाद्धृते ।**
**[2]यथाधीरै र्भवन्त्येते स्तम्भकाब्दे च नाडिकाः ॥ 133 ॥**

**इति ज्योतिर्विदः केचिदाहुरन्येऽन्यथाब्रुवन् । ½ ।**

---

संसर्पांहस्पमीत्याह - [3]**द्विपर्वयुगिति** । यस्मिन् स्फुटसौर[4]मासे स्फुटामावास्यान्तद्वयं भवति स मासः संसर्प इति । क्रीड्यन्तराले चन्द्रार्कयोः मध्यसमागमौ भवतः द्विवारं मध्ययोगः इत्यर्थः । तदा अधिमासः स्यात् । तस्मिन् मासे अधिमासो जायते इत्यर्थः । अथ अहर्गणेनाधिमासानयनमाह - **सत्यात्मेति** । कलिदिवसगणात् सत्यात्मावेदशायीति विशोध्य शिष्टं त्रिभिर्निहत्य यथाधीर इत्यनेन विभजेत् ।तत्र लब्धा अतीताधिमासाः भवन्ति । शेषात् [5]त्रिंशद्गुणितात् पूर्वहारेण दिनादयश्च भवन्ति । खण्डशेषे यावन्तोऽब्दाः स्युस्ते[6]भ्यस्तम्भक इत्यनेन विभज्य लब्धा नाडिकाश्च वर्तमानाधिमासावयवे क्षे[7](प्याः)स्युः । एवमानीतोऽधिमासो यस्मिन् मासे पूर्णो भवति स मासोऽधिमासः इत्यर्थः । अयं विधिः शकाब्दहीनस्ततो नौसिद्धाते[7] कालात् किञ्चिदूर्ध्वकालेधिमासपूर्ती वेद्येति सम्प्रदायविद्भिरुक्तम् । गणितयुक्त्या च तथैव भवति । एवं वा क्रियतां - "गाथादानं शताङ्कं त्यजतु दिनगणात्मके तु तुल्याविनाडी, [8]भूयः शेषे पृथक्स्थे नटयवफलिनी भक्तमेकं विशोध्य । अन्यस्माद्रोहतं तत्पथिधरविहृतं मासि यस्मिन्निरग्रं,तस्मिन् मध्यार्कसिद्धेऽखिलशुभकृतिहा जायते सोऽधिमासः ॥" इति ।

---

1. M पाठः । T मासतः
2. $T_1$ यथासीरैः द्र.व्या.
3. $T_1$ द्विपर्ययुगिति
4. सौरमासेषु
5. $T_1$ त्रिंशद्गुणिताः
6. $T_1$ तेभ्यस्तम्सक
7. T क्षेवाः
8. $T_1$ भूयो

**[1]मेषा(द्ये)कैकराशिस्फुट[2]गतिदिनकृत्सङ्क्रमेकैकगर्भा-**
**-श्चान्द्राश्चैत्रादिमासा इह नयदुदरे [3]सङ्क्रमः सोऽधिमासः ।**
**संसर्पश्चांहस्पतिरुपरि यदिस्याद्ग्रस्तसङ्क्रान्तियुग्म-**
**-स्तौ [4]चाब्दाङ्गर्तु भूतौ सहसुचिरभवौ [5]सोऽधिमासोऽत्र पश्चात् ॥134॥**
**अर्केन्दुस्फुटतः सिद्धास्त्रयो मासा मलिम्लुचः ।**
**शुभं कर्म न कुर्वीत ज्योतिष्ठोमादिगाः क्रियाः ॥ 135 ॥**

---

एवं एतेषां ज्योतिर्विदां मतं प्रदर्श्य पुनरन्येषां मतं प्रदर्शयति-**मेषादिति**। मेषाद्येकैक-राशौ स्फुटगत्या दिनकृतो ये सङ्क्रमास्ते मेषाद्येकैकराशिस्फुटगतिदिनकृत्सङ्क्रमाः । तेषामेकैकगर्भा ये चान्द्रमासास्ते चैत्रादिसंज्ञाः स्युः । एतदुक्तं भवति-स्फुटार्कस्य मीनमेषप्रवेशे यः सङ्क्रमः स यस्मिन् चान्द्रमासे भवति स चैत्राख्यः । यस्मिन् पुनर्वृषप्रवेशे यः सङ्क्रमः स वैशाखाख्यः । एवं [6]परेऽ(पी)ति । इह चान्द्रमासेषु यस्योदरे मध्ये सङ्क्रमो न सम्भवति सोऽधिमासाख्यः । एवं स्फुटामावास्यांतयोर्मध्ये सङ्क्रमस्य शून्यताधिमासलक्षणम् । यस्तु चान्द्रमासो ग्रस्तसङ्क्रान्ति[7]युग्मः स्यात् यस्य चान्द्रमासस्य मध्ये सङ्क्रान्तिद्वयं भवतीत्यर्थः । स मासोंऽहस्पती स्यात् । एवंमंहस्पतिलक्षणम् । संसर्पः स्यात् चांहस्पतिरुपरि यदीति । स चाधिमास इत्युक्तो मासस्योपरि [8](क)स्मिंश्चिदासन्ने मासे अंहस्पति र्भविष्यति चेत् संसर्पाख्यः स्यात्, न तु तस्याधिमासाख्या [9]संसर्पेण बाधितत्वात् । तौ चाब्दाङ्गर्तुभूतौ संसर्पांहस्पती अबदाङ्गस्य ऋतोखयव भूतावित्यर्थः । अधिमासस्तु ऋतोरवयवो [10]न स्यात् । सह सुचिर भवौ संसर्पे जाते पुनरंहस्पतिर[11](पि) भवत्येव । यस्मिन् वर्षे [12]जातौ तस्माद्बहुषु वर्षेषु गतेष्वेव पुनस्तौ सम्भवतः । सोऽधिमासोऽत्र पश्चादिति । अंहस्पतेः सद्भावे पूर्वत्र प्राप्तोऽधिमासः पश्चाद्भवति अंहस्पतेरूपरि कुत्रचिदधिमासश्च भवतीत्यर्थः । अत्र ग्रन्थान्तरमाह-**अर्केन्द्विति** । संसर्पांहस्पत्यधिमासास्त्रयो मासा अर्केन्दुस्फुटतः सिद्धाः, स्फुटामावास्यान्ता इत्यर्थः । ममिम्लुचः, मलिम्लुक् संज्ञा मलामासाख्याश्च भवन्ति । [13]तेषु शुभं कर्म न कुर्वीत । ज्योतिष्ठोमदिक्रियाश्च न कुर्वीत।

---

1. T मेषाद्यैकैक द्र.व्या.
2. $T_1$ गतिर्दिनकृत्
3. M सङ्क्रमस्योधिमासः
4. $T_1$ चार्ताङ्गर्तुभूतौ
5. $T_1$ पाठः । T सोऽपिमासोऽत्र द्र.व्या.
6. T परे प्रीति
7. $T_1$ युग्मं
8. T तस्मिंश्चित्
9. $T_1$ सासर्पेण
10. $T_1$ तः स्यात् for न स्यात्
11. T रवि for रपि
12. $T_1$ तौ for जातौ
13. $T_1$ "तेषु" इत्यारभ्य ततस्तृतीयपङ्क्तिगात "भनन्ति" पर्यन्तं मातृकाया नास्ति

**रवीन्दुशुद्धस्फुटतोऽधिमासाः शुभेषु [1]कर्मस्वतिगर्हिताश्च।**
**मध्यप्रचारेण वदन्ति केचिन्न साधु तत्तत्र वदामि हेतुम्॥ 136 ॥**
**शास्त्रेषु तावद्ग्रहमध्यमेन [2]कर्माणि नोक्तानि तदर्थविद्भिः।**
**[3]अन्येऽधिमासा रविचन्द्र(म)ध्याद्वदन्ति कर्माण्यपि राममध्याः ॥137॥**

**सिनीवाल्यावतिक्रम्य यदा सङ्क्रमते रविः।**
**अधिमासः स विज्ञेयः सर्वकर्मसु गर्हितः॥ 138 ॥**

---

पुनरप्याह-रवीन्द्वोः केवलात् स्फुटात् अधिमासाः भवन्ति। स्फुटपर्वान्तयोर्मध्ये स्फुटसङ्क्रान्त्यभावे स्फुटामावास्यान्तावधिकः अधिमासः स्यादित्यर्थः। केचिद्रवीन्द्वोः मध्यप्रचारेणाधिमासं नदन्ति। तन्न साधु, यतो ज्योतिश्शास्त्रेषु तदर्थविद्भिः [4]ग्रहमध्यमेन कर्माणि नोक्तानि। **सिनीवाल्याविति** च ग्रन्थान्तरमेव। इह गोविन्दाचार्येण पक्षद्वयं प्रदर्शितम्। तयोः पक्षयोः समता चानेनाचार्येण कृता। यतो द्वावप्यनेनाहतौ। तथा हि प्रथमं रविमध्यमेत्यनेनाधिमासलक्षणं प्रदर्श्य पुनः सत्यात्मेत्यनेन तत्परिज्ञानाय लघुकर्म च प्रदर्शितम्। तथा इति ज्योतिर्विदः इत्यनेन चोक्तम्। तत्र [5]ज्योतिर्विदः इत्यनेन पदेन तथावादिनां प्रशंसा च कृता। अन्यथा केचिदित्येव अवक्ष्यत्। द्वितीयपक्षस्तु बहुधा प्रदर्शितः। किञ्च शास्त्रकारा हि स्वकीयशास्त्रे स्वाभिमतमेकमेवाधिमासं प्रदर्शितवन्तः। न तु द्वितीयम्। इहानेन तु उभयमपि प्रदर्शितम्। तेन चोभयत्र समता दर्शिता। येन पुनरुक्तं मध्यप्रकारेण वदन्ति केचिन्न [6]साध्विति बह्वाचार्यमतनिराकरणवादिनं तं प्रति किञ्चित् ब्रूमः। एवं हि विद्यामाधवः "संसर्पो रविमासदर्शयुगलं पूर्णाद्वयं वास्ति चेत् तस्मिन् पौष्णयुगं [7]भवेद्यदि विदुस्तं केचिदंहस्पतिम्। अर्केन्द्वोर्यदि मध्ययोगयुगलमध्येऽर्कमध्योत्थयोः सङ्क्रान्त्योरधिमास एष इति ते मासास्त्रयो निन्दिताः॥" इति। [8]पू(र्णा)द्वयेनापि संसर्पो भवतीति कैश्चिदुक्तम्। सूर्यदेवेनाप्युक्तं "मध्यमरविसङ्क्रान्त्योर्मध्ये

---

1. $T_1$ कर्मः स्वतिगर्हणीघः
2. $T_1$ कर्मणि
3. इयं पङ्क्तिः M मातृकायां नास्ति।
4. $T_1$ गृहमध्यमान
5. $T_1$ "ज्योतिर्विदः" इति द्विवारं लिखितम्
6. $T_1$ साधुदिति for साध्विति
7. $T_1$ भवेद्यति
8. T पूर्णद्वयेन

मध्यार्कचन्द्रयोगौ चेत् अधिमासः; संसर्पः स्फुटयोरंहस्पतिश्चेन्न ।" इति । तथा चाष्टकाव्याख्याकृन्मध्ये "मध्यार्कसङ्क्रान्त्योर्मध्यामान्तद्वयं यदि । अधिमासोऽथसंसर्पः [1]स्फुटैरं(ह)स्तथानमः ॥" इति । अंहोंऽहस्पतिः । अनमो [2]अमारहितः । तथा चास्मदाचार्यः "तथा हि केदारनृपाधिजोद्भवः प्रभावनास्तिक्य[3]जिनेन्द्रसंयुतः । विलिप्तिकाद्योऽयमिनस्य मध्यमो यद्राशिगोऽसावधिमास [4](ई)रितः" ॥ इति । अस्यायमर्थः - तथा हि केदारनृप इति विलिप्तिकादिकोऽर्कमध्यमः । धिजोद्भव इति तस्यातीता भगणाः । एवं विधोऽर्कमध्यमो यदा भवति तदाधिमासः स्यात् । प्रभावनास्तिक्यजिनेंद्रिय इत्ययं च विलिप्तिकादिकोऽर्कमध्यमः । तस्यातीतौ भगणौ विलिप्तादि भगणान्तोऽयमर्कमध्यमोऽधिमासद्वयान्तरालकालनिष्पन्नः स्यात् । अतस्तेन युते पूर्वाधिमासकालजेऽर्कमध्यमे [5]द्वितीयाधिमासकालजोऽर्कमध्यमो भवति । पुनस्तस्मिन्नपि प्रभाव नास्तिक्यजिनेन्द्रसंयुते तदूर्ध्वाधिमासकालजोऽर्कमध्यमः स्यात् । एवमर्कमध्यमवशादधिमासो वेद्य[6] इति । तथा च पूर्वाचार्यः "अब्दौ द्वावष्टमासाश्च सावनाहानि षोडश । नाड्यश्चातिधृतिमिता अधिमासान्तरस्फुटम् ॥ इत्येवं बहुभिराचार्यैरधिमासः प्रकीर्तितः । "कथं शास्त्राविरुद्धत्वं कल्प्यते तस्य पण्डितैः । स्फुट एव ग्रहः [7]कर्मयोग्यः स्यान्नतु मध्यमः ॥ इति [8]युक्तिर्गृहीता या साधिमासे न युज्यते । स्फुटस्य साधनत्वेन गृह्यते ग्रहमध्यमः ॥ तथाधिमासयोर्यस्मात् सम्बन्धो न प्रदर्श्यते । प्रसिद्धा ये च षष्ट्यब्दाः शास्त्रेषु प्रभवादयः ॥ मध्यचारे हि शास्त्रेऽपि जायन्ते हि बृहस्पतेः । मध्यचारेण कालोक्तिरतः शास्त्रे न दुष्यति ॥ द्विधोक्तौ हेतुरन्यः स्यात् न तु मध्यो न च स्फुटः । त्रयस्त्रिंशद्दिनैरेको भवेदधिकवासरः ॥ त्रिं[9]शद्गुणै(स्तै)र्दिवसैरधिमासश्च जायते । [10]यस्मिन् क्षणे सोऽधिमासः पूर्णः स्यातत्क्षणान्वितः ॥ मासोऽधिमास [11]इत्युक्तो यथा सङ्क्रान्तिवासरः । अधिमासः

---

1. T स्फुटैरङ्गस्तथां
2. $T_1$ अमाप्ररहितः
3. $T_1$ जितेन्द्र for जिनेन्द्र
4. T रंरितः for ईरितः
5. $T_1$ द्वितीयोऽधिमास
6. $T_1$ चेद्य इति ।
7. $T_1$ कर्मायोग्यः
8. $T_1$ बुद्धिः for युक्तिः
9. T त्रिंशद्गुणैतै
10. $T_1$ तस्मिन्
11. $T_1$ इत्युक्ता

## अथ तिथ्यादिदोषाः ॥

उदयद्वितयस्पर्शी तिथिस्त्रिस्पृगुदाहृतः ।
तिथिक्षयो [1]द्वयास्पर्शी द्वौ च निन्द्यौ सुकर्मणि ॥ 139 ॥
नन्दा भद्रा जया रिक्ता पूर्णा [2]चैव पुनः पुनः ।
तिथयः प्रतिपत्पूर्वा रिक्तोर्ध्वास्योदये शुभा ॥ 140 ॥
वेदर्तुवसुरन्ध्रार्क[3]शक्राख्यतिथिषु त्यजेत् ।
अङ्काङ्कमनुतत्वाशा शराख्या आदितो [4]घटीः ॥ 141 ॥
दिग्भेषु [5]मध्यमः स्तम्भस्त[6]दूर्ध्वा(ध)स्त्रिकौ घटौ ।
यत्रार्कः स घटो रिक्तः पूर्णोऽन्यः स्तम्भ एव च ॥ 142 ॥

---

कालजोऽत्र क्षेत्रजो पर [उच्यते] ॥ क्षेत्रजस्य गतिर्वकत्रो स्यादृक्जीकालजस्य तु? एवं कालक्षेत्रभेदादाचार्यैः स द्विधोदितः ॥ शास्त्रैकदेशश्रवणादत्र मुह्यन्ति ये द्विजाः । तेषां मोहनिवृत्यर्थं व्याख्यातमिह विस्तरात् ॥'' इति । **उदयद्वितयेति** । उदयात् [7]पूर्वमारब्धा पुनरुदय[8]मतीत्यावसन्ना तिथिरुदयद्वितयस्पर्शी । उदयमतीत्यारब्धः पुनरुदयात् पूर्वमेवावसन्नः तिथिक्षय इत्युच्यते । ऊर्ध्वास्यः ऊर्ध्वमुखराशिः । वेदर्त्वादयश्च[9]तुर्थीषष्ठ्यादयः । तासु अङ्काङ्कादिमिता नाडिका आदौ विशेषा(त्) त्याज्याः । [10]षष्ठीद्वादश्योरपि निषिद्धतापवादप्रदर्शनात् सिद्धाः । [11]**दि(ग्भे)ष्विति** । कृत्तिकादीनि सप्त प्राच्याम् । मघादीनि सप्त दक्षिणस्याम् । [12]मित्रभादीनि सप्त प्रतीच्याम् । वस्वादीनि सप्त च उदीच्यां स्थितानि । तासु मध्यतारा आर्द्राहस्ताषाढबुध्न्याख्याः स्तम्भसंज्ञाः स्युः । स्तम्भस्योर्ध्वगतं भत्रिकं घटसंज्ञम् । स्तम्भस्याधः स्थितेऽर्के [A]चतुर्ष्वपि दिक्षु स्तम्भस्याधःस्थितं भत्रिकं रिक्तसंज्ञं भवति । शिष्टानि भानि पूर्णानि । स्तम्भस्योर्ध्वस्थिते भत्रिके स्थितेऽर्के चतुर्ष्वपि दिक्षु स्तम्भस्योर्ध्वगतं भत्रिकं रिक्तसंज्ञं भवति । शिष्टानि भानि पूर्णानि ।

---

1. M द्वयाः स्पर्शो
2. M चेति
3. $T_1$ शर्काख्य
4. $T_1$ घटिः
5. $T_1$ मध्यमं
6. T तदूर्ध्वार्धस्त्रिकौ
7. $T_1$ पर्वमारब्धा
8. $T_1$ मतिमात्या
9. $T_1$ चतुर्क्षी
10. $T_1$ षष्ठीद्वादशयोरपि
11. T दिभेष्विति द्र.मू.
12. $T_1$ मित्र भादीदीनि

---

A. सर्वत्र दिक्शब्दस्य चतुर्ष्विति पुल्लिङ्गे विशेषणं प्रयुक्तं विद्यते ।

[1]उ(द्यन्त्र)क्षत्र पूर्णत्वं रिक्तादोषविनाशकृत् ।
विवाह भुक्तिभूषासु दीक्षितानां च मुण्डने ।
बीजादिवापने चापि न निन्द्या पूर्णिका तिथिः ॥ 143 ॥
[2A]पूर्णिकेति पौर्णमासी ॥

कृष्णाष्टमीं प्रशंसन्ति बुधाः केचित् करग्रहे ।
स्वबलाद्ग्रहराश्यादि तिथ्यादि शशिनो बलात् ॥ 144 ॥

अधमं मध्यमं मध्यं मुख्यं [3]मध्यं महाफलम् ।
विंशतिस्थिथयो मुख्याः शुक्लप्रतिपदादयः ॥ 145 ॥

मध्यमाः परतः पञ्च [4]पञ्च ताः परतोऽधमाः।
सदसत् वर्गपौष्कल्यं भूतत्वशलोक ईरितः ॥ 146 ॥

भूतत्वरसतत्वांशाः [5]स्वत्रिकोणेऽजसागरे ।
निन्दिताः पुष्कराः शस्ताः समिन्मनुजिनाचलाः ॥ 147 ॥

---

एवं चतुर्ष्वपि दिक्षु रिक्तानि भानि पूर्णानि भानि च सम्भवन्ति । स्तम्भ एव चेति । [6]स्तम्भ(स्थे)ऽर्के चतुर्दिक्षु स्तम्भ एव रिक्तः स्यात् । [7]ऊर्ध्वघटाधोघटाश्च पूर्णा इत्यर्थः । पूर्णिका पौर्णमासी । स्वबलादिति । ग्रहराशितदंशानां स्वबलात् गुणाधिक्यं भवति । तिथिकरणनक्षत्रणां चन्द्रबलात् गुणाधिक्यं भवतीत्यर्थः । सदसदिति । [8]भूतत्वेत्यादिश्लोकेन मेषवृषमिथुनकर्कटकानां स्वत्रिकोणसहिनां ये पुष्करांशाः निन्दिताः इत्युक्तास्तेषां [9]पापवर्गपौष्कल्यान्निन्दितत्वं तथा मेषादीनां चतुर्णां [10]स्वत्रिकोणसहितानां ये पुष्करांशाः [11]शस्ताः इत्युक्तास्तेषां शुभवर्गपौष्कल्यात् शुभत्व-मित्यर्थः । तत्वानि पञ्चविंशतिः । पञ्चविंशोऽशः । रसः षष्ठः अंशः । जिनश्चतुर्विंशतिः ।

---

1. T उद्यं नक्षत्रं
2. $T_1$ पौर्णिकेति
3. M मुख्यं for मध्यं
4. $T_1$ पञ्चा धः for पञ्च ताः
5. $T_1$ सत्रिकोणे, M स्यात्रिकोणे द्र.व्या.
6. T स्तम्भस्तेऽर्के
7. $T_1$ ऊर्ध्वघटाश्च for ऊर्ध्वाधोघटाश्च
8. $T_1$ तत्वेत्यादि for भूतत्वेत्यादि
9. $T_1$ पाववर्ग
10. $T_1$ सत्रिकोण
11. $T_1$ शान्ताः for शस्ताः

---

A. अत्र "पूर्णिकेति पौर्णमासी" इति ग्रन्थकर्त्रा स्वप्रयुक्तशब्दसन्देहे क्लिष्टत्वनिवारणाय व्याख्या कृता ।

## अथ षड्वर्गादिविचारः ॥

[A]द्रेक्काणहोरानवभागसंज्ञास्त्रिंशांशकद्वादशसंज्ञिताश्च ।
क्षेत्रं च यद्यस्य तदस्य वर्गो होरेति लग्नं भवनस्य चार्धम् ॥ 148 ॥

[B]क्षितिजसितज्ञचन्द्ररविसौम्यसितावनिजाः
सुरगुरुसौरिमन्दगुरवश्च गृहांशकपाः ।
अजमृगतौलिचन्द्र भवनादिनवांशविधि-
र्भवनसमांशकाधिपतयः स्वगृहात् क्रमशः ॥ 149 ॥

[C]कुजरविजगुरुज्ञशुक्रभागाः पवनसमीरणकौर्पिजूकलेयाः ।
अयुजि युजि तु ते विपर्ययस्थाः [1]शशि भवनालिझषान्तमृक्षसान्धिः ॥ 150 ॥

---

यस्य ग्रहस्य ये द्रेक्काणादयस्ते तस्य वर्गाः । तत्रार्केन्द्वोरेव होरा स्यात् । कुजादीनामेव त्रिंशांशाः । सप्तांशश्च वर्गो भवति । होरेति लग्नस्य संज्ञा, राश्यर्धस्य च होरेति संज्ञा भवति । क्षितिजादयो मेषादीनां राशीनां, मेषादिसंज्ञितानां नवांशानां, द्वादशांशानाम्, [2]सप्तांशका(नां) चाधिपतयः । मेषवृषमिथुनकर्कटकेषु स्वत्रिकोणयुतेष्वजमृगतौलिकर्कटाद्याः नव नवांशकाः स्युः । भवनसमांशकाः द्वादशांशकाः, तदधिपतयश्च स्वगृहात् तत्तद्राशेः क्रमशो वेद्याः । मेषे मेषादयो द्वादशांशास्तदधिपतयश्च [3]क्षितिजादयः इत्यादि । ओजराशौ कुजरविजगुरुज्ञशुक्राणां पञ्चानां भागाः पवनसमीरणकौर्पि[4]जूकलेयमिताः स्युः । कौर्पिरष्टौ । जूकः सप्त । लेयः पञ्च । राशिसंज्ञयात्र संख्याव्यवहारः । युजि युग्मराशौ । ते विपर्ययस्थाः अंशकाः ग्रहाश्चोत्क्रमेण कल्प्या इत्यर्थः । शुक्रज्ञगुरु[5]रविजकुजानां क्रमेण भागाः [6]पञ्चसप्ताष्टपञ्चपञ्चमिता इति । कर्काटकवृश्चिकमीनानामन्त्योऽशकः ऋक्षसन्धिसंज्ञः । अंशो नवांशः ।

---

1. $T_1$ शशिपवनालि
2. T सप्तांशकान्
3. $T_1$ सितादयः for क्षितिजादयः
4. $T_1$ ज्ञका for जूक
5. $T_1$ रवि for रविज
6. $T_1$ पञ्चमपञ्चाष्ट

---

A. वराहमिहिरस्य श्लोकास्तथैवोद्धताः । द्रष्टव्यं बृहज्जातकं प्रथमाध्याये नवमः श्लोकः ।
B. बृहज्जातके प्र.अ. - 6.
C. बृहज्जातके प्र.अ. - 7.

[A]क्षितिसुतरविगुरुसौरा भृगुबुधभार्गवशनैश्चराः सबुधाः ।
[1]सोमाङ्गारकजीवा द्रेक्काणगणेश्वराः प्रोक्ताः ॥ 151 ॥

[2]अर्केन्द्वोर्विषमे राशौ चन्द्रभान्वोः समे गृहे ।
होराधिपत्यं सप्तांशस्थिति[3]र्मेषालियुग्मतः ॥ 152 ॥

मृगतः सिंहतो मीनाज्जूकोक्षेष्वासकार्कितः ।
[4]कुम्भात् पाथोनतश्चापि वेदाशीति विधा मताः ॥ 153 ॥

**अथ ग्रहदोषाः ॥**

पापांशहृत्तथा सौम्यो लग्नकेन्द्रत्रिकोणगः ।
अङ्गास्तायुःसुहृद्धर्म[5]पुत्रार्थव्ययकर्मगाः ।
[6]पापा(दो)षं क्रमाद्धीनं [7]कुर्वन्त्यविहिता यदि ॥ 154 ॥

अङ्गास्ताज्ञासुहृद्धर्म[8]पुत्रा(या)र्थसहोत्थगाः ।
शुभा गुणं [9]क्रमाद्धीनं कुर्वन्ति विहिता यदि ॥ 155 ॥

---

[10]क्षितिसुतरवीत्यादिपठितेषु त्रयस्त्रयो ग्रहाः क्रमेण मेषवृषमिथुनकर्कटकेषु द्रेक्काणाधिपाः स्युः । तथा [11]तत्त[B]त्त्रिकोणयोररिः । ? ओजराशौ प्रथमहोरा खेः, द्वितीया विधोः । समराशौ प्रथमहोरा विधोः । राशौ सप्तमराश्यादयः सप्त इत्यर्थः । वेदाशीतिविधाः चतुरशीतिसंख्याः । सप्तांशका इत्यर्थः । पापांशहृत् पापनवांशकद्वादाशांशादीनां दोषहृत् । [12]अ(ङ्गा)स्तादिषु स्थिताः पापाः दोषं क्रमाद्धीनं कुर्वन्ति । लग्नात् किञ्चिन्न्यूनं अस्ते, अस्तात् किञ्चित् न्यूनं आयुषि इत्यादि । अविहिता यदि अविहिताश्चेदेवं, विहिताश्चेच्छुभमेवेत्यर्थः । [13]शुभास्तु यथोक्त-स्थानगता गुणं क्रमाद्धीनं कुर्वन्ति, विहिताश्चेदेवं, अविहिताश्चेद्दोषमेव कुर्वन्ति ।

---

1. $T_1$ सोमाङ्गासर्काजीवाः
   M सोमाङ्गारर्कजीवाः
2. $T_1$ अर्केन्दो
3. $T_1$ मैषालयुग्मतः
4. $T_1$ कुम्भाल्पाथो
5. M पुत्रार्थौ
6. T पापाद्दोषं द्र.व्या.
7. $T_1$ पाठः । T कुर्वन्त्यपिहिता द्र.व्या.
8. T पुत्रार्यार्थे
9. $T_1$ क्रमाद्धिनं
10. $T_1$ क्षितिन्नुत
11. $T_1$ तत्त्रिकोणयोररिः
12. T अंशास्तादिषु
13. $T_1$ शुभासु

---

A. अस्मिन् श्लोके छन्दोभङ्गः दृश्यते ।
B. तत्तत्त्रिकोणाधिपाः इति स्याद्वा

त्र्यायारिगोऽशुभः [1]सौम्यौ सद्दृष्टौ लाभ[2]केन्द्रगौ ।
लग्नांशकेन्द्रगः सौम्यो मित्रदृष्टः [3]शुभोड्डुगः ॥ 156 ॥
शुभदृष्टो बली चन्द्रो न च लग्नांशगोऽशुभः ।
त्रयो [4]यो(गा) विनिघ्नन्ति दोषं पापोदयोद्भवम् ॥ 157 ॥
फलदो राहुर्ग्रहणादब्धार्धेऽशीति दिवसे वा ।
तत्राप्यन्नविवाहौ [5]मु(क्त्वा) फलदः [6]स्वद्रेक्काणे ॥ 158 ॥
राहुर्लग्ने शुभं दद्याद्यदि केन्द्रे शुभग्रहः ।
[7]अप्रकाशग्रहाः सर्वे लग्ने बलिनि निष्फलाः ॥ 159 ॥
यत्रभे दृश्यते [8]केतुः नानारुपोऽम्बरे सकृत् ।
तत्रभे स इति ज्ञेयः स एव नवमो ग्रहः ॥ 160 ॥
केन्द्रे [9]गुरुर्बली हन्ति लग्नस्योभयपापताम् ।
स्वोच्चे स्वशुभवर्गे वा [10]शुभदृष्टा बलान्विताः ।
शुभकर्मस्वनुक्तेषु स्थानेष्वपि शुभग्रहाः ॥ 161 ॥

---

**त्र्यायारिग** इत्यादिभिरर्धश्लोकैरुक्तास्त्रयो योगाः [11]पापोदयदोषहराः । **फलद** इति ग्रहण[12]कालादारभ्य षण्मासान्तं अशीतिदिनान्तं वा विशेषात् फलदोषदो राहुः । ततः परं न दोषः इत्यर्थः । तत्राप्यन्नविवाहौ [13]मुक्त्वेति । ग्रहणादब्दार्धे राहोः फलदत्वमन्नविवाहौ मुक्त्वेति अर्थः । बालान्ने विवाहे च सर्वदाफलद इत्यर्थः । स्वद्रेक्काणे च सर्वदाफलदो दोष एव । अप्रकाशग्रहाः सर्वे इति वचनं तेषां समाचारादिसिद्धानां बहुत्वात् । **यत्र** भे इति । नवमस्य ग्रहस्य केतोर्गतिश्च [14]रूप भेदश्च दर्शनकालश्च शास्त्रान्न लभ्यते इत्यर्थः । कदाचित् स्वयमेवोदयं गच्छति तदा यस्मिन् राशौ स दृश्यते तद्राशिगतस्तदानीमिति ज्ञेयः । नवमो ग्रहश्च स इति ज्ञेयः । अपवादो दोषस्यैव स्यात् । **स्वोच्चे** इति । शुभा ग्रहाः शुभप्रदाः स्युरित्यर्थः

---

1. M सौम्यो
2. $T_1$ केन्द्रगो
3. M शुभो भगः
4. T योग
5. T मुक्ताफलदः द्र.व्या.
6. $T_1$ स्वहक्काणे
7. M अप्रकाशाः ग्रहाः
8. $T_1$ केतुः इति ग्रन्थपातः ।
9. $T_1$ गुरुबली
10. $T_1$ M शुभदृष्टो बलान्वितः द्र.व्या.
11. $T_1$ पाठपादयदोषं
12. $T_1$ कलादाराभ्य
13. $T_1$ मुहूर्तेति
14. $T_1$ रूपा भेदश्च

त्रिषडेकादशे पापाः [1]शुभौ वा शुभवीक्षितौ ।
[2]के(न्द्रे) भवे वा भवतः तदा पापोदयः शुभः ॥ 162 ॥
[3]लग्नर्क्षांशककेन्द्रस्थः स्वमित्रग्रहवीक्षितः ।
यदा शुभः शुभोडुस्थस्तदा पापोदयः शुभः ॥ 163 ॥
सद्ग्रहेन्दू यदान्योऽन्यं वीक्षेतां [4]बलिनौ यदा ।
न चेल्लग्नांशके [5]क्रूरः तदा पापोदयः शुभः ॥ 164 ॥
कूपादिखनने सेके वस्त्रे शुक्रेक्षणं शुभम् ।
षष्ठे व्यये निशानाथः शस्तो ह्यम्बरधारणे ॥ 165 ॥
क्षुरकर्मणि याने च नवान्ने धान्यसङ्ग्रहे ।
स्त्रीणां चौले च सेके च चन्द्रलग्नं सुपूजितम् ॥ 166 ॥
पूर्णेन्दुर्लग्ने [6]बालान्ने द्रुमाद्युप्तौ च नो ध्रुतम् ।
पापेषु त्रिषडायेषु केन्द्रगेषु शुभेषु वा ॥ 167 ॥

---

**त्रिषडिति** । यदा त्रिषडैकादशे पापाः, [7]लग्नगतपापादन्ये इत्यर्थः । शुभवीक्षितौ शुभग्रहौ केन्द्रे भवे वा भवतस्तदा पापोदयः शुभः स्यात् । शुभौ वेत्यत्र वा शब्दश्चार्थे । तथा च बार्हस्पत्ये "यदा शुभग्रहौ केन्द्रे भवे वा शुभवीक्षितौ । त्रिषडेकादशे पापास्तदा पापोदयोऽपि सत्[8] "॥ इति । [9]पाठे संयोगः स्यादिति योज्यम् । ? **लग्नर्क्षेति** । लग्नर्क्षांशककेन्द्रस्थः लग्नराश्यंशककेन्द्रस्थः । लग्नराशौ योंऽशः [10]तत्केन्द्रस्थ इति यावत् । बार्हस्पत्ये "विलग्नांशककेन्द्रस्थ" इति । **शुभोडुस्थ** इति । अस्यार्थो निरूप्यते - उडूनि तीक्ष्णाख्यानि उग्राख्यानि च पापानि । शिष्टानि शुभानि इति । अथवा तत्तत्कर्मयोग्यानि तत्र तत्र शुभानि, [11]इतराण्यशुभानि । यथान्धनक्षत्रापवादे "हन्ति शुभो बलवाञ्छति केन्द्रे वीक्षणभाभ्युदितोऽन्धजदोषं" इति । [12]उ(प्ति)र्वापनम् ।

---

1. M शुभो वा शुभवीक्षिताः द्र.व्या.
2. T केन्द्रभवे
3. $T_1$ लग्नर्क्षांशकेन्द्रस्थः
   M लग्नस्थांशककेन्द्रस्थः द्र.व्या.
4. $T_1$ बलिनो
5. $T_1$ तथा M केन्द्रे क्रूरः for क्रूरः
6. M बालोन्ने
7. $T_1$ लग्नागत
8. $T_1$ सता for सत्
9. $T_1$ पाठेत् for पाठे
10. $T_1$ स्थतूकेन्द्रस्थः
11. $T_1$ इतराव्यशुभानि इति ग्रन्थपातः ।
12. T उक्तिः for उप्तिः

[1]स्वर्क्षोच्चगेषु सत्कर्मा स्वर्क्षाजोच्चगतोऽपि वा।
स्वलग्नदोषहा वक्ष्यमाण भोदय[2]गोऽपि च ॥ 168 ॥
विवाहे गर्भहोमे च क्षौरे [3]प्रा(शे)ऽभिषेचने।
नाम्नि [4]चैते [5](गृ)हा वर्ज्या [6]स(ग्र)हाः सप्तमादयः ॥ 169 ॥
जन्मोपनयलग्नेन्दुचतुष्कं स्यादष्टमो ग्रहः।
अष्टमाब्दादधो मृग्यः परस्ता[7]न्मध्ययोर्द्वयोः ॥ 170 ॥
तथा व्ययगतो जीवः शस्त्रे शस्तस्तु पुंसवे।
[8]क्षौरक्रियोपनये विसिताः [9]प्रयाण भुक्त्यो हि ॥ 171 ॥
[A]शुक्रशशिजावप्यशुभा विवाहे वेश्मक्रियासु।
विशुभा [10]शुचमष्टमस्था कुर्वन्ति कर्मसु शुभेष्वितरेषु सर्वे ॥172॥

---

पूर्णेन्दुर्लग्ने सम्प्रदायविद्भिर्वर्ज्यते। अजो मेषराशिः। स्वलग्नदोषहा चन्द्रः प्रकृतत्वात्। वक्ष्यमाणभोदयग इति। अश्विन्यादीनां ताराणां स्वावस्थितं लग्नं [11]तृतीयाध्याये वक्ष्यते। तद्भोदय इत्युच्यते। तत्रगतश्चन्द्रोऽपि स्वलग्नदोषं हरति। अभिषेचनं राजाभिषेकः। एते गृहा राशयः। सग्रहाः ग्रहसहिताः वर्ज्याः। के ते इत्यत्राह। सप्तमादय इति। अथवा सग्रहा एते सप्तमादयः [12]गृहाः वर्ज्याः इति। **जन्मेति**। जन्मकाले लग्नमिन्दुश्च, उपनयनकाले लग्नमिन्दुश्चेति चतुष्कम्। अष्टमाब्दात् प्रागेषां अष्टमे ग्रहो मृग्यः। तत्रानिष्टदो ग्रहो विशेषाद्वर्ज्यः इत्यर्थः। परस्तात् अष्टमाब्दादूर्ध्वं, मध्ययोर्द्वयोः [13]जन्मकाले(न्दो)रुपनयनकाललग्नस्य चाष्टमे ग्रहो विशेषाद्वर्ज्यः। तथेति शस्त्रबंधे जन्मेन्दोर्मुहूर्तलग्नस्य च व्ययगतो जीवो वर्ज्यः इत्यर्थः। पुंसवे व्ययगतो जीवः शस्त एव। क्षौरादिषु यथोक्तकर्मस्वष्टमस्था यथोक्तग्रहाः शुचं दुःखं कुर्वन्ति।

---

1. M पाठः। T स्वर्क्षोपगेषु
2. $T_1$ गोपी च
3. T प्रारो for प्राशे
4. $T_1$ चैके
5. T ग्रहाः द्र.व्या.
6. T सद्ग्रहाः द्र.व्या.
7. $T_1$ तथा M मध्यमो द्वयोः
8. M क्षौरक्रियोपनययोर्विसिताः
9. $T_1$ पाठः। T प्रयाण भुक्ये
10. $T_1$ शुचमष्टमस्याः
11. $T_1$ तृतीयाध्यायो
12. $T_1$ ग्रहवर्ज्याः
13. T जन्मकालेन्द्वोरुप

---

A. अस्मिन् श्लोके छन्दोभङ्गः दृश्यते।

मुक्त्वैकं जन्मर्क्षं द्वे तारे जन्मसंज्ञिते शुभदे।
[1]उपनीतावुद्वाहे प्रयाणभुक्त्योः कृषि[2]क्रियायां च ॥ 173 ॥
कन्याजन्मत्रयं शस्तं वर एषोदिताभिदा।
स्नाने तु [3]नृस्त्रियोर्जन्मभत्रयं निन्दितं तराम् ॥ 174 ॥
[4]क्षुरकर्मणि सीमन्ते [5]भैषज्ये कटदर्शने।
गन्धसंस्पर्शने चापि विशेषाज्जन्मभं धुतम् ॥ 175 ॥
[6]सूर्यः स्वभात् प्रियदिनं ?पूर्णाह्नः सप्तमं शशी।
कुजस्तृतीयं [7]वित्प्रेष्ठं षष्ठं जीवःसितो वरम् ॥ 176 ॥
सौरिर्नटमहं नीरं क्रमाद्धन्ति पदा दिनम्।
येन ग्रहेण यो दोषस्तस्मिन् बलिनि सोऽफलः ॥ 177 ॥
मन्दाद्विंशतिभं गण्डं सप्तमं [8]कालसंज्ञितम्।
व्ययेऽरिमृ-त्योर्नवमे दशमेऽष्टमषष्ठयोः ॥ 178 ॥
सप्तमे पञ्चमेऽर्काद्या व्यये राहुश्च मृत्युदाः।
येन ग्रहेण यो दोषः तस्मिन् बलिनि [9]सोऽफलः ॥ 179 ॥

---

तरेषु शुभकर्मसु सर्वेऽपि ग्रहा अष्टमस्था दुःखं कुर्वन्ति। **कन्येति**। विवाहे थमजन्मर्क्षान्त्यं द्वितीये तृतीये ग्राह्ये।? इत्युक्ताभिदा वर एव वरविषये एव। न्यायास्तु जन्मत्रयं अपि शस्तम्। स्नाने उपसंवेशने तरां अधिकमित्यर्थः। कटसंदर्शनं दाहकसंदर्शनम्। [10]**सूर्यः** स्वभादिति। सर्वे ग्रहाः स्वाश्रितनक्षत्राद्यथोक्तसंख्यं नक्षत्रं पदा घ्नन्ति। दूषयन्तीत्यर्थः। चन्द्रस्तु पूर्णाहनः पौर्णमासियुतान्नक्षत्रात् सप्तमं नक्षत्रं हन्ति। पदाघातसंज्ञितोऽयं दोषः। मन्दात् मन्दस्थितर्क्षात् व्ययादिष्वेकैकपदोक्तेषु स्थानेषु क्रमात् स्थिता [11]अर्काद्याः मृत्युदाः। व्यये राहुरपि मृत्युदः।

---

1. $T_1$ उपनीता उद्वाहे
2. $T_1$ क्रियायाश्च
3. $T_1$ नृक्रस्त्रियो
4. M क्षुरकर्माणि
5. $T_1$ भेषज्ये
6. $T_1$ सूर्यस्वभाजिति
7. $T_1$ विप्रेष्ठ
8. $T_1$ संज्ञिकम्
9. $T_1$ सो फलः
10. M सूर्यस्थवात्
11. $T_1$ अर्कन्या

लग्नाष्टमर्क्षे सर्वत्र राशिमात्रं विवर्जयेत् ।
[1]त्रिंशद्वर्षादधोऽतीव षष्टितोऽधस्तु मध्यमः ॥ 180 ॥
ततः [2]परं तु नो दोष इति विद्वदुदीरितम् ।
अष्टमांशगतश्चन्द्रो नेष्टः सर्वत्र कर्मसु ।
शुभांशके प्रशस्तः स्यात् न तु भृग्वंशके सदा ॥ 181 ॥
पापांशका विवर्ज्या स्युः कृष्ण[3]पक्षे विशेषतः ।
सौम्यांशकाः प्रशस्ताः स्युः पूर्वपक्षे शशी शुभः ॥ 182 ॥
तुलांशकगतश्चापि चन्द्रः [4]पूर्णो न दोषदः ।
पूर्णोऽपि न वृषांशस्थो रन्ध्रांशे [5]सद्भिरिष्यते ॥ 183 ॥
शुभांशस्थो यदा चन्द्रः शुभकृच्छुभवीभितः ।
निजे सक्रूरतादोषं निरस्यति बली तदा ॥ 184 ॥
मुहूर्तलग्नाद्दम्पत्यो[6]र्जन्मेन्दोश्चापि [7]सप्तमम् ।
निग्रहं शस्यते सद्भिः [8]प्रोद्वाहे तद्गचन्द्रवत् ॥ 185 ॥
स्त्रियोर्जन्मभवद्वापि गर्भहोम[9]गिरोदितम् ।
क्षुरं नामक्रिया कर्णवेधो वेश्मकृतिः कृषिः ॥ 186 ॥

---

राशिमात्रं, न तु तदंशं तद्गतचन्द्रं चेत्यर्थः । अष्टमांशगतः [10]अष्टमराश्यंशगतः । शुभांशे तु चन्द्रः प्रशस्तः । भृग्वंशकेऽष्टमांशे चन्द्रो न शस्तः । पापांशका इत्ययं सामान्यविधिः, अष्टमांश[11]विषयश्च । पूर्वपक्षे शशी च शुभाख्यः । रन्ध्रांशे अष्टमराश्यंशे अयं विधिः । तद्गचन्द्रवत् मुहूर्तकालचन्द्रः निग्रहः शस्त इत्यर्थः । तथा स्त्रियोर्जन्मभं च ग्रहरहितं शुभम् । [A]रविभौमशनैश्चरजीवबुधेषु जन्मस्थेषु विवाहं न कर्तव्यमिति शास्त्रदृष्टम् । गर्भहोमेति । प्रागुक्तस्य विवरणं विवाहे गर्भहोमे चेत्यत्र । गर्भहोमशब्देन क्षुरादिगोदानान्ताः सप्त च निर्दिष्टा भवन्ति ।

---

1. M त्रिंशद्वर्षाण्यधोऽतीव
2. M परस्तु
3. $T_1$ पक्षी
4. $T_1$ पूर्णे
5. $T_1$ सद्भिरीष्यते
6. $T_1$ जन्मेन्द्वोश्च
7. $T_1$ सत्यम् for सप्तमम्
8. M प्राद्वाहे
9. $T_1$ गिरादितम्
10. $T_1$ अष्टमराश्यां गतः
11. $T_1$ विषश्च

---

A. अत्र शुक्रवाचिपदं नदृश्यते ।

शस्त्रबन्धं च गोदानं प्राशो बालान्न भोजनम् ।
अभिषेकः समृध्यर्थं नृपादेरभिषेचनम् ॥ **187** ॥
उक्ता दोषास्तथैतेषामपवादा विशेषतः ।
अथ सामान्यतस्तेषां विलिख्यन्तेऽ[1]पवादकाः ॥ **188** ॥

## अथापवादापवादकाः॥

लग्नेशः शुभवर्गस्थो बली शुभयुतेक्षितः ।
विहितग्रहनक्षत्रतिथिराशिसमुच्चयः ॥ **189** ॥
उक्तस्थानगतश्चन्द्रः शुभांशस्थः शुभक्रियः ।
सर्वे सौम्याः शुभारूढराशिला भांश[2]संश्रिताः ॥ **190** ॥
यावज्जीवांशकाल्लग्नं तस्मात्तावति भे रविः ।
सिंहासनस्थो गजगो [3]नित्यं देवार्चनः शशी ॥ **191** ॥
नन्दांशादोजगाः सौम्या युग्मगास्त्वशुभास्तथा ।
लग्नहोरासमामास[4]वारेशान्यतमो बली ॥ **192** ॥
लग्नेन्दूस्वाश्रितांशेशवीक्षितौ बलसंयुतौ ।
स्वोच्चः [5]स्ववर्गगो जीवः [6]स्वाष्टवर्गेऽधिकर्क्षगः ॥ **193** ॥

---

तत्र प्राश इति बालान्न भोजनम् । तत्राभिषकोऽभिषेचन[7]मित्येतन्नृपादेः [8]समृध्यर्थम् । एवं दोषास्तदपवादाश्च उक्ता भवन्ति । अथ दोषाणां सामान्यापवादाः [9]प्रदर्श्यन्ते । **लग्नेश** इति । एकैकेन श्लोकार्धेन एकैको योगः । [10]सिंहासनस्थः इत्यादिषु एक एव हि सम्भवति । **सर्वे** सौम्या इति । लाभांशो लाभराश्यंशकः । अत्रैकः शुभग्रहस्थितांशर्क्षाल्लाभराश्यंशगः, अन्यः शुभश्चेदपि योगो [11]भवति । तथा च बार्हस्पत्ये-"यदा जीवस्थितांशर्क्षात् भवराश्यंशगस्थितः । तथा दोषा (य)युर्नाशं यथा रामेण राक्षसाः ॥" इति । यावज्जीवांशकादिति । जीवांशको जीवस्थितांशराशिः । तथा च बार्हस्पत्ये- "देवेड्ययुक्तांशक भाद्विलग्नं यावद्भवेत्तावति राशिगेऽर्के । दोषास्तदा स्युर्विलयं सभायां [12]यथा(न)धीतः पुरुषस्तथैव ॥" इति । अधिकर्क्षगः अधिकशुक्लाक्षराशिगः ।

---

1. $T_1$ अपवादतः
2. M संश्रितम्
3. $T_1$ नृत्यं
4. $T_1$ लारेश for वारेश
5. $T_1$ स्ववर्गो
6. $T_1$ स्पष्टवर्गे
7. $T_1$ मित्येवदननृपा
8. $T_1$ सवृध्यर्थम्
9. $T_1$ प्रदृश्यन्ते
10. $T_1$ सिंहसनस्थः
11. $T_1$ भवन्ति
12. T यथा नाधीतः $T_1$ यदानाधीतः

जीवांशात् षोडशे सौम्यः [1]सेन्दुलग्नौ चरस्थिरौ।
[2]उक्तस्थानगताः सर्वे शुभावन्योन्यवीक्षितौ ॥ 194 ॥
चन्द्रलग्नांशतो द्व्यस्त[3]व्ययायस्थः शुभो बली।
त्र्यायारिगो शुभः स्वोच्चवर्गगो लग्नभांशतः ॥ 195 ॥
चन्द्रलग्नांशपौ केन्द्रत्रिकोणोपचयस्थितौ।
लग्नलग्नांशपौ बन्धुभूतौ चान्योन्यवीक्षितौ ॥ 196 ॥
अधिमितौ विलग्नांशराशिपौ गुरुवीक्षितौ।
नन्दामूलोत्तरार्कान्त्यतिष्यश्रवणतोयभैः।
भद्राश्रोणाचतुर्मूलमातृचित्रद्व्यजेन्दुभिः ॥ 197 ॥
नन्दोत्तरार्धभैकाङ्घ्रिमित्रपौष्णयमाश्विभिः।
जयामित्राग्निपूर्वेन्दुविश्वार्यार्यमशङ्करैः ॥ 198 ॥
पूर्णादिति[4]चतुर्वायुमित्रबुध्निद्व्ययाश्विभिः।
भद्रार्यमचतुर्मूलभरण्यश्वयुगन्त्यभैः ॥ 199 ॥
रिक्ताग्निरोहिणीवायुशूर्पमित्रेन्द्रवारुणैः।
[5]सार्कवारादिभिर्योगा दोषघ्ना गुणवर्धनाः ॥ 200 ॥

---

सेन्दुलग्नौ चरस्थिरौइन्दुश्चरराशिस्थः, लग्नं [6]स्थिरर्क्षम्। अत्र षोडशांशो अष्टोत्तरशतांशगणनक्रमे भवति। एते सामान्यापवादाः। अथ शुभयोगा उच्यन्ते। नन्दातिथ्यर्कवारयुक्ता मूलादयो नवतारा नवयोगाः स्युः। भद्राचन्द्रवाराभ्यां श्रवणादिदशकस्य [7]योगात्तु दश। नन्दाकुजवाराभ्यां [8]उत्तराद्येकादशकस्य योगादेकादश। इन्दुचित्रावसुभान्यर्धभानि। बुधवारजयाभ्यां मित्रभादिदशकस्य योगात् नव। भद्राशुक्रवाराभ्यामर्यमाद्यष्टकस्य योगादष्टौ। मन्दवाररिक्ताभ्यामग्न्यादिसप्तकस्य योगात् सप्त। सार्कवारादिभिः अर्कवारादिसहितैरुक्तैः सप्तवर्गैर्योगाः स्युरित्यर्थः। एते चतुःषष्टिसंख्या [9]योगाः दोषघ्ना गुणवर्धनाश्च भवन्ति।

---

1. M सेन्दुलग्नं
2. $T_1$ उक्तौ तौ नगताः
3. $T_1$ व्यायायुस्थः
4. $T_1$ चतुर्पायु
5. $T_1$ स्वार्कवारादि
6. $T_1$ स्थितर्क्षं
7. $T_1$ पाठः। T योगं तु
8. $T_1$ उत्तराम्येकादश
9. $T_1$ योना

विश्व[1]मित्राग्नयः साद्रिपञ्चम्यो बुधवारगाः ।
त्रयोदश्यन्विताम‍ातृजलान्त्या गुरुवारगाः ॥ 201 ॥
भद्रान्विता वसुस्वाति[2]रोहिण्यः शनिवारगाः ।
[3]शतवाय्वर्यमोपेता नन्दा शुक्रान्विताः [4]सुधाः ॥ 202 ॥
[A]वारयोगोऽर्कवारस्थाश्चित्राश्विनशतानलाः ।
सनन्दा कुजवा[र]स्था मूलान्त्योरगवायवः ॥ 203 ॥
[5]शुभवारो द्विपञ्चाद्रि[6]विश्वयुक्तोऽतिशोभनः ।
मित्राश्विद्व्यजपुष्यार्का नन्दा [7]भद्रान्विताः शुभाः ॥ 204 ॥
मूलाश्विविष्वहिर्बुध्नि वह्निपैतृ भगाधिपाः ।
शूर्पार्द्रामूलवरुणरोहिण्याषाढकास्तथा ॥ 205 ॥

सप्तमिपञ्चम्योरन्यतरबुधवाराभ्यां [8]विश्वादित्रयस्य योगास्त्रयः । त्रयोदशीगुरुवाराभ्यां मित्रादित्रयस्य च त्रयः । भद्राशनिवाराभ्यां वस्वादित्रयस्य च त्रयः । नन्दाशुक्रवाराभ्यां [9]शतादित्रयस्य योगाच्च त्रयः । एवं द्वादश सुधायोगाः । अर्कवारनन्दाभ्यां चित्रादिचतुष्कस्य योगाच्चत्वारः । कुजवारनन्दाभ्यां मूलादिचतुष्कस्य योगाच्चत्वारः । एतोऽष्टौ वरयोगाः । द्वितीयापञ्चमीसप्तमीत्रयोदशीनां शुभवारयोगाच्चत्वारः शुभयोगाः । मित्रादिषट्कस्य नन्दाभद्रयोरन्यतरयोगात् षट् शुभयोगाः । मूलाद्याषाढपर्यन्तानां [10]त्रयोद[श]ताराणां प्रथमादित्रयोदश्यन्तानां त्रयोदश तिथीनां चन्द्रवारादिमन्दवारपर्यन्तानां त्रयोदशवाराणां च क्रमाद्योगे त्रयोदश शुभयोगा भवन्ति । तथा बार्हस्पत्ये "नैरृतिश्चन्द्रवारेण भौमवारेण चाश्विनी।" पुनर्विशाखा चन्द्रेण आर्द्राङ्गारकवारतः॥" इति । "तिथिभिः प्रथमाद्यैस्तु सहिताः [11]शु(क्ल)पूर्वकैः" । इति च ।

1. $T_1$ मित्रादयः स्वापिञ्चम्योः
2. $T_1$ रोहणः
3. $T_1$ शतवायुयुतोपेता
4. M बुधाः
5. M शुभषारो
6. $T_1$ विश्वायुक्तो
7. $T_1$ भद्रानितो
8. $T_1$ अश्वादित्रयस्य
9. $T_1$ शत्रादित्रयस्य
10. T त्रयोदय for त्रयोदश
11. T शुक्रपूर्वकैः

A. वारयोग इति मूले दृश्यते, व्याख्याने तु वरयोग इत्यस्ति।

सम्पूर्णभोगदोऽ[1]नन्तः [2]सुखदोऽनर्थभोगदः ।
स्वर्गदृङ्नित्ययोगोऽयं [3]सूर्याद्विघटिकादिकः ॥ 214 ॥

कालहोरा दिनार्कांशा वर्ज्याः [4]पापस्य [5]त(त्पतिः) ।
[6]वारेशोऽहनि रात्रौ तत्पञ्चमः षष्ठमः पुनः ॥ 215 ॥

चैत्रादावुदये यस्य [A]वारमब्दाधिपो ह्यसौ ।
वैशाखाद्युदये यस्य वार मासाधिपस्तु सः ॥ 216 ॥

द्वि[7]घ्ना(स्तिथि)हृताशुक्लप्रतिपत्पूर्वका तिथिः ।
सैकार्कादिदिनौघः स्याच्चन्द्रज्ञभृगवोऽधमाः ॥ 217 ॥

---

शुभाख्य नित्ययोगमाह-**सम्पूर्ण** इति । अर्कवारे सप्तदशनडिकाः सहिता पञ्चनाडिकाः तुलिते द्युगते योगः ।? एवं अन्येष्वपि । दिनस्य द्वादशो भागः कालहोरासंज्ञितः । तथा रात्रेश्च । एवं दिने द्वादशकालहोराः, [8]रात्रौ च द्वादश । दिने प्रथमहोराधिपो वारेशः । द्वितीयः षष्ठहोराधिपः । तस्मात् षष्ठात् षष्ठश्च तृतीयः । एवमन्येऽपि । रात्रौ तु वारेशपञ्चमः प्रथमः । तत्षष्ठो द्वितीयः । एवमन्येऽपि । [9]पापस्य कालहोरा वर्ज्या । चैत्रशुक्लप्रतिपद्युदये यस्य वारः सः अब्दाधिपः स्यात् । [10]तस्मिन् मासे मासाधिपोऽपि स एव । वैशाखादिषु शु(क्ल)प्रतिपद्युदये यस्य वारः सः मासाधिपः स्यात् । सैका एकयुता । अर्कादिदिनौघः अर्कादिवारसमूहः स्यात् । अस्य प्रयोगो बहुषु बहुधा दृश्यते । तेषां वाराणां संज्ञा श्रीर्दिवस इत्यादिनोच्यते ।

---

1. $T_1$ हन्तः for अनन्तः
2. M सुखितोऽनार्थभोगदः
3. M सूर्यादि घटिकादिकः
4. $T_1$ पाठः । T पापास्य
5. तत्प्रतिम्
6. M परेशो
7. T द्विघ्नास्थिति $T_1$ दिघ्नास्थिथि M दिघ्नास्थिति
8. $T_1$ रात्रैश्च
9. $T_1$ पापि(स्य)
10. $T_1$ ''तस्मिन् मासे'' इत्यारभ्य ततः द्वितीयपङ्क्तिगात ''मासाधिपः स्यात्'' पर्यन्तं मातृकायां ग्रन्थपातः ।

---

A. अत्र ''वार'' शब्दः नपुंसकलिङ्गे प्रयुक्तः ।

श्रीर्दिवसः कलिदिवसो नान्दीदिवसश्च [1]कालकर्णी च ।
[2]जयदिवसो वधदिवसो हृतविच्छावेले राशिकलादिके ।। 218 ।।
[3]शुभर्क्षमभिलाषर्क्षं यदा तत्र शुभाः क्रियाः ।
वेलानां सदसद्भावात् क्रियाणां च शुभाशुभे ।। 219 ।।
शिरोरोगो महाप्रीतिर्देवकार्यं [4]सुखासनम् ।
नेत्ररोगः सुखं कर्म नारीक्रीडा महाज्वरः ।। 220 ।।
सुवर्णभूषणं साश्रु विषभुक्तिश्च मैथुनम् ।
कुक्षिरोग जलक्रीडा हसनं चित्रलेखनम् ।। 221 ।।
क्रोधनं नृत्तकार्यं च धृतभुक्तिः सुनिद्रता ।
गान्धर्वं दन्तशूलं च कलहं चैव गच्छति ।। 222 ।।
उन्मादः [5]स्नानकार्यं च शयनं चैव तिष्ठति ।
क्षुधा च [6]शास्त्रश्रवणं स्वैरगोष्ठी च योधनम् ।। 223 ।।
सत्कर्मा पापकर्मा च तीक्ष्णकर्मा च हर्षणम् ।
उक्तं वेलाफलं चन्द्राभिलाषाश्चन्द्रराशिषु ।। 224 ।।

---

अथ चन्द्रेच्छाचन्द्रवेलयोः संख्यानयनमाह - [A]**खखाष्टेति** । लिप्तीकृतः तत्कालेन्दुः खखाष्टभिरष्टभिः शतैर्विभज्य शिष्टमुभयत्र विन्यस्यैकं त्रिभिर्निहत्य खखनेत्रैः विभजेत् । लब्धं [7]राश्यात्मकमिच्छामानं भवति । पुनरन्यमवशिष्टेन्दुं नवभिर्निहत्य खखनेत्रैः शतद्वयेन विभजेत् । तत्र लब्धं [8](क)लात्मकं द्रेक्काणात्मकं वेलामानं भवति । तदुक्तं राशिकलादिके इति । कलात्र द्रेक्काणः । यदा अभिलाषर्क्षं इच्छाख्यमृक्षं शुभर्क्षं भवति तत्र तदा कृताः क्रियाः शुभाः भवन्ति । कार्या इति वा योज्यम् । तथा वेलानां वेलाख्यफलानां सदसद्भावात् क्रियाणां तत्कालकृतानां शुभाशुभे वेद्ये । द्रेक्काणतुल्यानि षट्त्रिंशत्वेलाफलानि आह-**शिरोरोग** इति । सुखं कर्म इत्येकं, स्वैरं गोष्ठीति चैकम् । [9]यथेष्टक्रीडा । एवमुक्तं वेलाफलम् । चन्द्राभिलाषा तु यथोक्तेषु चन्द्रराशिषु वक्ष्यते इति शेषः । अत्र तत्कालचन्द्रात् यतिमा वेला लभ्यते ततिमा ग्राह्या । [10]वर्तमानवेलेत्यर्थः ।

---

1. $T_1$ कालकण्ठी च
2. $T_1$ यदिं for जय
3. M पाठः । T शुभमर्क्षमभि
4. M पाठः । T सुखसाधनम्
5. $T_1$ स्थानकार्यं च
6. $T_1$ शास्त्रश्रवणः
7. $T_1$ राश्चात्मक
8. T कालात्मकं
9. $T_1$ यथेष्टक्रिया
10. $T_1$ वर्तमानवेवेत्यर्थः

---

A. अत्र व्याख्याने "खखाष्टेति" इति मूलगतश्लोकस्य उद्धदणं कृतम् । मूले तु न दृश्यते । प्रायः मूलं नष्टं भवेत् ।

आद्या द्वादश [1]मेषादावाद्यद्रेक्काणसंश्रिताः ।
पुनर्द्वादश मध्यस्थाः परेत्वन्त्यत्रिभागगाः ।। 225 ।।

[2]सर्वर्क्षेष्विषुनाडीभिरवस्था द्वादशा स्मृताः ।
[3]चरितः स्वस्थो मृतो जातो रमितो हसितः शशी ।। 226 ।।

स्नातो भुक्तश्च सुप्तश्च [4]कुपितो ज्वरितः सुखी ।
[5]एता दशाश्चन्द्रगताः कल्प्याः स्युः कर्मकर्तृषु ।। 227 ।।

[6]स्थानाद्भ्रष्टःश्रतो जारश्चोरो गजवरश्रितः ।
सिंहासनस्थो राजेन्द्रः शत्रुहा [7]दण्डिनी गुणी ।। 228 ।।

व्यसुः छिन्नशिराः कृत्तपाणिपा[8]द्बन्धको मृतः ।
[9]राजा वेदं [10]पठन् स्वस्थः स्मर्ता धर्मस्य धर्मकृत् ।। 229 ।।

कुलजो निधिभागूढ[11]तुलो व्याख्या[12]परोऽरि(हा) ।
ज्वरी [13]पराजितो देशभ्रष्टो भृत्यो हृतार्थकः ।। 230 ।।

---

वेलानां द्रेक्काणसम्बन्धमाह-आद्या द्वादशेति । द्रेक्काणशुभाशुभग्रहसम्बन्धात् यच्छुभमशुभं वा भवति तद्वशात् वेलाफलस्य पौष्कल्यं वैकल्यं च वेद्यमित्यर्थः । सर्वर्क्षेष्विषुनाडीभिः, सर्वेषु ऋक्षेषु पञ्चभिः पञ्चभिः नाडीभिः एकैकावस्था भवति। एवं द्वादशावस्थाः । अवस्थाफलमाह[14]चरित इति । चरन्निति वा पाठः । [15]शशी इति सर्वत्र सम्बन्ध्यते । एताः दशाः अवस्थाः । चन्द्रगताः चन्द्रसिद्धाः कर्मकर्तृषु कल्प्याः । कर्मकर्तॄणां तत्फलमित्यर्थः । चन्द्रक्रियामाह-स्थानाद्भ्रष्ट इति । गजवराश्रितः गजवरारुढः । दण्डिनी सेनावान् । [16](व्य)सुः निष्प्राणः । कृत्तपाणिपात् छिन्नपाणिपादः । [17]स्मर्ता धर्मस्य धर्मं स्मरति । ऊढतुलः तुलारोही । [18]हृतार्थकः द्रव्यहीनः ।

---

1. $T_1$ मेषादाद्यद्रेक्काण
2. M सर्वर्क्षेविषु
3. M चरन्त्यस्वस्थः द्र.व्या.
4. M कम्पितो
5. M एकादशश्चन्द्रगताः द्र.व्या.
6. M स्थानभ्रष्टः
7. M दण्डनी गुणी
8. M बन्धगो
9. $T_1$ वाजावेदं
10. M पाठः । T पठत्
11. M पाठः । T तुल्यो
12. T परोऽरिह $T_1$ वरोरिह
13. $T_1$ वराजितो
14. $T_1$ चरक इति द्र.मृ.
15. $T_1$ शची इति
16. प्यसुः
17. स्मार्ता
18. $T_1$ गतार्थकः

आस्थानगः सुमन्त्रन्य भूभृद्वोढा गजात्तभीः ।
युद्ध भीरुस्त्रसल्लीनो विप्रभोजयिताग्निगः ॥ 231 ॥

क्षुधार्तोऽश्नः [1]चरन्नत्ति नृमासं परुशक्षतः ।
[2]विवाही कन्दुकैः क्रीडन् द्यूतैर्भूपः सुदुःखितः ॥ 232 ॥

[3]शेतेऽरिसेवितो मित्रैर्जुष्टो योगी सजानिकः ।
[4]मृष्टभुग्दुग्धपो देवमर्चन् स्वस्थः सुखासनः ॥ 233 ॥

एताश्चन्द्रक्रियाः पञ्च [5]पञ्चाजादिषु राशिषु ।
प्रकल्प्य तद्गुणोपेतं केवलं वा फलं वदेत् ॥ 234 ॥

वेदर्तुशर[6]दिक्पञ्चवेदवेदेन्दुदृग्दृशः ।
दृग्वेदेन्दुदिशोऽशस्ताः शस्ताश्चन्द्रक्रियाः क्रमात् ॥ 235 ॥

---

आस्थानगः आस्थानमण्डपस्थः । वोढा भार्यासहितः । गजात्तभीः गजत्रस्तः । लीनः विनष्टः द्यूतैश्च क्रीडन् । मित्रैश्च [7](जु)ष्टः मित्रराजभिः सेवितः । सजानिकः जायासहितः । एताः षष्टिचन्द्रक्रियाः [8]नक्षत्रस्यैकैकस्यां नाड्यामेकैका भवति । मैषादिषु राशिषु पञ्च पञ्च क्रियाः प्रकल्प्य वर्तमानक्रियाश्रितराशेर्ग्रहसम्बन्धात् ज्ञातशु[9]भाशुभवशेन वर्तमानक्रियाफलं वदेत् । अथवा केवलं क्रियाफलमेव वदेत् । तत्प्रधानमित्यर्थः । अथ निरन्तरेण यावत्यः क्रियाः अशस्ताः पुनर्यावत्यः [10]शस्ताश्च ताः क्रमेणाह-वेदर्त्विति ।

---

1. $T_1$ पाठः । T चरन्नर्ति
2. M विवाहैः
3. शीते
4. मृष्टभूद्वग्धपो
5. $T_1$ पञ्चजादिषु
6. $T_1$ दित्यंच for दिक्पञ्च
7. T दृष्टः for जुष्टः द्र.मू.
8. $T_1$ नक्षत्रस्यैकस्यां
9. $T_1$ शुभावेशेन for शुभाशुभवशेन
10. $T_1$ शस्ताश्व

[A]चन्द्रस्थितर्क्षाद्दृष्टभस्तु यावत्
लग्नाच्च तावत् प्रतिमस्य राशेः ।
गुणानवाप्नोति तथा विलग्ने
[1]प्रोद्यद्घटीनां [2]वशतः क्रमेण ॥ 236 ॥
[B]तद्गुणा इति राशीनां सदसद्योगजा गुणाः ।
सर्वर्क्षेष्वादितः पञ्चनाड्यो मेषर्क्षमीरिनम् ॥ 237 ॥
पुनः [3]पञ्च वृषर्क्षं स्यात् पुनरप्येवमुन्नयेत् ।
इति मुहूर्तरत्ने दोषतदपवादगुणविषयः
प्रथमोऽध्यायः॥

---

अथ प्रकारान्तरेण क्रियाफलकल्पनामाह **चन्द्रस्थित**र्क्षादिति । सर्वस्मिन्नपि नक्षत्रे प्रथमं नाडिकापञ्चकं मेषर्क्षं भवति । पुनर्नाडिकापञ्चकं वृषर्क्षम् । एवं मिथुनादयश्च पञ्चभिः पञ्चभिर्नाडिकाभिः भवन्ति । एवं नक्षत्रनाडिकाभिः सिद्धमृक्षं अत्र चन्द्रस्थितर्क्षमित्युच्यते । तत्कालचन्द्रस्थितर्क्षात् दृष्टराशिर्यावत् ततिमं मुहूर्तलग्नात् ततिमो राशिर्यः स्यात् तस्य राशेः [4]पठितान् गुणान् चन्द्रक्रियाख्यान् कर्मकर्ता आप्नोति । तथा विलग्ने प्रोद्यद्घटीनां वशतः क्रमेण इति । प्राप्तेषु पञ्चसु गुणेषु लग्नोदितघटिकावशात् वर्तमानगुणो वेद्य इत्यर्थः । घटिशब्देनात्र भागषट्कमुपलक्षितम्। यतो भागैरेव राशीनां समता भवति, न तु घटिकादिभिः । अत्रोदाहरणं "पुष्ये त्वेकादशी नाडीलग्नं मीनादिमांशकः । कुम्भराशेर्गुणो ह्यत्र भवे? च्छते इतिरितः" ॥ इति । तद्गुणोपेत[5]मित्यत्र तद्गुणशब्देन राशीनां सदसद्ग्रहयोगजाताः गुणा उक्ताः । एवमिह दोषस्तदपवादश्च [6]प्रदर्शितः । तत्र महादोषा अपावादयुताः अपि न ग्राह्या इति [7]सम्प्रदायवि(दः) ।

इति गोविन्दशिष्यपौत्रेण परमेश्वरेणकृते मुहूर्तरत्नव्याख्याने दोषतदपवादगुणविषयः प्रथमोऽध्यायः ।

---

1. $T_1$ प्राद्यघटीनां
2. $T_1$ वंश तं क्रमेण
3. M पाठः । $T_1$ पञ्चर्क्षं for पञ्च
4. $T_1$ पठितत्
5. $T_1$ मित्रत्र
6. $T_1$ व्रदशितः
7. T सम्प्रदायविदाः

---

A. अत्र छन्दोबङ्गः दृश्यते ।

B. अत्र 'तद्गुणा इति राशीनां" इत्यस्य व्याख्याने "तद्गुणोपेतराशीनां" इति लिखितं दृश्यते । व्याख्यानगतपदं एव साधुर्वा ।

## ॥ अथ द्वितीयोऽध्यायः ॥

### अथ रजोनिर्गमनानुकूल्यम्

[1]सप्तार्द्रातः प्रभृति गणिता वेद[2]संख्याश्च भूयो
[3]धातुर्व(क्त्रै)र[A][पि] परिमिता मित्रसंख्याः क्रमेण ।
[4]रत्यासक्तामथच कुलटां भर्तृहीनां गुणाढ्यां
[5]कुर्युस्ताराः प्रथम[6]रजसः सम्भवे कामिनीनाम् ॥ 1 ॥

अनूढाया विधेयं स्यादूढायास्त्वथ वक्ष्यते ।
चतुस्त्रिके तथा [7]दिग्भेष्विष्टानिष्टे क्रमान्मते ॥ 2 ॥

[8]विश्वाद्यार्काब्धिशैलाब्धिष्वार्या भोग्या पटु[9]र्ध्रुवा ।
द्वयोः साधारणी चापि विधानान्तरमुच्यते ॥ 3 ॥

---

अथ दोषबलाबलज्ञानानन्तरं वैदिककर्मणां कालविधौ प्राप्ते तत्र च विवाहकर्मणः प्राथम्यात्तस्य च कन्याकायाः शुभाशुभज्ञानपूर्वकत्वात् कन्यकानां प्रथमार्तवकाल-वशात् शुभा[10]शुभमाह **सप्तार्द्रात** इति । कामिनीनां=स्त्रीणां, प्रथमरजसः सम्भवे आर्द्रातः प्रभृति सप्ततारा: गणिताः कार्याः । भूयो वेदसंख्याश्च गण्याः । पुनश्च चतस्रः । पुनर्द्वादश । एताश्चतुर्विधास्ताराः [11]कन्यकां यथोक्तलक्षणविशिष्टां कुर्युः । कुलान्यटतीति कुलटा । दुष्टा इत्यर्थः । [12]धातुर्वक्त्राणि चत्वारि । मित्रा आदित्याः । अनूढा [13]अद(त्ता) । विधा विधिः । दिग्भेषु कृत्तिकामखामित्रश्रविष्ठादिषु प्रथमगतचतुष्के कन्याका इष्टा शुभा स्यात् । तदूर्ध्वगतत्रिके अनिष्टा । अथवा ऊढाया विश्वर्क्षार्कादिसंख्येषु [14]भे(ष्वा)र्येत्यादि फलं भवति । अथ द्वयोरुढानूढयोः साधारणी विधा प्रोच्यते । उभयोः समं फलमित्यर्थः ।

---

1. $T_1$ सत्प्रार्द्रातः
2. $T_1$ °संख्यश्च
3. $T_1$ धातुर्वक्त्रैरपवमिता M धातुर्वक्त्रैरपरमिता
4. $T_1$ रथ्यासक्ता°
5. M पाठः । T तथा $T_1$ कुर्युस्सर्वाः
6. $T_1$ रजः for रजसः
7. M दिष्टेष्विष्टानिष्टे
8. T विश्वाद्वार्का $T_1$ तथा M पाठः विश्वाद्यर्का
9. M र्धुताः
10. $T_1$ शुभांह
11. $T_1$ कन्यकायां
12. $T_1$ धातुवक्त्राणि चत्वारि । मित्रा आदित्याः इति ग्रन्थपातः ।
13. $T_1$ अदन्ता
14. $T_1$ भेषार्येत्यादि

---

A अत्र श्लोकोक्तपदैरेव श्लोकार्थः पूर्णः । किन्त्वत्र वृत्तभङ्गभिया धन्दोऽनुरोधेन ''पि'' इति अक्षरं पूरितम् ।

माङ्गल्यवस्तुसंस्पर्शे पूर्वाह्वे सद्दिनोदये ।
सद्दृष्टौ [1]च शुभो वेद्यो वेद्योऽन्यस्त्वशुभो बुधैः ॥ 4 ॥

[2]अश्विन्यां विधवा क्षिप्रं भरण्यां बहु[3]पुत्रि(का) ।
कृत्तिकायां[4]प्रजाहीना रोहिण्यां भर्तृशोकदा ॥ 5 ॥

दुश्चारिणी तु सौम्यर्क्षे आर्द्रायां नीचसङ्गिनी ।
अदित्यां [5]गन्तुकामा सा पुत्रला[6]भस्तु पुष्यभे ॥ 6 ॥

मृतप्रजा तथाश्लेषे मघायामभिमानिनी ।
दुश्चारिणी तु पूर्वायां उत्तरायां प्रजान्विता ॥ 7 ॥

हस्ते चार्थवती नित्यं चित्रायां तु [7]पतिं त्यजेत् ।
[8]स्वात्यां हृद्रोगपीडा स्यात् वैशाखे विधवा भवेत् ॥ 8 ॥

[9]क्रूरकर्मरता मैत्रे ज्येष्ठायां देवरं भजेत् ॥
मूले धनवती नित्यं [10]प्रसूतौ मरणं भवेत् ॥ 9 ॥

[11]प्रेष्यकर्मरताषाढे हस्तिघोटानुवर्तिनी ।
वैश्वर्क्षे सुभगा नित्यं [12]वन्ध्यात्वं श्रवणे भवेत् ॥ 10 ॥

पापिष्ठा तु धनिष्ठायां बहुभर्तृरता सदा ।
वारुणे दुःखशीला स्यात् किञ्चिद्दोषान्विता तु सा ॥ 11 ॥

पूर्वभद्रा सुपुत्राढ्या [13](प)शुशीला मनस्विनी ।
द्वितीयभद्रा सौख्या स्याात् रेवत्यां धनवल्लभा ॥ 12 ॥

शन्यर्क भौमफणिभिर्युक्ते चन्द्रे न चेष्टदा ।
[14]अशुभेऽपि शुभं विद्याच्छुभयुक्ते न मृत्युभाक् ॥ 13 ॥

---

माङ्गल्येति । देवरो भ्रातृसोदरः । हस्तिघोटो गजपरिवारक । अशुभेऽपीति - शुभयुक्ते चन्द्रे नक्षत्रफले [15]अशुभेऽपि शुभमेव भवति । न मृत्युभाक् इति ।

---

1. $T_1$ चनभो
2. $T_1$ अश्वन्यां
3. T $T_1$, M बहुपुत्रिता
4. M पाठः । T प्रजाहानिः
5. $T_1$ हन्तुकामा
6. M पाठः । T लाभन्तु
7. $T_1$ परित्यजेत्
8. $T_1$ स्वातो
9. $T_1$ पूर्वकर्मरता
10. M पाठः T प्रसूने
11. $T_1$ प्रेष्यकमरता
12. $T_1$ वन्ध्यत्वं
13. T प्रशुशीला
    $T_1$ तथा M वशुशीला
14. M अशुभोऽपि
15. $T_1$ अशुभे विशुभमेव

जन्मर्क्षे रोगपीडा स्थान्नैधनं मरणप्रदम् ।
भर्तुरष्टमराशिश्चेत् [1]वाशिता मृत्युमाप्नुयात् ।। 14 ।।
एवं शुभाशुभं विद्यात् कन्या ऋतुमती भवेत् ।
भौमांशके परप्रेष्या दारिद्र्यं भार्गवांशके ।। 15 ।।
सौम्ये पुत्रार्थसम्भोगी दुश्चारा [2]शशिनोंऽशके ।
ख्यंशके तु मेधाढ्या गुरोरंशे यशस्विनी ।। 16 ।।
मन्दभाग्या तु मन्दांशे कन्या ऋतुमती भवेत् ।
[3]प्रथमायां स्वयं पाकी द्वितीया चाल्पभोगिनी ।। 17 ।।
तृतीया सर्वसन्तुष्टा चतुर्थ्यां धनवर्जिता ।
पञ्चम्यां पूर्णविभवा षष्ठ्यां शीलविवर्जिता ।। 18 ।।
प्रतापयुक्ता सप्तम्यामष्टम्यां राक्षसी भवेत् ।
नवम्यां तु [4]बहुप्राप्तिः दशम्यां तु विशेषिणी ।। 19 ।।
त्रयोदश्यां तु [A]तेजस्वी [5]भूतायां वृषली भवेत् ।
पौर्णमास्यां बहुप्राप्तिरमाया[6]मधमा भवेत् ।। 20 ।।
मेषलग्ने दरिद्रा स्यात् [7]गोधर्मा [8]वृषभे भवेत् ।
युग्मे भोगार्थदर्शीत्वं [9]कर्क्यां भ्रष्टकुलद्वया ।। 21 ।।
सिंहे सकृत्प्रसूतिः स्यात् कन्यायां बहुकन्यका ।
तुलायां तु तुलाधारी बहुपुत्रप्रसूतिनी ।। 22 ।।
वृश्चिके [10]परचारी च दुश्चारित्रा च मानिनी ।
चापे भर्तरि सक्ता च मकरे प्रियवादिनी ।। 23 ।।

---

नैधनंजन्माष्टमर्क्षम् । वाशिताशब्दः स्त्रीपर्यायः । ऋतुमती भवेदिति-जन्मर्क्षे ऋतुमती चेद्रोगपीडा स्यात् । तत्काले नैधनं मरणप्रदम् । एवं शुभाशुभं विद्यादिति योज्यम् । भौमादीनामंशकेषु कन्या ऋतुमती भवेच्चेद्यथोक्तं फलं भवति । भूता चतुर्दशी । [11]गोध(र्मं) यथेष्टचारित्वम् ।

---

1. $T_1$ वा शीता M विशिता
2. $T_1$ शनिनोंऽशके
3. $T_1$ प्रथमाया
4. $T_1$ बहुप्राप्ति
5. $T_1$ दूतायां
6. $T_1$ मधवा
7. M गोधनं
8. $T_1$ विषभे
9. $T_1$ कर्क्यं
10. $T_1$ चरचारी
11. T गोधर्मा

---

A. अत्र तेजस्विनी इति वा । छन्दसः रक्षणार्थं एवं "तेजस्वी" इत्येव लिखितं वा ।

कुम्भे कुलद्वयप्रीतिर्धर्मसौभाग्यमुत्तमम् ।
मीने [1]दारिद्र्यदुःखी च कन्या ऋतुमती भवेत् ।। 24 ।।
[A]आधिः पातिव्रत्यं दुःखं पुत्राप्तिः [2]सर्वसम्पत्तिः ।
सौभाग्यमर्थनाशो रविवाराद्येषु [3]पुष्पिताः स्युः ।। 25 ।।

## [इति] रजोनिर्गमनानुकूल्यम् । अथ विवाहानुकूल्यम्

जातो जन्मत्रयात्स्त्रीणां विपत्प्रत्यरनैधने ।
वर्ज्योऽत्रापि विशेषेण [4]कुवेदाग्न्यंशजाः क्रमात् ।। 26 ।।
द्वितीयाज्जन्मभाद्वर्ज्याः कुवे[5]दाग्न्यंशजा इमे ।
[6]उग्रांशकोद्भवाः सर्वे तृतीयाज्जन्मभाद्धुताः ।। 27 ।।
कुवेदाग्न्यं[7]शजत्वस्य नानुवृत्तिरिहेष्यते ।
पूषाश्विमित्रहरि[8]वाय्वदितीन्द्विनार्या
देवा [9]नरास्तु यमपूर्वशिवोत्तराजाः ।
दैत्याः पराः कलहमृत्युभयश्रियः स्यु-
र्देवासुरेऽसुरनरे नृसुरे समे च ।। 28 ।।

---

पुष्पिता = रजस्वला । अथ स्त्रीपुंसोर्जन्मर्क्षयोः परस्परसम्बन्धात् शुभाशुभमाहुः । **जात** इति । स्त्रीणां जन्मत्रयात् विपत् प्रत्यरनैधने तृतीयपञ्चमसप्तमनक्षत्रे जातः पुरुषो वर्ज्यः । जन्मर्क्षात् विपत्प्रत्यरनैधनेष्व[10](पि) क्रमात् कुवेदाग्न्यंशजस्तु विशेषेण वर्ज्यः । एवं प्रथमजन्मर्क्षात् विपत्प्रत्यरनैधनेष्वपि कुवेदाग्न्यंशजस्य दोषाधिक्यं वेद्यम् । द्वितीयाज्जन्मभात् विपत्प्रत्यरनैधनेषु तु इमे पुरुषाः कुवेदाग्न्यंशजाः वर्ज्याः । तृतीयाज्जन्मभात् विपत्प्रत्यरनैधनेषु तु पापांशकजाता वर्ज्याः । सर्वे एकस्मिन् ऋक्षे द्वौ चे[11](त्तौ) द्वावपि वर्ज्यावित्यर्थः । इह तृतीयजन्मविपदादिषु कुवेदाग्न्यंशजस्यानुवृत्तिर्नेष्यते । पापत्वमेवांशस्य चिन्त्यमित्यर्थः । द्वितीयजन्मर्क्षस्य कर्मत्वमिति संज्ञा स्यात् । तृतीयजन्मर्क्षस्य तु आधानर्क्षमिति । मुहूर्तकालेऽप्येवं विपदादीनां दोषकल्पना । देवासुरादिगणयोगे क्रमात् कलहादयः स्युः । एतत् गणानुकूल्यम् । पूर्वोक्तन्तु दिनानुकूल्यम् ।

---

1. M पाठः । T दरिद्र
2. M पाठः । T सर्वसम्पती $T_1$ सकलसंवर्ती
3. $T_1$ पुष्पिता याः स्युः M पुष्विितायाः स्युः
4. $T_1$ कुवेदान्यंशजः क्रमाः
5. $T_1$ दाग्यंशजा
6. $T_1$ उग्रांशोद्भवाः
7. $T_1$ गजत्वस्य
8. $T_1$ वाटवदितिन्दुनार्या
   M वाय्वदितीन्दुनार्या
9. M पाठः T नारस्तु T नारस्तु
10. $T_1$ वि for पि
11. $T_1$ चेत्तौ

---

A. अत्र छन्दो भङ्गः दृश्यते ।

माहेन्द्रोऽब्ध्यद्रिदिक्तारा: कन्याजन्म[1]त्रयाच्छुभाः ।
स्त्रीजन्मतोऽतिदूरस्थं पुंजन्मर्क्षं शुभावहम् ।। 29 ।।

वाजीभाजवधूरगाहिसरमामार्जारबस्ताखु भु -
ङ्मूषा[2]खूक्षलुलायसिंहमहिषव्याघ्रैणसारङ्गिकाः ।

कौलेयप्लवगोक्षवानर[3]मनुष्याश्वाङ्गनागोद्विपाः
भानां योनिरुदाहृताः प्रकृतितस्तास्वानुकूल्यं शुभम् ।। 30 ।।

कन्याजन्मर्क्षतो द्वित्रिवेदबाणाङ्गराशिजः ।
वर्ज्यो ग्राह्योऽपरो भिन्ननक्षत्रश्चैकराशिजः ।। 31 ।।

ओजराशि[4]भुवां स्त्रीणां [5]मध्यौ [6]ष(ष्ठा)ष्टमर्क्षजौ ।
युग्मराशिभुवां [7]निन्द्यः षष्ठजोऽष्टमजः शुभः ।। 32 ।।

शस्तमैक्यं च मित्रं च पुंस्त्रीजन्मर्क्षनाथयोः ।

---

**माहेन्द्रेति** - माहेन्द्राख्यम् । अत्र यथोक्तनक्षत्रे पुरुषस्य जन्म विवक्षितम् । [8]स्त्रीजन्म(त) इति । [7]सृंक्षाख्यं अतिदूरस्थं पञ्तदशर्क्षादिकं वा । **वाजीति** । अजवधू इत्येकपदम् । [9]आखु(भु)ङ् मार्जालः । मूषा मूषिका । आखुश्च मूषिकः । लुलायो महिषः । सारङ्गिका मृगी । [10](कौ)लेयः सारमेयः । [11]प्लव(गो) वानरः । अङ्गना नारी । प्रकृतित्वानुकूल्यं स्त्रीपुरुषजन्मर्क्षमृगयोः स्वभावतः, वन्धुत्वं शुभम् । कन्या[12]जन्मर्क्ष(त) इति राश्याख्यं । ओजराशिभुवां = ओजराशिस्थे [13]चन्द्रे जातानां स्त्रीणां । शस्तमित्यधिपतिसंज्ञम् ।

---

1. $T_1$ त्रया शुभाः
2. M खूष्ट्र
3. $T_1$ महिष्य
4. M पाठः
   T तथा $T_1$ भवां
5. M मध्यो
6. T $T_1$ तथा M षष्ठष्ट
7. M निन्द्यं
8. T स्त्रीजन्मता इति
9. $T_1$ आखुभृङ्
10. $T_1$ तौलेयः
11. T पल्वङ्को
12. T जन्मर्क्षका इति
    $T_1$ जन्मर्क्ष इति द्र.मू.
13. $T_1$ चन्द्रे चन्द्रे for चन्द्रे

सिंहालिनौ मुनिकृतावृतुरष्टमाश्वौ
तौलिस्तृतीयशफरौ दिगृतू समुद्रः ।
[1]मीनो घटः [2]प्रथमभः प्रथमो मृगोऽमी
मेषादिराशिवशगाः पदशो मयोक्ताः ॥ 33 ॥
[3]दस्रा(त्)त्रिकं त्रिकं कल्प्यं [4]त्र्यङ्गुलीषु क्रमोत्क्रमात् ।
एकाङ्गुलिगते वर्ज्ये दम्पत्योर्जन्मतारके ॥ 34 ॥
मध्यमाङ्गुलिगते चेन्मृतिवैरदिकारके ।
[5]सपराः सार्पपौष्णेन्द्रास्तत्र्यङ्कास्तच्छराचलाः ।
[6]तत्षष्ठास्तच्चतुर्नागा वेध[7]तारा विनिन्दिता ॥ 35 ॥
दस्रात् क्ष्मादीनि भूतानि पञ्चषट्पञ्चषट्छराः ।
भूतैक्यं शुभमग्न्यम्बु[8]योगो निन्द्यः परे समाः ॥ 36 ॥
विश्वेन्द्रान्त्याम्बुवस्वीश[9]चित्रा(ग्न्य)हिचतुर्यमाः ।
स्त्रियो नपुंसका मूलशतचन्द्राः परे नराः ॥ 37 ॥

---

**सिहालिनाविति** वश्याख्यम् । मुनिकृतौ = सप्तमचतुर्थौ । तथा च बार्हस्पत्ये - ''मेषस्य वश्यौ सिंहालिर्कर्किजूकौ वृषस्य तु'' इति । स्त्रीजन्मभस्य वश्याख्यराशौ पुरुषस्य जन्मभं चेद्वश्यं स्यादित्येके । [10]उभयोरेकजन्मभस्य वश्याख्य[11]राशावितरजन्मभं चेद्वश्यं स्यादित्यन्ये । **दस्रादिति** रज्जुसंज्ञम् । दस्रादिक्रमेण [12]रौहिणिभात् त्रिकमुत्क्रमेण, पुनरप्येवम् । **सपरा** इति वेधाख्यम् । सार्पपौष्णेन्द्रास्ताराः तारायुता एको वेधवर्गः । पुनस्तासां सार्पपौष्णेन्द्रताराणां तृतीयतारकानवमतारकाश्चेति षडेको वेधवर्गः । पुनस्तासां सार्पपौष्णेन्द्राख्यानां पञ्चमा-सप्तमाश्चेति षडेको वेधवर्गः । पुनस्तासामेव षष्ठा इति त्रय एको वर्गः । पुनस्तासामेव चतुर्नागा इति षडेको वर्गः । एकस्मिन् वर्गे स्त्रीपुरुषयोर्जन्मभं चेन्निन्दितम् । अत्र वेधरहितमानुकूल्यम् । **दस्रात्** [13]क्ष्मादी(नी)ति - भूताख्यम् । परे समा मध्या इत्यर्थः । **विश्वेति**-योतिसंज्ञम् । अत्र स्वयोनौ स्वज्म शुभदम् ।

---

1. $T_1$ मीने
2. $T_1$ प्रथमभौ
3. T, $T_1$ तथा M दस्रात्रिकं
4. M त्र्यङ्गूलीषु
5. M सवराः द्र.व्या.
6. $T_1$ तत्षष्ठान्तच्चतु
7. M वेधतारापि निन्दिताः
8. $T_1$ योगे
9. T चित्राद्यहि $T_1$ चित्रागहि M चित्रात्यहि
10. $T_1$ उभयोकजन्म
11. $T_1$ राशिवित
12. $T_1$ पुरोहिणिका त्रिक
13. T तथा $T_1$ क्ष्मादीनिति

**विप्रक्षत्रियविट्छूद्रप्रतिलोमानुलोमकाः ।**
**[1]दस्रात्तारा: क्रमात्कल्प्या जात्यैक्यं शुभदं स्मृतम् ।। 38 ।।**

**[2]भारुण्डः पिङ्गली काकः कुक्कुटश्च मयूरकः ।**
**[3]दस्रात्पञ्चाङ्गषट्पञ्चशराः पक्षैक्यमुत्तमम् ।। 39 ।।**

**मातरो [4]ब्रह्मषड्वक्त्र वराहहरिराक्रजाः ।**
**काल्यैश्वरीश्रियो ब्रह्मगुहःसूकरविष्णुजाः ।। 40 ।।**

**कल्प्याःसप्तर्षयो दस्रा (दृषिभेदः) शुभावहः ।। 41 ।।**

**[5](आ)स्त्रीपुंजन्मभं दस्रात् संख्यायोगः [6]सविश्वभः ।**
**दन्तोनितशराच्छिन्न[7]शिष्टो विषम उत्तमः ।। 42 ।।**

---

**स्त्रियो** नपुंसकेति शुभदं पुरुषस्य पुंस्त्वे स्त्रीस्त्रीत्वे पुरुषस्य नपुंसकत्वं मध्यमद्वयोर्व्यत्यये कष्टम् । एकलिङ्गत्वञ्च नेष्टम् । **विप्रेति** वर्णाख्यं, अश्विन्यादयः करादयश्च मूलादयश्च अजैकपादादित्रयं ब्राह्मणक्षत्रियवैश्याः । तथा च बार्हस्पत्ये "अजैकपादतस्तिस्रस्तारा[8](स्त्रै)वर्णिनामपि" इति । अत्रानुलोमतः प्राक्प्रतिलोमोक्तौ हेतुर्जात्यैक्यग्रहणे भेदाभावः इति कल्प्यते । [9]**भारुण्ड** इति विहगाख्यम् । **मातर** इति मात्राख्यं कल्प्यः । [10]**सप्तर्षय** इति ऋषिसंज्ञम् । अत्र दस्रादयो अभिजिद्युक्ताः सप्त सप्त चतुर्वारं गण्याः । तथा च बार्हस्पत्ये - "अश्विन्यादिषु तारासु साभिजित्सु विजानता । चतुर्भिर्मण्डलैर्योज्या [11]मु(नि)योगोऽत्र योगतः ।।" इति । आस्त्रीरिचोदाख्यः? । दस्रात् स्त्रीजन्मर्क्षान्तं पुंजन्मर्क्षान्तं च पृथग्गणयित्वा तत्संख्याद्वयस्य योगे त्रयोदशसंख्या प्रक्षिप्य तस्मात् [12]द्वा(त्रि)शत्संख्यां विशोध्य शिष्टं पञ्चभिर्विभजेत् । तत्र शिष्टो विषमसंख्यश्चेत् [A]अधमः । अत्र दन्तानामशोध्यत्वे व्युत्क्रमेण गणनां वक्षति ।

---

1. $T_1$ अस्मात्तारा:
2. $T_1$ भारण्डः
3. $T_1$ द्रस्रात्
4. $T_1$ ब्राह्म
5. अस्त्री मातृकात्रयेऽपि. द्र.व्या.
6. $T_1$ तथा M सविश्वभाः
7. $T_1$ रिष्टो
8. $T_1$ स्त्रेवर्णि
9. $T_1$ कारुण्ड
10. $T_1$ सप्तर्षयं
11. $T_1$ मुनयोगोऽत्र
12. T द्वाविंशत् संख्या द्र.मू.

---

A. मूले विषम उत्तम इति दृश्यते ।

इत्थं विंशतिधा प्रोक्तेष्वानुकूल्येषु पुंस्त्रियोः ।
[1]प्रधा(ना) राशिराशीशवश्यमाहेन्द्रयोनयः ॥ 43 ॥

सुरासुरेतिश्लोकेन विशेषो [2](ग)ण ऊह्यताम् ।
सुरासुरगणे पुंसि यदि स्त्री मानुषे गणे ॥ 44 ॥

क्रमादुत्तममध्याः स्युर्विपरीतमशोभनम् ।
गजाश्विगोनराऋश्यो बस्तकश्च [3]बि[A](डा)लकः ॥ 45 ॥

अन्योन्यशुभदास्त्वेते व्याघ्रसर्पौ मृतिप्रदौ ।
बि[4](डा)लभूजगाश्चा[5]खू परस्परविरोधिनौ ॥ 46 ॥

महिषाश्वौ मिथः शत्रू सर्वत्र शुभदो हरिः ।
श्वाखुमार्जालशार्दूलसर्पा अन्योन्यशत्रवः ॥ 47 ॥

जन्मर्क्षात्पुरुषस्याथ स्त्रीजन्मर्क्षं चतुर्थकम् ।
माहेन्द्रञ्च [6]ततस्तस्मादुपेन्द्रञ्च विदुर्बुधाः ॥ 48 ॥

---

**इत्थमिति** । पुंस्त्रियोरित्थं विंशतिधा प्रोक्तेष्वानुकूल्येषु राशि[7]रा(शीशा)दयः प्रधाना बलवन्तःस्युः । अत्र वक्ष्यमाणानि त्रीण्यानुकूल्यान्यायव्ययाख्यपाण्ड्याख्यजात्याख्यानि । प्रोक्तेष्वाकृत्य विंशतिधेत्युक्तम् । अतो विंशतिधेति वचनमनवद्यम् । वयसानुकूल्यं तज्जन्मर्क्षसिद्धं न स्यात् । जन्मर्क्षात् पुरुषस्येतन्माहेन्द्रमेव । अन्यानि प्रोक्तविशेषाणि । अथ प्रोक्तस्यैव विशेषमनुक्तं चाह-सुरासुरेति । उत्तममध्याः स्युः । यदा देवगणो पुरुषः मानुषगणा स्त्री च तदा जाता विवाहयोगा [8]उत्तमाः स्युः । [9]यदा असुरगणे पुरुषः मानुषगणे स्त्री च तदा जाता विवाहयोगा मध्यमाः स्युः । विपरीतमशोभनम् । यदा सुरासुरगणे स्त्री मानुषगणे पुरुषश्च तदा क्रमादशोभनं भवति । अशोभनमत्यशोभनञ्चेति । पूर्वोक्ते मृगाख्ये विसेषमाह-गजाश्वीति । ऋष्य एणः । बस्तकोऽजः । [10]बि(ऽा)लो मार्जारः । मृगबाहुल्यान्मृगानुकूल्यमित्युच्यते । जन्मर्क्षादिति माहेन्द्रविशेषः ।

---

1. T प्रधान द्र.व्या
2. T गुण
3. T बिलालकः
4. T बिलालकः
5. $T_1$ "खू" इति ग्रन्थपातः
6. M ततस्तावदुपेन्द्रञ्च
7. T $T_1$ राशिरादयः द्र.मू.
8. $T_1$ मध्याः
9. "यदा" इत्यारभ्य ततः द्वितीयपङ्क्तिगात "मध्यमाः स्युः" पर्यन्तं $T_1$ मातृकायां ग्रन्थपातः ।
10. T बिलालो

---

A: सर्वत्र बिडालशब्दस्य "बिलाल" इत्येव लिखितमस्ति ।

माहेन्द्रे धनधान्याप्तिरूपेन्द्रे च प्रजान्वितः ।
मकरकेसरि मेषयुवत्यौ तुलधरमीनकुलीर[1]घटौ च ।
[2]वृषभकार्मुककोर्पिनृयुग्मौ [3]सु[A]शुभमष्टमषष्ठभमाहुः ॥ 49 ॥

षष्ठाष्टमे मरणवैरवियोगदोषो
द्विद्वादशे [4]विधनता[5]प्रजता त्रिकोणे ।
[6]शेषेष्वनेकविधसौख्य[7]सुतार्थसम्पत्
सद्यो शुभं भवति राशिपयोस्तु मैत्रे ॥ 50 ॥

षष्ठाष्टमादावपि वैरवेधे
ऐक्ये च वश्ये च न दोष एषः ।
विरुद्धयोनौ शुभकोण[8]भावो
विपुत्रभेष्वात्मजहा सुनिश्चितम् ॥ 51 ॥

---

मकरकेसरीत्यादिपठितराशियुग्मजातमष्टमषष्ठभाख्यं राशियोगं सुशुभमाहुः । अत्रैव सुशुभमित्यर्थः । **षष्ठाष्टम** इति । शेषेषु अनुक्तेषु । षष्ठाष्टमादौ अनिष्टराशियोगे सति [9]वैर(वे)धे अधिपतयोः शत्रुत्वे वेधे वा जाते । सद्यो शुभं भवति = शीघ्रं भवतीत्यर्थः । [10]राशि(प)यो(र्मि)त्र भावे ऐक्ये वा जाते [11](व)श्ये जाते च एष राशिदोषो न स्यात् । [12]भको(ण)भावो = राश्यो[13](स्त्रि)कोणभावः, पञ्चमनवमाख्य इत्यर्थः । स आत्मजहा स्यात् । विपुत्रभानि तु कन्यालिगोहरयः ।

---

1. $T_1$ पाठः । T तथा M घटेन च
2. M वृषधनुर्धरकोर्पि
3. M षष्ठरन्धभवने सुशुभाय
4. $T_1$ विजनता M विधनात
5. $T_1$ पाठः ।T तथा M व्रजता
6. $T_1$ शेषष्व
7. M सुखार्थ
8. M पाठः । T तथा $T_1$ भवो
9. T वैरधे द्र.मू.
10. T राशिवयोमित्र
11. T पश्ये
12. T भक्रोणे
13. T स्तिकोणः

---

A. अत्र मूले व्याख्याने च सुशुभमिति । लोके तु अशुभषष्ठाष्टम इत्येव अङ्गीक्रियते । अत्र त्वशुभमष्टमषष्ठं इति भवेद्वा ।

अर्धभानां मिथो वेधो विवाहे रौद्रवैष्णवौ ।
[1]अश्विशक्रान्मघा[2]पौष्णादन्यश्चापि क्रमोत्क्रमात् ॥ 52 ॥

मेषवृश्चिकयोः सिंहघट[3]चापास्तु शत्रवः ।
तुला[4]वृषाख्ययोर्नित्यं शत्रू मकरकर्कटौ ॥ 53 ॥

कन्यामिथुनयोः सिंहमेषो[5]क्षा(ण)स्तु शत्रवः ।
कर्कटस्याजसिंहाख्यतुलामृगघटा धनुः ॥ 54 ॥

[6]वृषभश्चारयः प्रोक्ताः सिंहस्य झषवृश्चिकौ ।
वृषजूकौ नृयुक्कन्या घटकर्की च शत्रवः ॥ 55 ॥

मेषवृश्चिक[7]सिंहास्तु शत्रवो वाजिमीनयोः ।
कर्किवृश्चिकसिंहाश्च शत्रवो मृगकुम्भयोः ॥ 56 ॥

शिरोवेधः पतिं हन्ति कण्ठ[8]वेधस्तु योषितम् ।
नाभिवेधः [9]प्रजां हन्ति सक्थिवेधः [10]कुलक्षयम् ॥ 57 ॥

---

विवाह[11]त्यनिष्टयोगमाह **अर्धभानामिति** । अर्धभानि = वस्वीन्दुचित्रभानि परस्परविद्धानि । रौद्रवैष्णवौ च परस्परविद्धौ । तथाश्वि[12](श)क्रौ च । तथा मखापौष्णभे च । अन्यदनुक्तं परस्परविद्धं नक्षत्रयुग्म[13]मुक्तादेव नक्षत्रयुग्माद्रौद्रवैष्णवादश्विशक्रान्मघापौष्णाच्च [14]क्र(मो)त्क्रमाभ्यां गणयित्वा वेधम् । यथा रौद्रस्योर्ध्वभमदितिभं, वैष्णवस्य पूर्वं विश्वभं च । एतद्द्वयं विद्धम् । तथादितिभस्योर्ध्वं पुष्यभं, विश्वभस्य पूर्वमाषाढमेतद्द्वयं च विद्धम् । तथाश्लेषामूलभे च । तथा पूर्वफल्गुनीबुध्निभे । [A]भगैकपद भे । हस्तवारुणभे च । **मेषवृश्चिकयोरिति** शत्रुभावः । प्रोक्ते वेधे फलविशेषमाह **शिरो वेध इति** ।

---

1. M अश्वीश
2. M पौष्णावन्यश्चापि
3. $T_1$ चापा सशत्रवः M चापानि शत्रवः
4. $T_1$ विषाय
5. T मेषोक्षास्तु $T_1$ मेषोक्षाण स M मेषोक्षाणास्तु
6. $T_1$ ऋषभश्चारयः
7. $T_1$ सिंहाश्च
8. $T_1$ वेधास्तु
9. $T_1$ प्रजा
10. $T_1$ कुलक्षयः
11. $T_1$ त्यनिष्टमयोगमाह
12. T चक्रौ
13. $T_1$ "मुक्तादेव नक्षत्रयुग्मा" इति ग्रन्थपातः
14. T क्रमात्क्रमाभ्यां द्र.मू.

---

A. अत्र अर्यमाजैकपद भे इति वा ।

पादवोधोऽतिविभ्रंशं दारिद्र्यं च प्रयच्छति।
अर्धभेषु शिरोवेधः तदूर्ध्वार्धस्तु कण्ठगः ॥ 58 ॥

तत्समीप(ग)भे[1]ष्वन्ये वेधा अपि मताः क्रमात्।
जन्मसम्प[2]द्विपत्क्षेम[3]प्रत्यरं साधको वधः ॥ 59 ॥

मैत्रं परममैत्रं च जन्मादीनि पुनः पुनः।
स्त्रियास्त्रिगुणसंयुक्तवयस्कः शुभकृत्पुमान् ॥ 60 ॥

द्विगुणं मध्यमं [4]प्रोक्तमधमं किञ्चि[5]दाधिकम्।
पुंसि [6]स्त्रियोऽल्पवयसि वंशोच्छेदो न संशयः ॥ 61 ॥

आयुष्यं [7]दिनसौख्ये तु वयःसौख्यं मनोरमम्।
गणयोगे तथा रम्यं माहेन्द्रं पुत्रपौत्रकृत् ॥ 62 ॥

स्त्री ऋक्षं मङ्गलं विद्याच्छुभयोनिः श्रियावहा।
एकराशिर्द्विनक्षत्रं पुत्रपौत्रादिवृद्धिकृत् ॥ 63 ॥

नक्षत्रैक्ये विषाद्भीतिः सम्प्रीतिः समसप्तमे।
ऋक्षसन्धिगतं द्विर्द्वादशं दारिद्र्यकृत्तराम् ॥ 64 ॥

रोहिण्याद्रा श्रविष्ठा च तिष्यमूलमघानि षट्।
[8]दम्पत्योर्जन्मनक्षत्रमेक[9]तारं सुदुःखदम् ॥ 65 ॥

आषाढ भरणीहस्तसार्पेन्द्रवरुणानि षट्।
दम्पत्योर्जन्मनक्षत्रं नष्टायुः श्रीवियोगदम् ॥ 66 ॥

---

वेधचक्रसिद्धं शिरःकण्ठादिविभागमाह-अर्धभेष्विति। अर्धभेषु शिरोवेधः स्यात्। पुनस्तदूर्ध्वाधस्तेषु कण्ठवेधः। पुनस्तत्समीपगतेषु नाभिवेधः। पुनस्तत्समीपगतेषु पादवेधः। [A]इति। स्त्रियास्त्रिगुणेति वयोयोगः। प्रोक्तेषु केषुचित्फलमाह आयुष्यमिति। वधनक्षत्रयोगे दिनदोषादायुर्हानिः। माहेन्द्रगुणात् पुत्रसिद्धिश्चेत्यत्र फलप्रदर्शनात् सिध्यति। [10]नक्षत्रै(क्ये) इति। सामान्यफलम्। रोहिण्याद्रेत्याषाढभरणीति विशेषफलम्।

---

1. $T_1$ भेष्वन्ते
2. M द्वि ...त्क्षैम
3. $T_1$ प्रत्यरः
4. M प्राहुरधमं
5. $T_1$ दा– –कम्
6. $T_1$ स्त्रियोत्ववयसि
7. $T_1$ तथा M दिनसौख्येषु वयःसौ
8. M "दम्पत्योर्जन्म" इत्यारभ्य ततः द्वितीयपङ्क्तिगत "वरुणानि षट" पर्यन्तं ग्रन्थपातः
9. $T_1$ दारं
10. T नक्षत्रैके

---

A. अत्र सक्थिवेधबोधकवाक्यं न दृश्यते।

अन्योन्यवश्यं पितृवैष्णवं च
सयाम्यमैन्द्रं पितृवैष्णवञ्च ।
हस्ताश्विनं कृत्तिकाषाढयोश्च
विवाहयोगः सुखपुत्रदश्च ॥ 67 ॥

भगाद्यं वरुणान्त्यञ्च योगोऽयं वंशवर्धनः ।
वसुपुष्यसमायोगो वंशोच्छेत्ता न संशयः ॥ 68 ॥

कन्यालिगोहरिष्विन्दुस्त[1]दंशो वाथ लग्नभम् ।
सह स्याद्यदि दम्पत्योः पुत्रसिद्धिः सुदुर्लभा ॥ 69 ।

द्विराशिभे पूर्वभागे स्त्रीनिन्द्या शस्यते पुमान् ।
दन्तादूने व्युत्क्रमेण गणना चोलजैर्मता ॥ 70 ॥

पुत्रवृद्धिर्मृतिर्वृद्धिर्व्याधिसम्पच्च तत्फलम् ।
अश्विन्या योजयेज्जन्म दम्पत्योरिषुभिर्हृते ॥ 71 ॥

[2]श्रीवृद्धिर्विपदोऽति[3]श्रीरत्या(प)[4]पाण्ड्यसम्मता ।
स्त्रीजन्मभाद्वरर्क्षान्तं गणयित्वा शरैर्हृते ॥ 72 ॥

---

अन्योन्यवश्यमिति-यथोक्तनक्षत्रद्वययोगः शुभकृदित्यर्थः । सयाम्यमैं
चैन्द्रं कृत्तिकाषाढयोर्विवाह[5]योगश्चेति सम्बन्धः । भगाद्यमित्य[6]त्रा(द्य)
किलोच्यते ।तथा वरुणान्त्यमित्यत्रान्त्यशब्देन [7]पूषभं च । तदंश
द्विराशिभे = राशिद्वयगतनक्षत्रे । [8]दन(ता)दिति - आस्त्रीपुंजन्म भादि
सति तन्मानं दन्ताद्विशोध्य शेषात् पञ्चहृतात्फलं गणयेदिति चोल
पुत्रवृद्धिरित्यादिफलम् । अश्विन्या योजयेदिति पाण्ड्यख्याम्
पाण्ड्यसम्मता एषा विधेति शेषः । स्त्रीजन्मभाद्वरर्क्षान्तमित्यायव्यया

---

1. $T_1$ स्तदंशे
2. $T_1$ श्रीवृद्धिविपदो
3. T श्रीरत्यावत्
4. M पाड्यजैर्मता
5. $T_1$ र्योगश्चेति
6. $T_1$ त्राद्यां शब्देन
7. $T_1$ पूषं
8. T दन्तदिति

मुनिभिर्भाजिते [1]शिष्टं व्यय आयो नृजन्मभात् ।
मृगमीनौ विहङ्गाख्यावलिकर्की [2]सरीसृपौ ।। 73 ।।

पशवो मृगसिंहाजगावो प्रायः परे नराः ।
योन्यैक्यं चोत्तमं विद्यान्मध्यमं पशुमानुषम् ।। 74 ।।

सरीसृपविहङ्गाभ्यां पशुयोगं कनीयसम् ।
तिर्यङ्मनुष्यसंयोगं न कदाचित् समाचरेत् ।। 75 ।।

प्राजापत्याग्नि[3]शशिनः म[4](घा)भाग्यार्यमाधिपाः ।
मित्रेन्द्रमूलवसवो [5]वारुणाजैकपादपि ।। 76 ।।

वृद्धिसंज्ञानि चैतानि पौष्णादित्याश्वियाम्यभम् ।
[6]पुष्यत्वाष्ट्र भ[7]युग्वायुर्विशाखा[8]विश्ववैष्णवम् ।। 77 ।।

ऋणव्ययादिसंज्ञाः स्युः पूर्वाषाढार्द्रहस्तभम् ।
उत्तरा[9]भद्रपाश्चैव [10]महर्द्धिफलसंज्ञकम् ।। 78 ।।

[11]महर्द्धिभे सदा सौख्यमृर्द्धि(भे)[12]षु समं स्मृतम् ।
[13]व्ययर्द्धि(भे)ष्वष्टभेषु ऋणव्ययफलं विदुः ।। 79 ।।

---

नृजन्म[14]भा(त्) स्त्रीजन्मभान्तं गणयित्वा शरैर्हते मुनिभिर्भाजिते शिष्ट[15]मायः । सप्तसंख्ये शेषे पूर्णायः । मृगमीनाविति जात्याख्यम् । योन्यैक्यजात्यैक्यं नक्षत्रवर्गभेदेन। संज्ञाभेदं फलञ्चाह-[16](प्रा)जाप(त्ये)ति। अत्र [17]क्रमग(त)नक्षत्र-द्वयस्य योगात् सप्तेत्येके । व्ययर्द्धिभेष्विति गृहीतम् । व्ययर्णदेष्विति वा पाठः ।

---

1. M शिष्टो
2. $T_1$ सरिसृपौ
3. M पाठः । T तथा $T_1$ वरुण
4. T मखा
5. $T_1$ वरुणा
6. M पुष्यभं त्वाष्ट्र्यु
7. M पाठः । $T_1$ तथा $T_1$ युग्वायु
8. M पाठः
9. M भद्रप्राच्यैव
10. $T_1$ महन्धि
11. $T_1$ महद्धिदे
12. T देषु
13. T व्ययद्धिदेष्वष्ट
14. T भाक्
15. व्यः सप्तसंख्ये "इत्यारभ्य ततः विंशतितमपङ्क्तिगात" लग्ने पापयुते" पर्यन्तं $T_1$ मातृकायां ग्रन्थपातः ।
16. T व्रजापत्याति
17. T क्रमगसनक्षत्र

ज्येष्ठाद्या पञ्च त्रिकवसुभयमाजैकपादोऽश्विनी च
स्वातीद्वन्द्वं पुमांसः स्त्रिय इति कथितास्तत्त्वविद्भिस्ततोन्याः ।
कष्टञ्चोभौ पुमांसौ विसदृशमथ चेत्कष्टकष्टन्तु [1]या(म्य)म्
स्त्रीलिङ्गं चोभयञ्चे[2]त्सदृशमथ तयोः सम्पदास्ते चिराय ।। 80 ।।

भूयांसः सम्प्रदायज्ञा लिङ्गक्लृप्तिमिमां जगुः ।
चन्द्राष्टवर्गे [3]शुक्ला(क्ष) भूयस्त्वं [4]स्त्रीनृचेतसोः ।। 81 ।।
[5]मिथःसक्थिञ्च विज्ञाय त्वानु[6]कूल्यानि निर्दिशेत् ।

## इति विवाहानुकूल्यम् । अथ विवाहप्रश्नः ।

नीचारिगृहगैः पापै[7]र्लग्नेऽस्ते वाष्टमेऽपि वा ।
युक्त [8]उद्वाहके प्रश्ने दम्पत्योर्न शुभं [9]भवेत् ।। 82 ।।

लग्नात् षष्ठाष्टमे चन्द्रश्चन्द्रात् षष्ठाष्टमे कुजः ।
यदि वर्षाष्टकैर्याति पुमान्यमम[10]पुत्रकः ।। 83 ।।

पाप[11]युक्तोदयाच्चन्द्रः षष्ठे वाप्यष्टमे स्थितः ।
विवाह[12]समयान्मृत्युं दद्यादब्दाष्टमे तयोः ।। 84 ।।

---

**ज्येष्ठाद्या** इति-योनिविशेषः । [13]विसदृ(शं)=विरुद्धम् । कष्टकष्टमतिकष्टम् । सदृशं चेत् स्वस्वयोनिजन्मभद्वयं चेत् तयोः सम्पत् चिराय आस्ते । चन्द्राष्टवर्गे शुक्लाक्षभूयस्त्वमिति स्वचन्द्राष्टवर्गे बह्वक्षराशिषु । अन्यज्जन्मभं चेत् शस्तम् । तथा स्त्रीपुरुषयोर्मिथः सक्थिश्च शस्ता । एतद्द्वयं विशेषाच्छस्तमित्यर्थः । विवाहानुकूल्यम् । अथ प्रश्नवशाच्छुभाशुभमाह - **नीचारीति** । पापयुक्तो यदा चन्द्र इति केषुचित्पाठः । पापयुक्तोदयश्चन्द्र इति केषुचित् ।

---

1. $T_1$ पाठः ।
   T तथा M याप्यम्
2. $T_1$ सदृशसदृश for सदृश
3. T शुक्लाक्षे द्र.व्या.
4. $T_1$ स्त्रीनिचेतसोः
5. $T_1$ मिथसक्त्थिञ्च
6. M कूल्या विनिर्दिशेत्
7. M लंग्तौस्ते
8. M उद्वाहने
9. M वेदत्
10. M पुत्रकम्
11. M युक्तो यदा चन्द्र
12. $T_1$ समया मृत्युं
13. T विसदृश

**रिपुनीचगृहे पापो ह्यरिणा वीक्षितोऽपि वा।**
**यदिपापगृहे कन्या विधवान्यत्र सद्गृहे ।। 85 ।।**

**पञ्चमर्क्षे यदा पापः शत्रुदृष्टः स्वनीचगः ।**
**कुलटा सा भवेत्कन्या मृतपुत्रा थवा भवेत् ।। 86 ।।**

**चन्द्रभौमौ यदा युक्तौ लग्नसप्तमयोस्तदा ।**
**प्रश्नकाले [1]यमं याति सप्तमे मासि तत्पतिः ।। 87 ।।**

**चन्द्रलग्नौ शुभांशस्थौ सजीवौ पृच्छते वदेत् ।**
**पापांशकगतौ तौ चेज्जीवनं न तयोर्द्वयोः ।। 88 ।।**

**लग्नात्सप्तमभे शून्ये [2]दुर्बले दुर्ग्रहेक्षिते ।**
**सौम्यग्रह[3]दृशाहीने भर्ता [4]कापुरुषो भवेत् ।। 89 ।।**

**[A]लग्नं स्त्रीजन्मलग्नं वा ........................**
**[5]ज्ञार्कीयुक्ते [6]चरेऽस्तर्क्षे क्लीबो भर्ता प्रवासकृत् ।**
**अस्तभे यमदृष्टेऽर्के भर्त्रोत्सृष्टा भवेद्वधूः ।। 90 ।।**

---

**रिपुनीचगृहे** पाप इति। अत्राष्टमगतः पापग्रहः पाप इत्युच्यते। पूर्वश्लोकगतस्य अष्टमेति पदस्य अत्राधिकारादष्टमस्थानसिद्धिः। अथवा पाप[7](गृ)हेत्यत्र पापशब्दो विनाशार्थ इति। अतो विनाशाख्यगृहेत्यर्थः। अथवा यदि चायुर्ग्रहेऽन्य इति पाठः।? तथा च बार्हस्पत्ये - "लग्नाष्टमर्क्षे पापश्चेद्रिपु [नीचसमीक्षितः। विधवा सा] भवेत्कन्या लग्ने पापयुते यदि" ।। इति। कुलटा=दुष्टा। चन्द्र [8]भौ[मा]वित्यत्र लग्नसप्तमयोः क्रमादिति च पाठः। [9]सजीवौ आयुष्मन्तौ दम्पती इति शेषः। कापुरुषः कुत्सित इति। अत्र [10]ल(ग्नं) स्त्रीजन्मलग्नं वा। पूर्वोक्ता योगा अपि स्त्रीजन्मलग्नान्निरुप्या। अत ऊ[11](र्ध्व)मुक्तास्तु स्त्रीजन्मलग्नाद्विशेषतो निरूप्या इति सम्प्रदायविदः।

---

1. $T_1$ समं
2. $T_1$ दुर्लभे
3. M दशाहीने
4. $T_1$ तापुरुषो
5. $T_1$ इतियुक्ते for ज्ञार्कीयुक्ते
6. M परेऽस्तर्क्षे
7. T ग्रहे द्र.मू.
8. T भौवित्यत्र द्र.मू.
9. $T_1$ सजौवौ T सजीवौ आयुष्मन्तौ इति द्विवारं लिखितम्।
10. T लग्नः
11. T ऊर्ध्वामुक्तस्तु

---

A. तिसृषु मातृकास्वपि "लग्न स्त्रीजन्मलग्नं वा ..." इति लिखितं विद्यते। तत्र एकः श्लोक नष्ट इव भाति।

[A][1]अर्कारमन्ददृष्टेऽर्के युवतिर्विधवा भवेत् ।
कन्यैवास्तं गते मन्दे शत्रुपापनिरीक्षिते ।। 91 ।।

सप्तमे मासि वर्षे वा विधवार्कारयोर्मदे ।
[2]तथा(क्यं)ह्योः पुनर्भूः स्याच्छुभाशुभयुते मदे ।। 92 ।।

बलहीनेऽस्तगे पापे सौम्यग्रहनिरीक्षिते ।
भर्त्रा विसृज्यते नारी नीचारिस्थे तु [B]कैशिकी ।। 93 ।।

अन्योन्यांशे सितारौ चेज्जारसक्ता भवेद्वधूः ।
[3]मन्दारर्क्षे विलग्नस्थौ शशिशुक्रौ यदा तदा ।। 94 ।।

वन्ध्या भवति सा नारी सुतस्थाने न चेच्छुभः ।
अस्तरा[4]श्यंशगे भौमे भौमांशे [5]वास्तगे तथा ।। 95 ।।

मन्दे वास्तांशगे नारी व्याधियोनिश्च दुर्भगा ।
वन्ध्या वा मृतपुत्रा वा भवेत्पापेषु पञ्चमे ।। 96 ।।

---

**अर्का**रिति । अर्कारमन्ददृष्टेऽस्ते युवतिर्विधवा भवेत् इति केचित् पठन्ति । अर्कारयुवती मन्ददृष्टेऽस्ते इति केचित् । तत्पक्षे युवतिशब्देन राहुयुक्तः इति च तैरुक्तम् । तद्वाक्यमेव तत्र प्रमाणम् । आ[6](क्यंह्योः) = मन्दराह्वोः । पुनर्भूः द्विरूढा । अस्तराशिसंज्ञितोंऽशोऽस्तराश्यंशः । [7]तत्रगे भौमे अथवा अस्तराशिगतेंऽशेभौमोंशे मेषवृश्चिकाख्य, अथवा मन्दे अस्त[8]राश्युदितांशगते । पुत्रहन्त्री गर्भस्रावादिकारणात् स्यात् ।

---

1. T अर्कारयुवतीमन्ददृष्टेऽर्के युवतीर्विधवा भवेत् । M पाठः ।
2. T तथाक्यह्योः
3. M मन्दारर्क्षेऽपि लग्न
4. $T_1$ राश्यंगे
5. $T_1$ धास्तगे
6. T आर्केन्द्वोः द्र.मू.
7. $T_1$ तत्रगे इति ग्रन्थपातः
8. $T_1$ राश्युदितांगते

---

A. अत्र छन्दोऽनुरोधेन अर्थानुरोधेन च M पाठः स्वीकृतः ।

B. अत्र वैशिकी इति भवेद्वा ।

नीचारातिगृहस्थेषु पुत्रहन्त्री भवेत्स्वयम् ।
यदि नीचारिगो [1]लग्नमारूढं वा न पश्यति ।
अर्कःस्त्रियः पिता नास्ति मातेन्दुश्चेत्तथाविधः ॥ 97 ॥

[2]लग्नारूढर्क्षयोरस्तं यदार्कः शत्रुनीचगः ।
न पश्यति पिता पुंसो नास्ति माता शशी यदि ॥ 98 ॥

चन्द्रमार्क्यार[3]सर्पे(नाः) स्वनीचारिगता यदि ।
पश्यन्ति कन्यकां विद्यान्मातृहीनां [4]त(थो)दिताम् ॥ 99 ॥

यदोदयं शशी पश्येत् दम्पत्यो[5]र्जननी सुखी ।
न पश्येद्यदि सा नास्ति पितार्केण [6]तथास्त भात् ॥ 100 ॥

पापा यदि [7]निरीक्षन्ते [8]रविर्नीचारि[9](ग)स्तदा ।
पिता मृतोऽथवा गच्छेत्पुत्र[10]विग्रहतः स्वयम् ॥ 101 ॥

[11]प्रश्नलग्नाद्युग्मराशौ कृष्णपक्षे यदा विधुः ।
पापै[12]र्दृ(ष्टोऽ)थवा रन्ध्रे नैव सम्बन्धमाप्नुयात् ॥ 102 ॥

लग्नस्थौ चन्द्रशुक्रौ च चन्द्रशुक्रनिरीक्षिते ।
यदि लाभो भवेत्प्रष्टुः कन्या[13]याश्चाविरोधतः ॥ 103 ॥

बलिनौ यदि शुक्रेन्दू युग्मर्क्षे स्त्रीनवांशगौ ।
द्विपात्स्थौ लग्नमीक्षेते कन्यालाभस्तदा भवेत् ॥ 104 ॥

शुभयुक्तेऽक्षितेऽस्तांशे कन्या स्यात्पतिवल्लभा ।
श्रीमती सद्गुणैर्युक्ता भवति स्त्री न संशयः ॥ 105 ॥

---

चन्द्रमार्केति। अत्र चन्द्रमिति हि पदम्। चन्द्रशुक्रनिरीक्षिते लग्ने इति शेषः। द्विपात्स्थौ पुरुषराशिगौ।

---

1. $T_1$ लग्नमारूढ
2. $T_1$ लग्नारुढयोस्तं
3. T सर्पेन
4. M पाठः। T $T_1$ ततोदिताम्
5. M र्जननीसुखम्
6. M तथास्तभाम्
7. $T_1$ पाठः। T तथा M निरीक्षत
8. M पाठः। T तथा $T_1$ रविनीचारि
9. T रिगास्तदा
10. M विग्रहतस्त्वयम्
11. M अयं श्लोकः नास्ति
12. $T_1$ दृष्टे
13. M पाठः। T याश्चापिरोधतः

स्वर्क्षतुङ्गत्रिकोणेषु [A1]सत्पुत्रा दीर्घजीविनी ।
यदि [2]चन्द्रोदये शुक्रः स्वोच्चराशिस्थितोऽथवा ॥ 106 ॥

जीवोदये स्वतुङ्गस्थः सूर्यः स्यादथवोदयात् ।
आरूढाद्वास्तगो जीवो ज्ञो भृगुर्वा भवेत्तदा ॥ 107 ॥

विवाहप्रश्नसमये विवाहोऽस्तीति कथ्यताम् ।
दक्षिणबाहु[3]शिरोरःस्पर्शः शुभकृद्विवाहस्य ।
वामकरपृष्ठजानु[4]स्पर्शस्त्वशुभस्तथा तस्य ॥ 108 ॥

[5]प्रष्टुरारूढराशीशदिशिस्थां कन्यकां वदेत् ।
लग्नेशदिक्स्थितां [6]वापि बलादेवं विचिन्तयेत् ॥ 109 ॥

लग्नात्सप्तमभं स्वामी यदि पश्ये[7]त्तदा पुमान् ।
दैवज्ञनिकटस्थश्च गुरुदृष्टे विशेषतः ॥ 110 ॥

यादृग्वर्णाकृतियुजः कन्याया [8]दर्शनं तदा ।
कीर्तनं (वा) विवाहस्तु तादृश्या इति कथ्यताम् ॥ 111 ॥
[9]इति विवाहप्रश्नः । अथ विवाहमुहूर्तः ।

प्रश्नारूढेन्दुलग्नानां [10]व्यष्टमा(त्र्य)रिगाः शुभाः ।
त्रिषडायेषु [11]पापाश्च विवाहे शुभदायिनः ॥ 112 ॥

---

**स्वर्क्षतुङ्गे**ति । अस्तांशगतः शुभग्रहस्वर्क्षादिगतश्चेत् सत्पुत्रादियुता कन्या स्यात् । [12](प्रष्टुस्पृ)ष्टाङ्गवशात् फलमाह - **दक्षिणबाह्वि**ति । इति विवाहप्रश्नाः । अथ विवाहमुहूर्तमाह-**प्रश्नारूढे**ति । मुहूर्तकाले ग्रहाणां पूर्वं कालान्तरविदितेभ्यः प्रश्नारूढप्रश्नेन्दुप्रश्नलग्नेभ्योऽपि शुभस्थानगतत्वमपेक्षितमित्यर्थः । प्रश्नकालस्य जन्मकालवत् फलदत्वात् ।

---

1. M सुपुत्रा द्र.व्या.
2. $T_1$ चन्द्रोदयो
3. $T_1$ शिरोस्पशः
4. $T_1$ स्पशस्तशुभः
5. $T_1$ प्रष्ठु
6. $T_1$ वापीजबलादेवं
7. $T_1$ तथा
8. M दर्शनंस्तदा
9. $T_1$ "इति" इति ग्रन्थपातः
10. T व्यष्टमात्यारिगाः M ह्याष्टमात्यारिगाः
11. T इयं पङ्क्तिः नास्ति
12. T पृष्ठस्वष्टाङ्ग

A. अत्र M पाठोऽपि साधु एव ।

**स्त्रीजन्मलग्नतो जीवे धर्मधीस्वमदायगे ।**
**पापे त्र्यायारिगे [1]चोपयच्छेत् प्रागष्टमाब्दतः ।। 113 ।।**

**[2]सर्वत्रापि शुभं दद्यात् द्वादशाब्दात् परं गुरुः ।**
**सौरो वा सावनो वा स्यात् [3](का)लः संवत्सरादिकः ।। 114 ।।**

**विवाहोपनयनक्षौरसपिण्डीकरणादिषु ।**
**मातुलपातालातुलविमल[4]वराङ्गा(न्य)हः प्रमाणानि ।**
**सौरबृहस्पतिसावनशीतगुनाक्षत्रमानानि ।। 115 ।।**

**मीनापरार्धकोदण्ड[5]कर्किस्थोऽर्को धुतः सदा ।**
**कन्याकलशसंस्थस्तु गुर्वदृष्टो विनिन्दितः ।। 116 ।।**

**इषे तपस्ये [6]स(द्)दृष्टो नातीवानिष्टदो रविः ।**
**चैत्रादि[7]मासा मधुमाधवौ द्वौ**
**ततः परं शुक्र शुचिः क्रमेण ।**
**नभो [8]नभस्यौ कथिता [9]इषोर्जो**
**सहः सहस्थौ च [10]तपस्तपस्यौ ।। 117 ।।**

**क्रमोत्क्रमेण गणिते नक्षत्रे [11](द्वेऽ)नुदिक्स्थिते ।**
**[12]यदा ग्रहेन्दुभौ तुल्यौ विवाहे शुभदस्तथा ।। 118 ।।**

---

उपयच्छेत् विवाहं कुर्यादित्यर्थः । अष्टमाब्दात् प्राक् ग्रहाणां शुभस्थानगतत्वं विशेषादन्वेष्यम् । स्त्रियो द्वादशवर्षादूर्ध्वं स्वजन्मतः सर्वत्रापि शुभदो गुरुः । [13]अ(हः)प्रमाणानि तत्तत्संवत्सरस्याहः प्रमाणानि । वराङ्ग इत्यत्र मण्डलसमाप्तये तु त्रिचतुरा दिवसाः क्षेप्याः । कोदण्डो धनुः । [14]गुर्वदृष्टोऽर्कः । इषे इषाख्यमासे । तपस्ये तपस्याख्यमासे । चैत्रवैशाखादिमासा मधुमाधवादि संज्ञिताः स्युः । अनुदिक्स्थिते नक्षत्रगणे पूर्वपश्चिमयोः स्थिते याम्य[15]सौम्ययोः स्थिते च ।

---

1. M पापयच्छेत्
2. M इयं पङ्क्तिः नास्ति
3. T कलः
4. $T_1$ वराङ्गन्याह प्रमा
5. M पाठः ।T कर्किस्थेऽर्को
6. M तदृष्टो
7. $T_1$, M पाठः । T मासौ
8. $T_1$ नभेस्यो
9. $T_1$ विषोर्जो
10. $T_1$ तपस्तभस्तदा
11. T धेनुदि
12. $T_1$ "यदा" इत्याभ्य "शुभदस्तथा" पर्यन्तं ग्रन्थपातः ।
13. $T_1$ आह प्रमा
14. $T_1$ गर्वदृष्टेऽर्क
15. $T_1$ साम्यो

हरित्रयादि[1]तिद्व्यश्विरोगचित्रा न शोभनाः ।
मघा तुलाबुधक्षेत्र [2]चापो(ध्वार्ध)मृगा वराः ॥ 119 ॥

रिक्ता पर्वाष्टमीशूर्पपूर्वाहीन्द्रमघायमाः ।
कृत्तिकार्द्रे च रुक् षष्ठी द्वादशी सहितास्तु शुक् ॥ 120 ॥

पापवारोऽस्तगः शुक्रः [3]शुभाः षष्ठाष्टमान्त्यगाः ।
वित्रिषष्ठायगाः पापाः शुग्रुक्संज्ञा[4]द्वयान्विताः ॥ 121 ॥

क्रमात्कुजादिभिर्युक्ते चन्द्रे मृतिरपुत्रता ।
[5]दुर्भगात्वं च सापत्न्यं [6]प्रव्रज्यार्थक्षयो भवेत् ॥ 122 ॥

एकराशिगते चन्द्र उक्तदोषदलं मतम् ।
एकनक्षत्रगे तस्मिन् दोषपौष्कल्यमुन्नयेत् ॥ 123 ॥

द्वयोरूपचयर्क्षस्थो [7]जन्मगश्च शुभः शशी ।
पर्वाष्टमीचतुर्दश्यश्चतुर्थी च परैः स्मृताः ॥ 124 ॥

पर्वभूतेऽत्र शुक्लस्थे कृष्णपक्षगताष्टमी ।
पक्षद्वयगता विघ्न[8]कर्मवादी विवक्षिता ॥ 125 ॥

---

[9]रोगाख्यगणः । रोगसंज्ञितापि मघा [10]वरा । रिक्तापर्वाष्टमी[11]शूर्पादयो रुक्संज्ञिताः । [12](ते)षां शुक्संज्ञा च स्यात् । षष्ठी[13]द्वादशश्यो(श्च) [14]शु(क्)संज्ञा स्यात् । पापवारास्त[15](ग)शुक्रादिनामपि शुक्संज्ञा रुक्संज्ञा च स्यात् । वित्रिषष्ठायगाः त्रिषष्ठायरहिताः । अर्थक्षयोऽर्कयुक्ते । तथा च बृहस्पतिः "सार्के चन्द्रे दरिद्रः स्यात्सकुजो [16][मरण]प्रदः ।" इति । राशिभेदे न दोषः [A]स्यादेकतारा स्याद्विन्द्रसः ॥ इति च । परैः स्मृताः शुभा इति स्मृताः । तत्र विवरणं [17](पर्व)भूते इति । विघ्नकर्मवादी चतुर्थीमत्र चतुर्दशी च तुल्यौ सम्प्रदायविद्भिर्न गृह्यते ।

---

1. $T_1$ तिप्यश्वि
2. $T_1$ चापोर्ध्वोर्ध
   $T_1$ चापोर्ध्वोर्ध्व
3. $T_1$ शुभाः इति ग्रन्थपातः
4. $T_1$ द्वयान्वितः
5. $T_1$ दुर्भागत्वं
6. $T_1$ वज्यार्थ for प्रव्रज्यार्थ
7. M जन्मनश्च
8. M कर्मवाटी
9. $T_1$ रोशाख्यः
10. $T_1$ परा द्र.मू.
11. $T_1$ शूर्षादयो द्र.मू.
12. $T_1$ केषां
13. $T_1$ द्वादश्यो च
14. $T_1$ शुक्र
15. $T_1$ गा
16. T मानप्रदः for मरणप्रदः
17. T वर्षभूते द्र.मूलम्

---

A. अत्र "स्यादेकतारा वितिन्दिता" इति भवेद्वा ।

अन्यांशको नरर्क्षेषु नरांशोऽन्येषु च स्तुतौ ।
मृत्युदो लग्नगश्चन्द्रो मध्यमो धीनवाम्बु[गः] ॥ 126 ॥

[1]मृत्यु(दौ) मन्दतिग्मांशू शस्तावन्ये ग्रहा धुताः ।
धीनवाम्बुगतश्चन्द्रः कन्याभूयस्त्वदायकः ॥ 127 ॥

मृतेरसृक् [A]स्तुतेर्वापि मृतिस्थौ राहु भूमिजौ ।
महूर्तलग्नाद्रन्ध्रे चेन्नीचारिस्थो [2]दिनो धुतः ॥ 128 ॥

पुंराशिगा ग्रहाः सर्वे पुंसः शस्ता स्त्रियोऽन्यथा ।
दम्पत्योर्जन्मतोऽर्काच्छौ षट्सप्तर्क्षांशगौ [3]हतौ ॥ 129 ॥

[4]स्वाम्यदृ(ष्टौ) मदाङ्गाशौ स्त्रीपुंसोः पूर्वमृत्युदौ ।
[5]मदराशेर्मदांशस्य स्वाम्य[6]दृ(ष्ट्या) वधूमृतिः ॥ 130 ॥

लग्नराशेस्तदंशस्य स्वाम्य[7]दृ(ष्ट्या) [8]वरस्य तु ।
तत्तद्वर्णाः स्त्रियो जारास्तत्केन्द्रस्थैस्त्रिपूर्वकाः ॥ 131 ॥

---

[9]अ(न्यां)शको स्त्रीसंज्ञितांशकः । अन्येषु स्त्रीसंज्ञितर्क्षेषु । मृतेरसृक् स्रुतेर्वापीति । दायकाविति शेषः । दिनः सूर्यः । पुंराशिगा इति । पुरुषराशिगाः सर्वे ग्रहाः पुंसा शस्ताः स्युः । पुरुषः [10]स्त्रीवल्ल(भः) स्यादित्यर्थः । [11]स्त्रीराशि(गाः) स्त्रियः शस्ताः । स्त्रीपुरुषवल्लभा इत्यर्थः । अथ पुरुषग्रहाश्च स्त्रीग्रहाश्च क्रमाद्विवक्षिता वा । तथा च बृहस्पतिः "विवाहे पुंग्रहाः सर्वे बलिन पुंगृहाश्रिताः । वल्लभः स्या[12]त्पुमांस्त्रीणां विपरीतेऽन्यथा भवेत्" ॥ इति । नारदश्च - "पुंस्त्रीग्रहबले काले क्रमात्पुंस्त्रीबलं भवेत्" इति । हतौ कष्टौ । स्वाम्यदृष्टावित्यस्य विवरणं-मदराशेरिति । मदराशेर्मदराश्युदितांशकस्य च स्वाम्यदृष्ट्या प्रथमं [13]वधूमृतिः स्यात् । लग्नराशोर्लग्नराश्युदितांशकस्य च स्वाम्यदृष्ट्या [14][वरस्य] प्रथमं मृतिः स्यात् । तथा च बृहस्पतिः "विवाहोदयलग्नांशौ यदि स्वाम्यनिरीक्षितौ । पुरः पुमान् ममारात्र तथास्तर्क्षेऽङ्गनामृतिः" ॥ इति । ममारेत्यार्षत्वात् ।

---

1. M मृत्युगौ
2. M पाठः । T दिने धुतः
3. $T_1$ हितौ द्र.व्या.
4. T स्वाम्यदृष्टो
5. $T_1$ मन्दाराशेर्मन्दाशस्य
6. T दृष्टा द्र.व्या.
7. T दृष्टा
8. M पाठः । T षरे मृतिः
9. T अग्न्यांशको द्र.मू.
10. T स्त्रीवल्लभा
11. T स्त्रीराशि शास्त्रीय शस्ताः
12. $T_1$ पुंस्त्रीणां
13. $T_1$ वधून् मृतिः
14. T चरेस्य

---

A. मूले "स्तुतेर्वापि" इति व्याख्याने तु "स्रुतेर्वापि" इति च दृश्यते । अत्र पाठनिर्णये क्लेशः ।

एको द्वौ बहवो वापि केन्द्रे लग्ने विशेषतः ।
[1]अमूढा बलिनः सौम्या विवाहेऽतिशुभप्रदाः ॥ 132 ॥

विवाहे सति लग्नास्ते पश्येयुरशुभाः ग्रहाः ।
सूर्यभूमिजमन्दानां दिवसादेस्तु सम्भवे ॥ 133 ॥

यदि पाणिग्रहं कुर्याद्विधवां तां विनिर्दिशेत् ।
सूर्य[2]वर्गेषु दुःखार्ता विधवा भौमवर्गके ॥ 134 ॥

शनि[3](व)र्गे क्षीणकुला भार्गवस्य मतं ह्यदः ।
[4]पतिनाशस्तु जन्मर्क्षे विपद्भे बन्धुनाशनम् ॥ 135 ॥

प्रत्यरे प्रीति[5]नाशः स्यात् वधर्क्षे सर्व[6]नाशकृत् ।
वैनाशे दम्पती[7]नाशो [8]रन्ध्रेन्दौ [9]दु(र्मृ)तिर्भवेत् ॥ 136 ॥

लग्नाष्टमे भे मरणं मृत्युः स्या[10A]द्दान(पां)शके ।
मेषलग्ने [11]जारसक्ता वृषे दुश्चारिणी वधूः ॥ 137 ॥

कुलटा वा पतिघ्नी वा कुलीरे पाप[12]संयुते ।
सिंहे सकृत्प्रजा [13](कौ)र्प्यां वन्ध्या [14]चापदलेऽग्रिमे ॥ 138 ॥

---

दिवसादेरिति - आदिशब्देन तद्वर्ग [15]उक्तः । पतिनाशस्तु जन्मर्क्षे इत्यत्र [16]जन्म(र्क्षं) पुरुषजन्मर्क्षं, स्त्रीजन्मर्क्षं तु शुभदम् । यथोक्तं स्त्रीजन्मत्रयमाहुरत्र शुभदमिति । रन्ध्रेन्दौ जन्माष्ट[17]मर्क्षगे चन्द्रे [18]दुर्मृतिः । सर्पादिभिर्मृतिः । [19]दान(पां)-शोऽष्टोत्तरशतांशः । मेषलग्नेत्यादिना राशिदोषः प्रदर्श्यते ।

---

1. $T_1$ अनूढा
2. M पाठः T वर्गे त्वदुःखा
3. T वर्गे
4. M पाठः । T दम्पति for पति
5. $T_1$ नाशं
6. M नाशनम्
7. $T_1$ पाठः । T नाशं
8. $T_1$ रन्ध्रन्दौ
9. T दुर्मति द्र.व्या
10. $T_1$ द्दानवांशके $T_1$ द्रानवांशके
11. M पाठः । T रजसक्ता
12. M पाठः । T संयुते
13. T कोर्प्यां
14. M पापदले
15. $T_1$ शुक्लः for उक्तः
16. T जन्मक्ष
17. $T_1$ मर्क्षशे
18. $T_1$ दुर्मतिः
19. T दानपांशो

---

A. अत्र दानवपदस्य अष्टोत्तरशतमिति स्वीकृतम् । किन्तु वर्णसंख्यानियमानुसारेण दानव 804 = 408 भवति । अतः अष्टोत्तरसंख्यालाभार्थं मया वकारस्थाने पकारः स्वीकृतः ।

चञ्चला पश्चिमार्धे तु [1]सुभगा मकरस्य तु ।
आद्ये दले धनवती निन्दिता पश्चिमे दले ॥ 139 ॥

कुम्भे वेश्यासमाचारा विधवा [2]मीनभे भवेत् ।
शुबे[3]क्षायां युतौ वापि [4]विवाहस्त्वेषु च स्मृतः ॥ 140 ॥

[5]मेषालिकलशर्क्षेषु तदंशेषु च [6]वर्जितः ।
विवाहः कोटिजीवानामुदयेष्वपि सूरिभिः ॥ 141 ॥

मेषवृश्चिकसिंहेषु शुभयुक्तेषु [7]वै नृपाः ।
कुर्वन्ति कन्योद्वहनं [8]केवले तु न कुर्वते ॥ 142 ॥

गोकुम्भयोर्बुधे युक्ते विशां [9]वैवाहमिष्यते ।
कन्यामिथुनजूकेषु सजीवे कर्कटेऽपि च ॥ 143 ॥

[10]चापपूर्वे मृगे कुम्भे सिंहे वै शुभसंयुते ।
ब्राह्मणानांतु वैवाह्यं प्रशस्तं वै स्वयं भुवा ॥ 144 ॥

मेषे जीवादियुक्तेऽपि न विवाहो द्विजन्मनः ।
ग्रहणे मरणं विद्यात् वृद्धशुक्रे पतिक्षयम् ॥ 145 ॥

स्त्रीमृतिं बालशुक्रे तु ग्रहयुद्धे तु वैरकृत् ।
वक्रे धनक्षयं विद्यान्मूढे मूढसुतप्रसूः ॥ 146 ॥

चन्द्रे विनष्टेऽप्युभयोर्विनाशः
[11]स्त्रिया विनाशो भृगुजेऽस्तयाते ।
जीवे विनष्टे पुरुषस्य नाशो
भौमेऽष्ट[म]स्थानगते च तद्वत् ॥ 147 ॥

---

कोटिजीवानामित्युक्तिर्दोषाधिक्यप्रदशना[12](र्थां) । [13]व(क्रे) वक्रारम्भदिने ।

1. M शुभगा $T_1$ शुभदा
2. $T_1$ मीनजे
3. M शुभेक्षा वायुभिर्वापि
4. M पाठः । T विवाहस्तेषु
5. $T_1$ मेषादिकलषं
6. M पाठः । T वर्जिताः
7. $T_1$ चै
8. M केवलेषु न
9. $T_1$ वैवाध्यमिष्यते
10. $T_1$ तथा M पापपूवै
11. M पाठः । T स्त्रियो
12. T त्य‍ा for र्या
13. T वक्त्रे द्र.मू.

एको द्वौ बहवो वापि केन्द्रे लग्ने विशेषतः ।
[1]अमूढा बलिनः सौम्या विवाहेऽतिशुभप्रदाः ॥ 132 ॥

विवाहे सति लग्नास्ते पश्येयुरशुभाः ग्रहाः ।
सूर्यभूमिजमन्दानां दिवसादेस्तु सम्भवे ॥ 133 ॥

यदि पाणिग्रहं कुर्याद्विधवां तां विनिर्दिशेत् ।
सूर्य[2]वर्गेषु दुःखार्ता विधवा भौमवर्गके ॥ 134 ॥

शनि[3](व)र्गे क्षीणकुला भार्गवस्य मतं ह्यदः ।
[4]पतिनाशस्तु जन्मर्क्षे विपद्धे बन्धुनाशनम् ॥ 135 ॥

प्रत्यरे प्रीति[5]नाशः स्यात् वधर्क्षे सर्व[6]नाशकृत् ।
वैनाशे दम्पती[7]नाशो [8]रन्ध्रेन्दौ [9]दु(र्मृ)तिर्भवेत् ॥ 136 ॥

लग्नाष्टमे भे मरणं मृत्युः स्या[10A]द्दान(पां)शके ।
मेषलग्ने [11]जारसक्ता वृषे दुश्चारिणी वधूः ॥ 137 ॥

कुलटा वा पतिघ्नी वा कुलीरे पाप[12]संयुते ।
सिंहे सकृत्प्रजा [13](कौ)र्प्यां वन्ध्या [14]चापदलेऽग्रिमे ॥ 138 ॥

---

दिवसादेरिति - आदिशब्देन तद्वर्ग [15]उक्तः । पतिनाशस्तु जन्मर्क्षे इत्यत्र [16]जन्म(र्क्षं) पुरुषजन्मर्क्षं, स्त्रीजन्मर्क्षं तु शुभदम् । यथोक्तं स्त्रीजन्मत्रयमाहुरत्र शुभदमिति । रन्ध्रेन्दौ जन्माष्ट[17]मर्क्षगे चन्द्रे [18]दुर्मृतिः । सर्पादिभिर्मृतिः । [19]दान(पां)-शोऽष्टोत्तरशतांशः । मेषलग्नेत्यादिना राशिदोषः प्रदर्श्यते ।

---

1. $T_1$ अनूढा
2. M पाठः T वर्गे त्वदुःखा
3. T वर्गे
4. M पाठः । T दम्पति for पति
5. $T_1$ नाशं
6. M नाशनम्
7. $T_1$ पाठः । T नाशं
8. $T_1$ रन्ध्रन्दौ
9. T दुर्मति द्र.व्या
10. $T_1$ द्दानवांशके $T_1$ द्दानवांशके
11. M पाठः । T रजसक्ता
12. M पाठः । T संयुते
13. T कोर्प्यां
14. M पापदले
15. $T_1$ शुक्लः for उक्तः
16. T जन्मक्ष
17. $T_1$ मर्क्षशे
18. $T_1$ दुर्मतिः
19. T दानपांशो

---

A. अत्र दानवपदस्य अष्टोत्तरशतमिति स्वीकृतम् । किन्तु वर्णसंख्यानियमानुसारेण दानव 804 = 408 भवति । अतः अष्टोत्तरसंख्यालाभार्थं मया वकारस्थाने पकारः स्वीकृतः ।

चञ्चला पश्चिमार्धे तु [1]सुभगा मकरस्य तु।
आद्ये दले धनवती निन्दिता पश्चिमे दले ॥ 139 ॥

कुम्भे वेश्यासमाचारा विधवा [2]मीनभे भवेत्।
शुबे[3]क्षायां युतौ वापि [4]विवाहस्त्वेषु च स्मृतः ॥ 140 ॥

[5]मेषालिकलशर्क्षेषु तदंशेषु च [6]वर्जितः।
विवाहः कोटिजीवानामुदयेष्वपि सूरिभिः ॥ 141 ॥

मेषवृश्चिकसिंहेषु शुभयुक्तेषु [7]वै नृपाः।
कुर्वन्ति कन्योद्वहनं [8]केवले तु न कुर्वते ॥ 142 ॥

गोकुम्भयोर्बुधे युक्ते विशां [9]वैवाहमिष्यते।
कन्यामिथुनजूकेषु सजीवे कर्कटेऽपि च ॥ 143 ॥

[10]चापपूर्वे मृगे कुम्भे सिंहे वै शुभसंयुते।
ब्राह्मणानांतु वैवाह्यं प्रशस्तं वै स्वयं भुवा ॥ 144 ॥

मेषे जीवादियुक्तेऽपि न विवाहो द्विजन्मनः।
ग्रहणे मरणं विद्यात् वृद्धशुक्रे पतिक्षयम् ॥ 145 ॥

स्त्रीमृतिं बालशुक्रे तु ग्रहयुद्धे तु वैरकृत्।
वक्रे धनक्षयं विद्यान्मूढे मूढसुतप्रसूः ॥ 146 ॥

चन्द्रे विनष्टेऽप्युभयोर्विनाशः
[11]स्त्रिया विनाशो भृगुजेऽस्तयाते।
जीवे विनष्टे पुरुषस्य नाशो
भौमेऽष्ट[म]स्थानगते च तद्वत् ॥ 147 ॥

---

कोटिजीवानामित्युक्तिर्दोषाधिक्यप्रदशना[12](र्था)। [13]व(क्रे) वक्रारम्भदिने।

---

1. M शुभगा $T_1$ शुभदा
2. $T_1$ मीनजे
3. M शुभेक्षा वायुभिर्वापि
4. M पाठः। T विवाहस्तेषु
5. $T_1$ मेषादिकलषं
6. M पाठः। T वर्जिताः
7. $T_1$ चै
8. M केवलेषु न
9. $T_1$ वैवाध्यमिष्यते
10. $T_1$ तथा M पापपूवै
11. M पाठः। T स्त्रियो
12. T र्त्या for र्या
13. T वक्त्रे द्र.मू.

[1]पित्र्यस्याद्यचतुर्भागे मूलस्याद्ये तथैव च।
[2]रेव(त्य)न्तिमपादे च विवाहः प्राणनाशनः ॥ 148 ॥

[3]दम्पत्योरुभयोर्नाशो मूढे चन्द्रे स्फुटं भवेत्।
नरर्क्षे लग्नगे सौम्यदृष्टे चन्द्रे च सत्क्रिये ॥ 149 ॥

रवे शुक्रेनेक्षितः पापैः शशाङ्को परिवेषगः।
जीवोदयेऽष्टमे शुक्रे बलिन्यरिगते रवौ ॥ 150 ॥

ज्ञाच्छौ लग्ने गुरुः पुत्रे कुजार्कौ [4]दशमायगौ।
लाभधर्माङ्गकर्मस्था [5]जीवार्कजसितेन्दवः ॥ 151 ॥

त्रिधर्मायगताभौमजीवम[6](न्दा)स्तनौ [7]शुभः।
अर्कारौ ज्ञसितौ [8]पुत्रे पापाः षष्ठत्रिलाभगाः ॥ 152 ॥

चन्द्रार्क्यर्कास्त्रिषट्खेषु क्रमाल्लग्ने च मीनगे।
[9]पा(पे)ऽरौ केन्द्रगे [10]जीवे ज्ञसितौ धीसुखाङ्गगौ ॥ 153 ॥

लग्नत्रिषड्वधूरन्ध्रेष्वार्यारार्किज्ञभानवः।
सौम्याः केन्द्रत्रिकोणेऽतिबलिनो विबलाः परे।
द्वादशैते शुभा योगा विवाहे सौख्यदायिनः ॥ 154 ॥

[11]वनितानां गले सूत्रे मङ्गले शिथिले पुनः।
कृत्वा पुरावत्सद्यो(गे) धारयेत्प्रथमोपमम् ॥ 155 ॥

---

नरर्क्षे इत्यादिभिः श्लोकार्धैर्विवाह[12]योगाः [13]प्रदर्शिताः । लग्नारिमृतिकर्मस्था जीवार्कजसितेन्दवः इति पाठः अर्कादतिदूरस्थे बुधयोगप्रदर्शनात्। कालान्तरे तथापि सम्भवति इति कल्प्यते। सद्योगे [14]विवाहो(क्त)योगे। अथवा सामान्यविहिते शुभयोगे।

---

1. $T_1$ वित्राद्यचतु
2. T रेवत्यान्तिम $T_1$ रेवत्यातिम
3. M इयं हड्क्तिः T तथा $T_1$ मातृकयोर्नास्ति
4. $T_1$ दशभायगो
5. M जीवाक्रिज
6. T मन्द्रस्तनौ M मन्द्रास्तनौ
7. M शुभाः
8. $T_1$ पुत्रौ पापः षष्ठ
9. T पापोरौ
10. $T_1$ जीवो
11. M "वनितानां गलेसूत्रे प्रथमोपमम् ॥" अयं श्लोकः मातृकायां नास्ति।
12. $T_1$ योगः
13. $T_1$ प्रदशिताः
14. T विवाहो केतयोगे

करग्रहः श्राद्ध[1]गतिर्द्रुमार्पणं
प्रियानु[2]दृष्टिः प्रथमा [3]वधूगतिः ।
गृहक्रिया कर्षणकूपनौ[4]गतिः
क्षुरञ्च विद्यादशुभानि मेषात् ॥ 156 ॥

श्राद्धं निधिस्त्रीगतिशालि[5]लावौ
सेतुर्विवाहोऽम्बर धान्यलाभौ ।
ज्ञानं क्षुरं वेश्म तथोपनीतिः
शुभानि मेषादिषु कीर्तितानि ॥ 157 ॥

## ॥ [6]इति विवाहविधिः ॥ अथोपसंवेशनविधिः ॥

चतुर्थ्यां संविशेद्रात्रौ न चेत् [7]सहरिवारुणे ।
विवाहोक्ते तथा काले [8]निषेकविहितेऽथवा ॥ 158 ॥

---

मेषादिषु राशिषु [9]विशेषतोऽ[10]नि(ष्टा)नि कर्माण्याह - **करग्रहेति** । प्रियानुदृष्टिर्बन्धुदर्शनम् । [11](नौ)गतिर्नावादिना जले गमनम् । मेषादिषु विशेषतः शस्तानि कर्माणयाह-**श्राद्धमिति** । निधिर्निधिस्थापनम् । अम्बरधान्यलाभौ वस्त्रधारणं धान्यादीनां च । विवाहविधिः । **चतुर्थ्यामिति**-[12]उपसंवेशनविधिः । चतुर्थ्यां संविशेदित्यनेन चतुर्थरात्रौ ?कं ----- कालो विहितस्तस्मिन् वा कुर्यात् । [13]तत्पक्षे अश्विनीपुनर्वसुपुष्यचित्राश्रविष्ठाश्रवणवारुणा विवाहोदित[14]ता(रा)श्च शस्ता भवन्ति ।

---

1. M पाठः । T गतिद्रुमार्पणं
2. M दृष्टिं
3. T वधूगमः । M पाठः
4. $T_1$ गतिं
5. M लापौ
6. $T_1$ इयं पङ्क्तिर्नास्ति
7. $T_1$ सररिवारुणे
8. $T_1$ निषेकनिहिते
9. $T_1$ विशेतो for विशेषतो
10. T अनिष्ठानि
11. T नागति
12. $T_1$ उपसंवेगेन विधिः
13. $T_1$ तल्पक्षे
14. T ताश्च

चन्द्रो लग्नगतोऽ[1]त्रेष्टो विवाहे मृत्युदोऽपि सन् ।
।। इति उपसंवेशनविधिः ।।
रजोनिर्गमनात् [2]स्त्रीणामृतुः षोडषरात्रयः ।
सैकादशीत्रयोदश्यश्चतस्रः प्रथमा धुताः ।। 159 ।।

[3]पुत्रोऽल्पायुर्दारिका वंशकर्ता
वन्ध्या पुत्रः सुन्द[4]रीशो विरुपा ।
श्रीमान् पापा धर्मशीलस्तथाश्रीः ।
सर्वज्ञः स्यात्तुर्यरात्रेः क्रमेण ।। 160 ।।

[5]रोगहीनो निषेकः स्यादाद्यस्तूत्सित[6]कन्यकः ।
ओजयुग्मनिशा ज्ञेयाः क्रमात्स्त्रीनरगर्भदाः ।। 161 ।।

[A]संवेशनं तुर्यदिने चतुर्दशी
पर्वाष्टमीसङ्क्रमजन्मवर्जिते ।
कन्यां विनैव तदसम्भवे तु
उद्वाहकालाद्धरिवारुणेऽपि ।। 162 ।।

[7]रात्रौ निषेककर्म स्यादन्यत्सर्वं शुभं दिवा ।
विवाहभुक्त्यलङ्कारा रात्रावपि [8]परैः स्मृताः ।। 163 ।।

सङ्क्रान्त्यादौ दिने पुण्ये श्राद्धे सूतक[9]शावयोः ।
पञ्चम्युत्तरफल्गुन्योर्वर्जयेत् स्त्रीनिषेवणम् ।। 164 ।।

---

नित्यनिषेकविधिमाह रजोनिर्गमनादिति । सैकादशीत्रयोदश्य रजोनिर्गमनादारभ्य एकादशदिनगता रात्रिः [10]त्रयोदशदिनगता रात्रिश्च नेष्टेत्यर्थः । तुर्यरात्रेश्चतुर्थ[11]दिनादारभ्य फलमुक्तम् । रोगहीन रोगाख्यनक्षत्रादिरहिते निषेककर्म कर्तव्यमित्यर्थः । सङ्क्रान्त्यादौ दिने पुण्ये इत्यत्र पुण्यशब्देन पर्वादितिथिर्हरिदिनं द्वयोर्जन्मत्रितयञ्च विवक्षितम् ।

---

1. $T_1$ अत्रोऽष्टो
2. M पाठः । T स्त्रीणां मृत्युः
3. $T_1$ पुत्रोत्वायु
4. $T_1$ रीशोऽपिरुपाः
5. M रोगहीने
6. $T_1$ कन्यकाः
7. $T_1$ रत्रौ
8. M परे स्मृताः
9. $T_1$ श्रावयोः
10. $T_1$ सूर्योदयदिन for त्रयोदशदिन
11. $T_1$ दिनदारभ्य

---

A. श्लोकेऽस्मिन् छन्दोभङ्गः दृश्यते ।

पर्वाष्टमीशशक्रार्कषष्ठीवह्नितिथिर्हरेः ।
[1]दिनञ्च जन्मत्रितयं द्वयोः पुण्यगिरोदितम् ॥ **165** ॥

केन्द्रे [2]चन्द्र(स्त्रि)कोणेऽच्छजीवौ स्त्रीधर्मगो बुधः ।
त्रिषडायेषु पापाश्च योगोऽसौ पुत्रजन्मदः ॥ **166** ॥

स्त्रीधर्मगे ज्ञजीवाच्छा ज्ञार्यचन्द्राः स्वधीशुभे ।
[A3]धीकर्माङ्गे सितेन्द्वार्या योगाः पुंगर्भदास्त्रयः ॥ **167** ॥

अर्केन्दु[4]शुक्रभूपुत्राः स्वांशे वोपचये स्थिताः ।
कुर्वन्ति निश्चयात्पुत्रं वाक्पतिश्चेत्त्रिकोणगः ॥ **168** ॥

स्वांशकस्थौ सितार्कौ तु पुंसामुपचयर्क्षगौ ।
[B5]चन्द्रार्कौ च तथा स्त्रीणां लग्नस्थो वा यदा गुरुः ॥ **169** ॥

शुक्रो वा गर्भदस्तद्वद्धर्मगस्सुतगस्तथा ।
जीवदृष्टियुते काले कैश्चिदाधानमिष्यते ॥ **170** ॥

[6]इन्दावस्ते गुरौ पुत्रे शुक्रे षष्ठे सपापके ।
आयुष्मद्योगमिच्छन्ति मुनयः पूर्ववत्सराः ॥ **171** ॥

इन्दुः पूर्णबलोपेतः शुभग्रहनिरीक्षितः ।
गतायुरपि पूर्णायु[7]स्त्वश्रीकश्चापि वित्तवान् ॥ **172** ॥

---

वह्नितिथिः प्रतिपत् । सा प्रतिपत् कार्यकर्मणः प्राग्विवर्ज्यते । एकादशी चोपवासदिने वर्ज्यते । हरेर्दिनं=श्रवणाद्युपवासदिनम् । यतः शास्त्रान्तरेषु प्रतिपदेकादशीश्रवणादयो निषेके [8]विहितास्ततस्तेषां कर्तव्यानुष्ठानवशान्निषिद्धता स्यादिति कल्प्यते । अत्र च पुण्यशब्देन हि उदिताः । षष्ठीद्वादश्यौ तु सामान्यतः कर्मसु [9]निषिद्धे स्तः । निषेकयोगानाह । **केन्द्रे** चन्द्र इत्यादिभिः । गतायुरपि पूर्णायुस्त्वश्रीकश्चापि वित्तवान्-निमित्तान्तरेण गतायुष्ये प्राप्तेऽपि पूर्णायुः भवति । तथा श्रीरहितत्वे प्राप्तेऽपि वित्तवान् भवति ।

---

1. $T_1$ दिनज्ज
2. T चन्द्रत्रिकोण
3. $T_1$ धीधर्माङ्गे
4. $T_1$ शुभपुत्रास्वांशवोपचये
5. M चन्द्ररौ
6. M पाठः । T इन्द्रवस्ते
7. M रश्रीकश्चापि for स्त्वश्रीकश्चापि
8. $T_1$ विहाता
9. $T_1$ निषिद्धस्तः

---

A. अत्र पाठनिर्णयः सन्दिग्धः ।

B. अत्र चन्द्रारौ इति पाठोऽपि युक्तो वा ।

ओजांशर्क्षगतौ लग्नात्पुत्रदौ गुरुभास्करौ ।
युग्मांशर्क्ष[1]ग(ता)श्चन्द्रशुक्रारा: स्त्रीप्रदायिनः ।। 173 ।।

पुत्रस्थौ [A][2]कर्मलग्नस्थौ लग्नस्त्रीगौ मदाम्बुगौ ।
स्त्रीगर्भदौ शशिसितौ बुधाचार्यौ [3]व्ययायगौ ।। 174 ।।

मज्जाधिपे स्मरे रन्ध्रे सिरानाथे विधौ तथा ।
विहीनाख्यं तथा प्रोक्तमायुश्री[4]प्रीतिनाशनम् ।
पितुः श्वासेऽधिके मध्ये क्षीणे चायुः सुतस्य तु ।। 175 ।।

दीर्घायुर्मध्यमायुश्च क्षीणायुरिति निश्चयः ।
[5]उभये क्लीबमित्युक्तं वामे स्त्री दक्षिणे पुमान् ।। 176 ।।

पित्रोर्मनसि यद्दुःखं सुखं वा यदि जायते ।
दुःखं सुखं तथैवोक्तं पुत्राणामिति निश्चयम् ।। 177 ।।

स्त्रीणां पीडर्क्षगश्चन्द्रः कुजदृष्टोऽथवा युतः ।
यदा तदा क्षमं गर्भ[6]ग्रहणायार्तवं मतम् ।। 178 ।।

[7]पुमानुपचयर्क्षस्थश्चन्द्रो गुरुयुतेक्षितः ।
यदि पुत्रक्षमः सेक ऋतुकाले न संशयः ।। 179 ।।

---

मज्जाधिपः कुजः । सिरानाथो मन्दः । उभये क्लीबम् । नासिकापुटद्वयगतेऽपि [8]तु श्वासे क्लीबम् । वामपुटगते स्त्री, दक्षिणपुटगते पुमान् । पीडर्क्षमुपचया[9]द(न्य)स्थानम् । [10]क्ष(मं) = शक्तम् ।

---

1. T गतश्चन्द्र
2. M धर्मलग्न
3. $T_1$ व्ययागमौ
4. $T_1$ प्रीत
5. $T_1$ उदये
6. $T_1$ ग्रहणायातवं
7. $T_1$ पुमामुपचय
8. $T_1$ तुग्वासे
9. T दन्या
10. T क्षमा द्र.मू.

---

A. अत्र पाठनिर्णयः सन्दिग्धः ।

अच्छजीवौ न सहितौ त्रिकोणे किन्तु केवलौ।
एवं शुक्रस्येति पुनरन्यशास्त्रेषु कीर्तनात् ॥ 180 ॥

स्त्री[1]धर्मगो बुधः क्वापि क्वचित् स्त्रीसुतगो बुधः।
द्वौ च पाठौ समीचीनौ [2]जायायां तपसीति च ॥ 181 ॥
सप्तपञ्चमयो[3]श्चान्द्रिरिति चान्य[त्र] दर्शनात्।

॥ [इति] निषेकविधिः ॥ अथ पुंसवनविधिः ॥

पुंसवो ज्ञातमात्रे स्यादर्काद्योऽन्यस्त्रिषडष्टमे। ?
मासे पुष्ये हरौ वापि [4]शस्तोऽत्र व्ययगो गुरुः ॥ 182 ॥

[5]मित्रा(र्या)दिति[6]बुध्न्यर्काः कुजार्कगुरुवारगाः।
साभिजित्का परे प्रोक्ता मूलेन्दू चापरौ मतौ ॥ 183 ॥

---

केन्द्रचन्द्रत्रि[7]को(णे)ऽच्छजीवौ, स्त्रीधर्मगो बुधः इत्यस्य विवरणंमच्छजीवाविति। शुक्रजीवयोरेक[स्तयोरे]व त्रिकोणस्थित्या योगो भवतीत्यर्थः। तत्र गमकमाह- **एवमिति**। शास्त्रान्तरेषु जीवस्य त्रिकोणस्थित्या योगमुक्त्वा पुनरेवं शुक्रस्य त्रिकोणस्थित्या चेत्युक्तत्वादित्यर्थः। तथा स्त्रीधर्मगो बुधः इति क्वचित्पाठः। क्वचित् [8]स्त्रीसुतगो इति। तौ द्वौ च पाठौ समीचीनौ सुपाठौ स्तः। तत्र गमकमाह-[9]**जाया-या[मिति]**। निषेकः। पुंसवनविधिमाह - **पुंसवो** ज्ञातेति।आद्यः प्रथमगर्भे कर्तव्यः [10]पुंसवः। स तु ज्ञानमात्रे कार्यः। [11]सम्यक् () एव कार्यम्। ततः प्रागिति। एतदुक्तं भवतिअदृष्टगर्भलक्षणत्वात् कस्याश्चित् योषितः प्रथमगर्भे तृतीये मासे गर्भविज्ञा सा न भवेत्। ततस्तस्याः ज्ञानं न भवेत्। ततस्तस्याश्चतुर्थे मासि पुंसवः कर्तव्य इति। पुष्येहरौ इति सामान्यविधिः। तत्र पुष्यभं सर्वेषां शस्तम्। कौषीतकानां तु पूर्वपक्षगते श्रवणे वा कार्यः। मित्रार्यादिषु सम्प्रदायविद्भिर्न क्रियते।

---

1. $T_1$ धर्मगे
2. $T_1$ जायया, तथा M
3. $T_1$ श्याग्नि for श्चान्द्रि
4. $T_1$ शस्त्रोत्र
5. T मित्रार्यदिति $T_1$ मित्राशविदिति
6. $T_1$ बूदून्याताः
7. T कोणोच्छ
8. $T_1$ स्त्रीषुतगो
9. T जायायामाह
10. $T_1$ 'पुंसवः' । इत्यारभ्य तश्चतुर्थपङ्क्तिगात "सा न भवेत्" पर्यन्तं ग्रन्थपातः।
11. T सम्यक् इति विलिख्य () एवं अक्षरद्वयलेखनस्थानं परित्यक्तम्।

नेष्टा रुक् दुर्निमित्तं च क्षेत्रं च बुधचन्द्रयोः ।
वारदृष्ट्युदयाश्चन्द्रशुक्रयोर्निन्दिताः परैः ॥ 184 ॥

चतुर्थे वा तृतीये वा मासाद्यः पुंसवो मतः ।
पञ्चमे मासि नैवेष्टः आद्योऽनाद्योपि पुंसवः ॥ 185 ॥

मासस्तु [1]सावनोऽत्रेष्टो नाक्षत्रो न [2]बहूदितः ।
यदोजभांशगौ चन्द्रशुक्रौ पुंग्रहवीक्षितौ ॥ 186 ॥

तदा तद्वारलग्ने च कैश्चि[3]दि(ष्टं) तथेक्षणम् ।
पुत्रादिभावसिध्यर्थाः क्रियाः पुंसवनादयः ॥ 187 ॥

सिध्यन्ति भावनाथस्य [4]वारक्षेत्रोदये कृताः ।
[5]पुंसवो [6]गुरुवारे स्याद्द्वादशीपुष्यसंयुते ॥ 188 ॥

बुधारवारगे तिष्ये सविश्वेषु द्व्यंगेठ[?] तथा ।
तिष्यश्रववणयोर्मध्ये शुक्लपक्षगतं तु यत् ॥ 189 ॥

---

चतुर्थे वेत्यादि प्रोक्तविवरणं नाक्षत्रो न [7]बहूदित इति - नाक्षत्रो बहुभिराचार्यैर्नैदितः । अनङ्गीकृतः । नाक्षत्रं गर्भिण्या इत्येतत् सामान्यवचनम् । नाक्षत्रव्यवहारो गर्भस्य धारणकाले, न तु पुंसवे इत्यर्थः । पुत्रादिभावाः [8]पुत्रा(रि)भार्यायुरादयः । भावना[9]थास्तद्विधास्तत्तद्भावराश्यधिपाः । तत्तद्भावसाधारणगृहाश्चेति । पुत्रार्था हि पुंसवनक्रिया । तत्रासाधारणग्रहो गुरुः । यथोक्तं "गुरुणा देहपुष्टिः [10]स्या(द्वृ)द्धिः पुत्रार्थसम्पदः ।" इति । पुंसवो गु[11](रावि)त्येको योगः । बुधारेत्यन्यो योगः । [12]इति पुंसवनविधिः ।

---

1. M सावने
2. $T_1$ तथा M बहूदितम्
3. T दिष्टे
4. M वारर्क्षेत्रोदये
5. $T_1$ पुंसयो
6. M गुरुवारः
7. $T_1$ बहूदिति
8. T पुत्रादिभार्या
9. $T_1$ भावनाशा
10. T स्याद्बुद्धिः
11. T गुरुवित्येको
12. $T_1$ "इति पुंसवनविधिः" इत नास्ति

[1]कौषीतकमतज्ञैस्तु [2]तत्रेष्टः पुंसवो बुधैः ।
[इति] [3]पुंसवनविधिः ॥ अथ सीमन्तविधिः ॥
चतुर्थे मासि सीमन्तं कुर्यात् [4]षष्ठेऽष्टमेऽपि वा ।
वसुद्विमित्रचित्राद्विमूलशोका(श्वि)नो धुताः ॥ 190 ॥

[5]निन्द्यौ सिंहालिनौ पर्वमनुवेदाः [6]परैः स्मृताः ।
एषां गृह्ये न सीमन्तविधावृक्षस्य कीर्तनम् ॥ 191 ॥

वसुद्विमित्र[7]श्लोकेन तान् प्रत्यक्षोक्तिरत्र हि ।
गर्भे प्रथम एवासौ संस्कारो मुनिभिः स्मृतः ॥ 192 ॥

[8]वल(क्ष)पक्ष एवैषः संस्कारः पुंदिनाष्टके ।
आद्यान्त्यांशौ परित्यज्य क्रियते गृह्यदर्शनात् ॥ 193 ॥

हस्तादित्यं च हरिभं तिष्यमैत्रं [9]तथाश्विभम् ।
प्रोष्ठ[10]पादद्वयं चापि पुन्नक्षत्राष्टकं मतम् ॥ 194 ॥

ओजे जोवोऽङ्गपुत्रस्थः पापाः षष्ठत्रिलाभगाः ।
केन्द्रे गुरुसितौ योगास्त्रयः सीमन्तसौख्यदाः ॥ 195 ॥

---

सीमन्तविधिमाह-चतुर्थे मासीति । सिंहालि[11](नौ) वर्ज्येते । स्मृताः पर्वादयः शुभा इति स्मृताः । स्वे स्वे गृह्ये सीमन्तविधौ यानि [12](ऋ)क्षाणि उक्तानि तानि ग्राह्याणि । [13]येषां गृह्ये पुनः सीमन्तनक्षत्राणि नोक्तानि तेषां [14]वसु(द्वी)त्यादिश्लोकार्धपठितानि नक्षत्राणि ग्राह्याणि । वलक्षपक्षः शुक्लपक्षः । पुंदिनाष्टकं हि [15](ह)स्तादित्यादिपुन्नक्षत्राष्टकम् । गृह्यदर्शनात् पुंसा नक्षत्रेणा [16]चन्द्रमायुक्तः स्यादिति सूत्रेण द्वितीयतृतीयांशयोरेव परिगृहीतत्वादाद्यान्त्यांशौ परित्यज्य क्रियते इत्यर्थः । [17]एवमाश्वलायनगृह्यवर्तिनां विधिः ।

---

1. M कौष्टीतक
2. $T_1$ तत्रैष्टः
3. $T_1$ "पुंसवनविधिः" इति नास्ति ।
4. M षष्ठाष्टमे
5. $T_1$ निन्द्या
6. $T_1$ परे
7. $T_1$ शोकेन
8. T वलक्ष द्र.व्या.
9. M तथाश्वितम्
10. T पुद्युभयं । M पाठः ।
11. T ना for नौ
12. T वृक्षानि
13. $T_1$ येषा गृहे
14. T वसुद्वि
15. T अस्तादि
16. $T_1$ चन्द्रभायुक्तः
17. T एकमाश्वलायन
    $T_1$ एवमापलायन

[1]पूर्वपक्षे तु रोहिण्यां [2]श्रवणे द्वादशी तथा ।
मास्यष्टमे विष्णु[3]बलिः येषां गृह्ये स ईरितः ॥ 196 ॥

मासे तु नवमे प्राप्ते कारयेत्सूतिकागृहम् ।
[4]गृहं षोडष धा कृत्वा ब्राह्मं मध्ये चतुष्टयम् ॥ 197 ॥

ऐशान्यां मीनमन्यत्र मेषाद्याश्च प्रदक्षिणम् ।
कर्क्यन्त्यस्त्रीतुलासिंहा रिःफषष्ठाष्टवर्जिताः ॥ 198 ॥

[5]सुख(दाः) सूति(का)गारे स्त्रीणामन्यत्र [6]मृत्यु(दाः) ।
ऐन्द्राग्निवायुपितृविष्णुनिशाधिनाथा
विश्वाश्विमैत्ररजनीचरहस्त[7]पौ(ष्णाः) ।
शस्ताः प्रसूतिगृहकर्मणि मुक्तरिक्ता
राश्योऽप्यधोमुखगृहा इति [8]गर्ग आह ॥ 199 ॥

[इति] सीमन्तविष्णुबलिसूतिकागृहविधयः ॥ अथ जातकर्म ।

प्रागेव जातकर्म स्यान्नाभिच्छेद[9]स्तनाशयोः ।
असम्भवे पुनः कुर्याच्छुभे काले त्वघे गते ॥ 200 ॥

---

द्वादशी तथेति - द्वादशी च तत्र शस्तेत्यर्थः । प्रसूत्यर्थं [10]यद्गृहं तत्सूतिकागृहम् । राश्योऽप्यधोमुखगृहा इति । राश्योऽप्यधोमुख[11](रा)शयः शस्तेत्यर्थः । अथवा मुक्तरिक्ता[12](रा)श्यः इत्येकं पदम् । रिक्तानां समूहो रिक्ताराशिः । ङ्यन्तत्वं चिन्त्यम् । गृहं षोडषधा कृत्वा ब्राह्मं मध्ये चतुष्टयम् । ऐशान्यां मीनमन्यत्र मेषाद्याश्च । प्रदक्षिणं कर्क्यन्त्यस्त्रीतुलासिंहाः । षष्ठाष्टवर्जिताः सुखदाः । सूतिकागारे स्त्रीणामन्यत्र मृत्युदा इति च पठ्यते । सीमन्तविधिः । जातकर्म । [13](पि)त्राद्यरिष्टं चाह । प्रागेवेति । शुभे काले त्वघे गते इति । अशौचानन्तरं क्रियते चेत् कालस्य शुभत्वमन्वेषणीयमित्युक्तं भवति ।

---

1. T पुर्वपक्षेषु रोहिण्यां
2. M द्वादश्यां श्रवणे तथा
3. $T_1$ बलीः
4. ग्रहं $T_1$
5. T सुखदा
6. T मृत्युदा
7. T पौष्णाम्
8. $T_1$ पाठः । T गार्ग्य
9. $T_1$ स्तनाभयोः
10. $T_1$ यद्गृहः
11. T रश्यः
12. T रश्यः
13. T चित्रा

जातेष्टिः पुत्र[1]पूत्यर्था जातकर्मोत्तरं मता ।
जातमात्रे पिता सद्यः सचेलः स्नानमाचरेत् ।। 201 ।।

ब्राह्मणेभ्यो यथा[2]श(क्ति) दत्वा कालं विशोधयेत् ।
पूर्वाषाढेच पुष्ये च पितरं मातरं सुतम् ।। 202 ।।

मातुलं च तथा हन्यात्प्रथमाद्यं रजः क्रमात् ।
पितरं त्वाष्ट्रभाघंशे द्वितीये मातरं तथा ।। 203 ।।

हन्यादाद्यपदेऽर्यम्णोः मातरं च तथैव च ।
मातापित्रोः विनाशः स्याद्धस्ते याम्ये [च] त्र्यंशके ।। 204 ।।

पुष्ये कर्कटके चापे जलभे पितृमृत्युकृत् ।
पुत्रो जातो यदि स्त्री चेन्मातरं च जिघांसति ।। 205 ।।

रविज्ञौ सितमन्दौ च कुजार्कौ मन्दशीतगू ।
[3]धीस्थौ क्रमाच्छिशुश्चाम्बां भ्रातॄन् तातञ्च निघ्नतः ।। 206 ।।

पितृमातृमृती वित्तनाशाः शोभनमेव च ।
क्रमान्मूलाङ्घ्रि[4]जफलं व्युत्क्रमात्सार्पभेत्विदम् ।। 207 ।।

तातोऽम्बिकासोदरमातुलाः स्यु -
र्मातामहो मातृसमा च सूनुः ।
सूर्यादिखेटाः क्रमशः प्रदिष्टा -
स्त्रिकोणगास्तेऽपि च तान्निहन्युः ।। 208 ।।

---

जातेष्टिरिति काचित् क्रिया। हस्ते याम्ये त्र्यंशके इत्यत्र तृतीयांशो विवक्षित इति पूर्वाचार्य[5]वच(नम्) ।

---

1. $T_1$ पूर्वस्यात् for पुत्यर्था
2. T शक्तिं
3. M पाठः । T स्थौ for धीस्थौ
4. च फल
5. T वचनः

दिवाकरेन्द्वोः स्मरगौ कुजार्कजौ
गदप्रदौ पुङ्गलयोषितोस्तदा।
व्ययस्वगौ मृत्युकरौ तथा युतौ
तदेकदृष्टचा मरणायकल्पितौ ॥ 209 ॥

उग्र[1]ग्रहैःसितचतुरश्रसंस्थितैः
मध्यस्थिते भृगुतनयेःथवोग्रयोः ।
सौम्यग्रहैरसहितःसन्निरीश्रिते।
जायावधो दहननिपातपातजः ॥ 210 ॥

लग्नेन्द्वोः प्राणिनाक्रान्तनवांशद्वादशांशगे।
चन्द्रे सूतिः [2]प्र(ष्टृदेष्टृ)रुढराशित्रिकोणगे ॥ 211

उद्यद्दिननिशाराशितत्त्रिंशांशानुसारतः ।
दिनरात्रिविभागश्च नाडीक्लृप्तिं च मन्वते ॥ 212 ॥

---

तथा युतौ, दिवाकरेणेन्दुना च युतौ कुजार्कजौ च क्रमात् पुरुषस्त्रियोर्मृत्युकरौ। दिवाकरेण चेत् पुरुषस्य, इन्दुना चेत्स्त्रियः। अथवा कुजार्कजयुतौ दिवाकरेन्दू मृत्युकरौ इति योजना। तदेकदृष्ट्या मरणाय कल्पितौ। तयोः कुजार्कजयोरेकेन युतौ दिवाकरेन्दू इतरस्य दृष्ट्या चयुतौ चेत् तौ ग्रहौ मरणाय कल्पितौ। जायावधः जातस्य भार्यानाशः। प्रष्टा पृच्छकः। देष्टा दैवज्ञः। तयोरूढः राशिरारूढराशिः। इतरेतरयोगात्सङ्कल्प्यः। अयं विधिरतीतविषये च ग्राह्यः। राशि[3]चक्रस्य वृत्तात्मकत्वं चात्र कल्प्यम्। तदा चक्रं यदा वृत्तमिति शास्त्रान्तखचनात्। अयं विधिरधीत[4]विषयेऽन्यत्र च ग्रह्यः। द्वादशांशकल्पना च द्विधा स्यात्। क्रियादि[5](तस्तत्त)द्भादितश्चेति। लग्नराशेर्दिन[6](नि)शात्मकतया दिन[7](नि)शोर्विभागस्तस्य त्रिंशांशकमानेन दिन[8](नि)शोर्नाडीमानकल्पना।

---

1. M ग्रहैरसित
2. T प्रष्टृदृष्टरुढ़
3. $T_1$ चक्र for चक्रस्य
4. $T_1$ विषे for विषये
5. T स्तत्ताद्भादि
6. T दिशा
7. T दिशो
8. T दिशो

लग्नादयुग्मगे भानौ सिते युग्मे दिवा यदि।
पितरं मातरं रक्षेद्व्यस्ते हन्यात्क्रमात्तथा ॥ 213 ॥

लग्नादयुग्मगे मन्दे युग्मे चँन्द्रे निशा यदि।
पितरं मातरं रक्षेद्व्यस्ते हन्यात्क्रमात्तथा ॥ 214 ॥

नक्षत्रतिथिराश्यन्ते निशान्तेऽथ दिनान्तगे।
अंशकान्ते तु यो जातस्तस्यारिष्टं विनिर्दिशेत् ॥ 215 ॥

लग्नेशो वा दृगाणेशस्त्वंशकेशो यदा तदा।
शत्रुस्थानगतो वाथ रन्ध्रस्थानगतोऽपि वा ॥ 216 ॥

तद्राशिप्रतिमे वर्षे मासेऽहनि च मृत्युदः।
[1]राहुस्त्रिलाभषष्ठस्थः शुभग्रहनिरीक्षितः ॥ 217 ॥

वृषकर्कटगो वापि सद्योऽरिष्टविनाशनः।
आर्द्राश्लेषावारुणं तिष्यमूल -
चित्रा ज्येष्ठा कृत्तिका वर्जनीयाः।
स्त्रीणां सूतौ भ्रातृपुत्रादिशोकं
मृतिं स्वतन्त्रं कलहं च विद्यात् ॥ 218 ॥

[अथ] [2]नामविधिः ॥

द्वादशे षोडषे विंशे द्वात्रिंशे क्रमशो दिने।
नाम कुर्याद्द्विजादीनां विप्रस्य दशमेऽपि वा ॥ 219 ॥

[3]एकादशे दिने विष्णोः [4]स्मर(णं) नाम चोदितम्।
अकालात् कालनीत्यैतत् प्रागेव नवतेर्दिनात् ॥ 220 ॥

---

तद्राशिः षष्ठाष्टमराशिः। अथ नामविधिः। द्वादशे इति। दशमेऽपीति वचनं कौषीतकाद्याश्रितम्।विष्णोः स्मरणं विष्णुस्मृतिः। नीतिर्न्यायः। अकालात्काल इति न्यायेन [5]न(व)तेर्दिनात् प्रागेव कर्तव्यम्। नवतिदिनानन्तरं हि निष्क्रामणस्य कालः।

---

1. T₁ राहुस्त्रीषष्ठलाभस्थः
2. T₁ तथा M मातृकायां नामविधिः इति न दृश्यते।
3. T₁ पाठः। T एकादशगे दिने विष्णोः M एकादशेऽपि वा विष्णोः
4. स्मरनं
5. T नपते द्र.मू.

यस्मिन् दिने मासि वाब्दे या क्रिया मुख्यरूपतः ।
विहिता सा न कर्तव्या दिनादौ तदनन्तरे ॥ 221 ॥
[1](मा)ङ्गल्यकर्म नैवेष्टं [2]सायाह्ने चैन्यसृग्दिने ।
शुभेन युक्ते दृष्टे वा लग्ने स्वोच्चगतेन वा ॥ 222 ॥
स्वामि[3]नामनि वा रत्रिर्न दोषायेति केचन ।
तदभावे तुरीयांश एव रात्रेरिहेष्यते ॥ 223 ॥
चित्राशोकाश्विनो नेष्टा मघेन्द्वार्द्रास्तु मध्यमाः ।
स्थिरः श्रेष्ठश्चरो नेष्टो व्ययस्थो दुःखदो ग्रहः ॥ 224 ॥
लग्नार्थसुत[4]कामस्थश्चन्द्रः कैश्चिन्निषिध्यते ।
मघेन्द्विति मघेन्द्रेति [5]वा पाठ इह सम्मतम् ॥ 225 ॥
[6]आद्यपाठानुसारेण नेन्दुचित्रेति शासनम् ।
तथाप्यैन्दवनक्षत्रे नाम कुर्वन्ति सूरयः ॥ 226 ॥
मित्रवारुणयोः [7]स्वातीरोहिण्यैन्दवभेषु च ।
कुर्यान्नामक्रियामित्थ[A]मुचस्थ्यानुज[8]वाग्बलात् ॥ 227 ॥

---

मुख्यरुपत इति - नामकरणं द्वादशे अहनि मुख्यरुपतया विहितम् । अन्नप्राशनं षष्ठे मासि । चौलस्तृतीये वर्षे इत्यादि मुख्यविधिः । तदनन्तरे विधिपरे दिनादौ [9]दिने मासे वर्षे च । ऐनिर्मन्दः । असृक् कुजः । स्वामिप्रसादात् कृतं नाम स्वामिनाम । मघेन्द्विति प्रोक्तविवरणं नेन्दुचित्रेति वचनमष्टके मघेन्द्रेति द्वितीयपाठे इन्दुभस्य मुख्यत्वमेव स्यात् । निषेधाभावात् अतो [10]मघेन्द्वित्याद्यपाठानुसारे[11](ण) नेन्दुचित्रेति वचनम् ।

---

1. T मङ्गल्य
2. $T_1$ सायोहने
3. M ना वह्नि वा रात्रौ
4. $T_1$ कामार्थश्चन्द्रः
5. $T_1$ पा for वा
6. $T_1$ तथा M आद्यापाठा
7. M पाठः । T स्वति
8. $T_1$ वावबलात्
9. $T_1$ दिनमासे
10. T "मघेन्द्वित्याद्यापाठ" इत्यारभ्य ततश्चतुर्थपङ्क्तिगात "मघां परे" पर्यन्तं T मातृकायां ग्रन्थपातः
11. T व for ण

---

A. अत्र मूले "उचकस्थ्यानुज" तथआ व्याख्याने "उचथ्यानुज" इति च वर्तते । एतस्य नामधेयत्वात् पाठनिश्चयः दुष्करः ।

केचिदार्द्रां [1]प्रशंसन्ति ज्येष्ठामन्ये मघां परे।
इत्येवं स्वय[2]मन्यत्र वचनात्तु मतान्तरम् ॥ 228 ॥

तथापि नैन्द्रे शिष्टानां नाम[3]कर्मापदो विना।
केन्द्रे [4]शु(क्ले)न्दुरार्यो वा लाभे पापाः सितोऽथवा ॥ 229 ॥

[5A]जीवोऽरौ वा शुभेऽङ्गस्थे [6]पापे [7]दुश्चि(क्य)गेऽथवा।
सप्तयोगा शुभा नाम्नि दोषघ्नाः शुभवर्द्धनाः ॥ 230 ॥

शुक्लेन्दुः शुक्लपक्षेन्दु रिःफरन्ध्रमशुद्धता।
इन्दोश्च शुभकर्मत्वं [8]योगेष्वेष्वप्यपेक्षि[9](तम्) ॥ 231 ॥

विक्रमे क्रूरसंयुक्ते व्यये रिक्ते शुभोदये।
शुभकर्मरते चन्द्रे योगो नामनि शोभनः ॥ 232 ॥

शुद्धे व्ययेऽष्टमे चैव षष्ठे चन्द्रेऽपि वा गुरौ।
शुभकृद्युडुपे नामक्रिया सम्पद्विवृद्धये ॥ 233 ॥

---

तथापि अमुख्यत्वेऽपि। उचथ्यानुजो बृहस्पतिः। केचिदिति। केचिदार्द्रां प्रशंसन्ति ज्येष्ठामन्ये [10]म(घां) परे इत्येवमन्यत्र शास्त्रान्तरे। स्वयं वचनात् साक्षात् वचनात् मुख्यवचनान्मतान्तरं [11]म(घे)न्द्रेति द्वितयं मतं परिगृहीतमित्यर्थः। तथापि मुख्यत्वेनोदिते विशिष्टानामाचार्याणां, आपदो विना=अनापदि नामकर्म नाभिमतम्। केन्द्रे शुक्लेन्दुरित्यस्य [12]विवरणं [13]शुक्ल(पक्षे)न्दुरिति। व्याख्यातस्य रिःफरन्ध्रमशुद्धतादेर्गमकत्वेन शास्त्रान्तरोदितान् योगान् प्रदर्शयति विक्रम इत्यादिना।

---

1. $T_1$ प्रशासन्ति
2. M मित्यत्र
3. M कर्मावदो
4. T शुक्रेन्दु द्र.व्या.
5. $T_1$ जीवारौ
6. $T_1$ पापेन्दुश्चित्क
7. T दुश्चित्कगे
8. $T_1$ योगेष्वेव्यपेक्षिता
9. T ता for तम् द्र.व्या.
10. T मखां
11. T मखे
12. $T_1$ वितरणं
13. T शुक्लेन्दुरिति द्र.मू.

---

A. अत्र "जीवारौ" इति $T_1$ पाठोऽपि समीचीनो वा।

भवे शुक्रेऽथवा क्रूरे केन्द्रे शीतकरे गुरौ।
सिते पक्षे शुभो योग इत्यन्यत्र बुधोक्तितः ॥ 234 ॥

आर्यो वेत्यत्र च तत इष्टं शुक्लानुवर्तनम्।
अ आ श इति मेषः स्यादि [1]ई उष वृषो भेवेत् ॥ 235 ॥

ऊ ऋ ॠ स यमे राशौ लृ ॡ ए ऐ ह [2A]कर्कटे।
ओ औ [B]लकाराः सिंहे स्युरं अः क्षश्च वधूयुता ॥ 236 ॥

कवर्गात्पञ्चवर्गाः स्यु [2a]वणिगादिघटान्त्यगाः।
मीने यरलवाश्चैव राशिष्वेवं लिपिस्थितिः ॥ 237 ॥

स्वर्भूक्षित्यब्धि[3]चन्द्रेन्द्रवह्न्यर्काग्निखवायुतैः[C]।
क्रमान्मे[4]षादयो योज्या नामादौ घातकं त्यजेत् ॥ 238 ॥

---

इत्यन्यत्र बुधोक्तित इति। अन्यत्र शास्त्रन्तरे, एवं बुधवचनात् रिःफशुद्धाद्यपेक्षितमित्यर्थः। आर्यो वेत्यस्मिन् [5]योगेऽपि तत एव बुधवचनात् शुक्लानुवर्तनमिष्टं भवति। नामाक्षराणामिष्टानिष्टत्वप्रदर्शनाय राशिषु वर्णानां विभागमाह - अ.आ श इति मेषः स्यादिति। [6]स्वारादीनामष्टानां [7]ग(णा)नां राशिषु विभागमाह - [8]**स्व(र्भू)**रित्यादि। [9]नामादौ नाम्न आदौ। घातकं घातकाख्यं, वक्ष्यमाणविधि[10]सि(द्ध)मक्षरं गणं च त्यजेत्।

---

1. $T_1$ M पाठः T रं for ई
2. T कर्कटके
2a. $T_1$ वन्निगादि
3. $T_1$ चन्द्रेन्दु
4. $T_1$ मेषदयो
5. $T_1$ योगे वितत
6. $T_1$ स्वरादिनाष्टानां
7. T गणनां
8. T स्वभ्
9. $T_1$ नामदौ
10. T सिद्धि

---

A. अत्र वृत्तभङ्गभिया "कर्कटके" इत्यत्र "कर्कटे" कृतम्।
B. अत्र "ळकाराः" इति भवेद्वा। "यरलवा" इति मीनराशेः वर्णाः उक्ताः।
C. अत्र द्वादशराशीनां प्रतिपादितेषु भूतेषु एकादशानामेव उपलम्भात् "तैः" इत्यत्र "कैः" इति क्रियते चेत् पदगतदोषोऽपि अपाकृतो भवति, तथैव द्वादश भूतसंख्यापि लभ्यते।

**राशित्रिकोणगो बन्धुः [1]सेवको द्विदशर्तुगः ।**
**पोषकोऽ[2]द्वित्रिरुद्रस्थो घातकोऽ[3]ष्टव्ययाम्बुगः ॥ 239 ॥**

**[4]स्वलग्नजन्मराशिभ्यां व्ययाष्ट[5]मचतुर्थगाः ।**
**अक्षराणि गणाश्चापि घातकत्वेन कीर्तिताः ॥ 240 ॥**

**नामादौ [6]जप्यमन्त्रादौ श्लोकादौ पितृनामनि ।**
**घातकाद्यक्षराश्चि[7]न्त्यास्तथा श्लोकादिगा गणाः ॥ 241 ॥**

---

बन्धुसेवकपोषकघातकादीनां विभागमाह - **राशित्रिकोणग** इति । पुरुषस्य लग्नतो जन्मतो वा प्रथमपञ्चमनवमराशिषु गतो वर्णो बन्धुसंज्ञो भवति । तथा तेषु गतो गणश्च बन्धुसंज्ञो भवति । द्वितीयदशमषष्ठगः सेव[8]काख्यः । सप्तमतृतीयैकादशस्थः पोषकः । अष्टमद्वादशचतुर्थगो घातकाख्यः । त्याज्यात् घातकाक्षरगणात् पृथक् दर्शयति - **स्वलग्नजन्म**[9]राशिभ्यामित्यादि । [10]ए(षां) विनियोगस्थानमाह - **नामादा**विति । नाम्न आद्यक्षरे, [11]जप्यमन्त्रस्य आद्यक्षरे रचित श्लोकस्य आद्यक्षरे, पितृनाम्न आद्यक्षरे च घातकाद्यक्षराश्चिन्त्याः । घातकास्त्याज्याः । पोषकसेव-(क)बन्धुसंज्ञिता ग्राह्याः इत्यर्थः । श्लोकादिगतघातगणाः पोषकादिगणाश्च तथा चिन्त्याः । श्लोके गणस्य प्राबल्यमिति सूचितम् । नाम तु लोके द्विविधं दृश्यते । जातस्य शिशोः पित्रादिनाम न्यस्य यत् क्रियते तत् पितृनाम । विद्यादिविशिष्टस्य वा यदनुरुपं नाम क्रियते तदन्यत् इति ।

---

1. $T_1$ सैवको
2. $T_1$ दितिरुद्र
3. M ष्टमचतुर्थगाः
4. M इयं पङ्क्तिर्नास्ति
5. $T_1$ पाठः । T ग for म
6. $T_1$ जम्य for जप्य
7. $T_1$ निन्द्या for चिन्त्या द्र.व्या.
8. $T_1$ सेवताख्यः
9. $T_1$ राशिमित्यादि
10. T एषा
11. $T_1$ जम्यं

गुरुसर्वादिमध्यान्ताः क्षितिचन्द्रार्कवायवः ।
लघवोऽपि गणास्तद्वद्यु[1]समुद्रा[नलाम्बराः] ॥ 242 ॥

[2]खार्काग्निवायवो निन्द्यास्तेऽपि चन्द्रादधः शुभाः ।
खगणोऽ[3]र्का(त्परः)शस्तः प्राथम्यादि च वीक्ष्यताम् ॥ 243 ॥

प्राथम्याधिक्ययोगाद्वि[4]दुरिह नभसः शून्यतां शोकमग्ने
र्वायो [5]र्भ्रान्तिञ्च दुःख [6]सवितुरतिभयं वायुयुक्ताच्च वह्नेः ।

[7]सौभाग्यं स्वर्धराया बहुसुत[8]धनता सौख्यमिन्दोरपास्वं
भानुव्योम्नो[9](श्च) [10]योगे श्रियमतिमहतीं तद्विदो व्याहरन्ति ॥244 ॥

---

गणविशेषानाह - **गुरुसर्वादीति** । अक्षरत्रयस्य गणसंज्ञा स्यात् । तत्र पूर्वार्ध[11]गणावयव उत्तरार्धगताक्षरेण पूर्यते किल । यस्मिन् गणे त्रीण्यप्यक्षराणि गुरूणि भवन्ति [12]स सर्वगुरुः क्षितिसंज्ञितः स्यात् । यस्मिन् [13]आद्यक्षरं गुरु, मध्यान्ते [14]लघु(नी) स आदिगुरुश्चन्द्रसंज्ञितः । मध्यगुरुरर्कः । अन्तगुरुर्वायुः सर्वलघुसंज्ञितः । आदिलघुः समुद्रः । मध्यलघुरनलोऽग्निः । अन्तलघुरम्बराख्यः आकाशाख्यः । खार्काग्निवायुगणा निन्द्याः । तेऽपि स्वोपरि चन्द्रगणोऽस्ति चेच्छुभाः अर्कगणात्परं खगणोऽस्ति चेत् सोऽपि शस्तः । श्लोके [15]यस्य गणस्यं प्राथम्यं यस्य वाधिक्यं संख्याधिक्यं तद्वशात् विशेषतः फलं चिन्त्यम् । [16](त)द्वशात् फलमाह- **प्राथम्येति** । अतिभयं वा[यु]युक्ताच्च वहनेरित्येतत् गणयोगफलं, भानुर्व्योम्नोरिति च योगफलम् ।

---

1. T समुद्रार्कवायवः द्र.व्या.
2. $T_1$ सार्काग्नि
3. T कार्म्बरः for कार्त्परः द्र.व्या.
4. $T_1$ रहि for रिह
5. $T_1$ भ्रांतिश्च
6. M सपितुरिति
7. $T_1$ सौभाग्यार्धराया
8. $T_1$ धनदा
9. T श for श्च
10. $T_1$ योगो
11. $T_1$ गणोऽवयव
12. $T_1$ सर्वगुरुः for स सर्वगुरुः
13. $T_1$ आद्यमक्षरं
14. T लघूनि
15. $T_1$ पाठः । T खस्य
16. T न द्वशात्

**भूमेरग्निर्विभूतिं दिशति दिनपतेः स्वंश्रियं नाकतो[1]ऽर्कः**
**[2]तेजोहानिं बलं [3]खा(द्धु)तवहगणतो वायुरत्यन्तनाशम् ।**
**वायोरग्निश्च तादृक् जलधरकुसुमादूर्ध्व[4]गोऽग्निश्च तद्व**
**[5]च्छोकं श्लोकं प्रति स्यात् फलमिह कथितं मुक्तकेष्वादरेण ॥245॥**

**[6]अविसर्गान्तपूर्वार्धः [7A](क)पञ्चम[8](वि)वर्जितः ।**
**[B]लिङ्वर्जतश्च यःश्लोको वकारादिशच शोभनः ॥ 246 ॥**

**[9]गोगुरुर्मध्यमश्चन्द्रो लग्नाम्बुगो बुधः शुभः ।**
**सुखे बुधो युतः कैश्चिन्नेष्टाः पापास्त्रिलाभगाः ॥ 247 ॥**
**[इति] नामकरणविधिः ॥**

---

भूमेरूर्ध्वगतोऽग्निर्विभूतिदः । बलं [10]खात् आकाशादूर्ध्वगतोऽर्क इत्यर्थः । जलधरकुसुमात् = जलात् । मेघपुष्पं [11]घनर(सः) इत्यमरसिंहः । तद्वदत्यन्तनाशम् । मुक्तकेषु श्लोकं श्लोकं प्रति फलं विशेषाद्भवति । अन्यत्र प्रथमश्लोकतो विशेषाच्चित्त्यं किल । श्लोकलक्षणमाह - [12]अविसर्गान्तेति । [13]कपञ्चमो नञ् । अविसर्गान्तः अकारविसर्गान्तः । [14]विसर्गराहित्यं तु बहूनां महाकवीनां प्रयोगविरोधात् न युज्यते । तथा हि अत्र ज्योतिषां गण इति । तथा कालिदासकृतौ "[15]नगाधिराज" इति । माधवपण्डितश्च "त्रयीमय" इति । एवमन्येपि बहवः । इति नामकर्म ।

---

1. $T_1$ त्कः for र्कः
2. $T_1$ तेजोहानिग्नर्बलं
3. $T_1$ खादुत
4. $T_1$ तो for गो
5. $T_1$ च्छ्रोतं
6. $T_1$ तथा M अपिसर्ग
7. T तपञ्चम M तत्पञ्चम
8. $T_1$ पाठः । T पिवर्जितः
9. M इयं पङ्क्तिर्मातृकायां नास्ति ।
10. $T_1$ स्वात्
11. T घनरसं $T_1$ घननरसं
12. $T_1$ विसर्गान्तेति for अविसर्गान्तेति
13. $T_1$ पञ्चमो for कपञ्चमो
14. $T_1$ विसर्गाहित्यन्तुहूनां महा
15. $T_1$ नागाधिराज

---

A. अत्र व्याख्यानगत "कपञ्चमो नञ्" इति विवरणस्या धारेण शोधितम् ।
B. अत्र लिङ्वर्जश्च चयः श्लोको इति भवेद्वा ।

अथ कर्णवेधः

दिगर्काष्टिदिने मासे सप्तमे [1]चाष्टमेऽपि वा ।
कर्णवेधं शुभक्षेत्रे कुर्यान्म[2]ध्यौ मृगक्रियौ ॥ 248 ॥

[3]शताजाश्विमरुन्मित्रमूलशोका न शोभनाः ।
शस्तार्द्रा मध्यमा राकाप्रतिपद्रुद्रवहनयः ॥ 249 ॥

[A][वर्ज्यस्तिथ्यर्क्ष]योः सन्धिरहन्यथो लग्नतो न तु ।
यदा लग्नाद्विधोर्वापि केन्द्रोपचयगाः शुभाः ॥ 250 ॥

कर्णवेधस्तदा कार्यः सर्वसम्पद्विवृद्धये ।
लग्नाद्विधुर्विधोः शुक्रः [B]शुक्रा[4]दुपच(ये) गुरुः ॥ 251 ॥

महाबलास्त्रयो यो[5](गा) एको वापि समुच्चयात् ।
त्रित्व ऐक्ये [6]तु योगानां गुरोर्लग्न[7]स्थि[तिः] समा ॥ 252 ॥

वक्री महाबलः सौम्यो दृश्यश्चन्द्रोऽस्य केन्द्रगः ।
कर्णवेधे शिशोरायुरारोग्य श्रीविवर्धनः ॥ 253 ॥

---

अथ कर्णवेधविधिः । दिगर्केति । अष्टिः षोडश । वर्ज्य इति । सन्धिरवसानम् । अह्नि तिथे ऋक्षस्य वा सन्धिरस्ति [8](चे)त्तद्दिनं वर्ज्यमित्यर्थः । लग्नतोऽथो सन्धिश्चेन्न वर्ज्यः । सन्धेरूर्ध्वगतो दिनभागो ग्राह्य इत्यर्थः । लग्नाद्विधुरिति श्लोकार्धेन त्रयो योगा उक्ताः । अथवा त्रिभिर्लक्षणैर्युक्त एक एव योगः स्यात् । अत्र योगानां त्रित्वे च गुरोर्लग्नस्थितिः समा भवति । पक्षद्वये ऽपि गुरोर्लग्नस्थिति[9]रपेक्षितेत्यर्थः ।

---

1. $T_1$ वाष्टमेऽपि वा
2. $T_1$ मध्या
3. M पाठः । T शताजाश्चिमरु
4. T दुपचयगे
5. T योग
6. $T_1$ त्योगानं, M च योगानां
7. T लैग्नस्थिः for लग्नस्थितिः
8. T चत्तद्दिनं
9. $T_1$ रपेक्षितेष्वित्यर्थः

---

A. अत्र कंसमध्ये पूरितः भागः व्याख्यानुसारेणैव वर्तते ।
B. वृत्त भङ्गभिया अत्र शुक्रादुपचये इति कृतम् ।

अर्थव्ययर्क्षौ शुभसम्प्रयुक्तौ
गुरूदये मीनभृगूदये वा।
त्रिलाभकर्माम्बुशुभात्मजेषु
सौम्येषु कर्णस्य निकृन्तनं स्यात् ।। 254 ।।

[1]शुभो लग्नेन्दुकेन्द्रोपचय[2]स्थो बलसंयुतः।
[3]एषोऽपि योगः कर्णस्य [4]वेधे सम्पद्विवर्धनः ।। 255 ।।

सद्ग्रहे लग्नगे लाभे जीवे शून्ये तृतीयभे।
पुष्यपौष्णेन्दुविष्णवश्वित्वाष्ट्रभं स्यात्तदा यदि ।। 256 ।।

वारनक्षत्रयोगा ये शुभा इति पुरेरिताः।
कर्णवेधे शुभास्ते च चन्द्रश्चेच्छुभकर्मकृत् ।। 257 ।।

[5]चन्द्रे कुजार्क्यंशगते कर्णच्छेदस्तु निश्चयात्।
योगस्थानगतैः पापै[6]रपिच्छेदश्चिराद्भवेत् ।। 258 ।।

कार्या याः स्वामिनो भृत्यैरङ्गवीणादिकाः क्रियाः।
तासां च कर्णवेधः स्याप्ययमेव विधिः स्मृतः ।। 259 ।।
[7]तथैवाद्भुतशान्त्यादेः कर्णवेधोदितो विधिः।

---

अर्थव्ययर्क्षौ शुभसम्प्रयुक्तौ चेत् गुरुदये मीनस्थभृगूदये वा योगः स्यात्। तथा त्रिलाभयोः [8]कर्माम्बुनोः शुभात्मजयोश्च शुभयुक्तयोः सन्तौ गुरुदये [9]मीन(स्थ)भृगूदये वा [10]योगाः स्युः। सद्ग्रहे लग्नगते श्लोकेन एको योगः। **योगस्था**नगतै[11]रिति। [12]यत्र योगस्थानगतैः शुभैर्योग उक्तस्तत्रगतैः पापैरित्यर्थः। अद्भुते [13]उ(त्पा)ते दृष्टे कर्तव्यं [14]यच्छन्तिकर्म तदद्भुतशान्तिरित्युच्यते। कर्णवेधविधिः।

---

1. $T_1$ शुभे
2. $T_1$ स्थे
3. $T_1$ एषो वियोगः
4. $T_1$ योगः
5. $T_1$ चन्द्रकाजाक्यंशगते
6. M यरविच्छेद
7. M स्यात्कर्माद्भुतशान्त्यादि
8. $T_1$ कर्माम्बुगो
9. T मीनस्य भृगूदये
10. $T_1$ योग स्युः
11. $T_1$ रपि
12. $T_1$ अत्र
13. T उल्पातो
14. $T_1$ यच्छन्ति कर्म

अथोपनिष्क्रामणविधिः ॥
[1]चतुर्थे मासि कर्तव्यमुपनिष्क्रामणं शिशोः ।
अन्नप्राशतवत्कालस्तस्योक्तः पूर्वसूरिभिः ॥ 260 ॥
न क्रिये[2]तोपनिष्क्रामो यदि मासि चतुर्थके ।
सहान्नप्राशने[3]नास्य [4]काल उक्तोऽन्तरा न च ॥ 261 ॥
॥ [5]इति उपनिष्क्रामणविधिः ॥ अथान्नप्राशनविधिः ॥
नाक्षत्रमासे सम्पूर्णे बालान्नप्राशनोक्तभे ।
[6]सपित्र्ये दुग्धपानं [7]स्यादह्नमध्ये मुखेऽपि वा ॥ 262 ॥
राशयो ग्रह[8]संथा च बालान्नवदिहापि च ।
[9]चन्द्रस्योपचयस्थानं बलं च सितवच्छुभम् ॥ 263 ॥
विशेषतोऽत्र जन्मर्क्षमपि श्रेष्ठतमं स्मृतम् ।
[10]मासि षष्ठेऽथ युग्मे वा कारयेद्बालभोजनम् ।
मासोऽत्र [11]सावनस्त्विष्टश्चान्द्रमप्यापदीष्यते ॥ 264 ॥
सौरोऽपि मुख्य इष्टोऽत्र युग्म[12]शब्दोऽत्र कैश्चन ॥
[13]विरोधाभावसिध्यर्थ इत्युक्तस्तन्मते पुनः ॥ 265 ॥

---

उपनिष्क्रामणविधिश्चतुर्थे इति । सहान्नप्राशनेन अन्नप्राशनदिने एव तस्य काल उक्तत्वात् न तु पृथग्दिनान्तरे कार्यमित्यर्थः । अथान्नप्राशनविधिः । तत्र प्रागेव दुग्धपानापेक्षास्ति चेत्तद्विधिमाह-**नाक्षत्रमासे** इति । सितवच्छुभम् । सितस्य चोपचयस्थानं बलञ्च शुभमित्यर्थः । स्थानं स्थितिः । अन्नस्य कालमाह-**मासि षष्ठे** इति । विरोधाभावे विधिर्न भवति ।

---

1. $T_1$ चतेर्थे
2. $T_1$ तोनिष्क्रामो
3. M नामुं
4. M विदध्यादन्तरा न तु
5. $T_1$, M "इति" पदं नास्ति
6. $T_1$ सवित्र्ये
7. M स्यादहनोमध्ये
8. M ग्रहसंस्थाश्च
9. M चान्द्र
10. $T_1$ तथा M मासे
11. $T_1$ साधन
12. M शब्दो द्विधा मतः
13. M मातृकायां अस्याः पङ्क्ते स्थाने - कैश्चिन्मुख्यो मतः कैश्चिदविरोधो मतो बुधैः। युग्मशब्दस्य मुख्यत्वं वादिभिर्वर्ज्यते सदा॥ इति लिखितं वर्तते।

गुरुमौढ्यदिसद्भावे वर्ज्यः प्राशोऽष्टमादिषु ।
[1]आपत्कल्पविधानार्था युग्मगीरिति वादिनाम् ॥ 266 ॥

मतेऽष्टमादिमासेषु [A]गुरुमौढ्यादि नो धुतम् ।
[2]सङ्क्रान्त्यन्तः सौरमासश्चान्द्रश्चन्द्रार्कसङ्गमः ॥ 267 ॥

सावनः खाग्निदिवसो नाक्षत्रं शशिमण्डलम् ।

आदित्यहस्तवसुविष्णुसमीरधातृ-
पौष्णोत्तरावरुणमित्र[3]निशापचित्राः ।
सौरेड्यदास्रसहिताः शिशुभोजनार्हाः
[4]सेन्द्राग्निनै[5](ऋ)त[6]मघास्त्वधिका नवान्ने ॥ 268 ॥

[7]शु(क्लौ)जास्तिथयोऽर्भकस्य शुभदा [8]भु(क्तौ) नवम्या विना ।
हित्वा पर्व तथा द्वितीयसहिता [9]धर्माधिनाथा शुभाः ॥ 269 ॥

सौम्यांशादि[10]दिनञ्च शोभनतरं [11]चान्द्रञ्च सर्वं विना ।
मीनाजालिगृहाण्यधोमुखमपि त्याज्यानि शेषाः शुभाः ॥ 270 ॥

शुक्रज्ञौ मृत्युगौ शस्तौ [12]नेष्टो धर्माङ्गगः शशी ।
[13]मृत्युदो धर्मगश्चा[14](न्द्रिः)मृत्युसंस्थ[15]महीजवत् ॥ 271 ॥

---

आपत्कल्पविधाने तु विधिर्भवति । षड्दोषाविहितकाले एव ग्राह्य इत्यर्थः । [16]नि(शा)पो मृगशिरः । सौरेड्यं पुष्यभम् । [17]शु(क्लौ)जाः शुक्लपक्षे ओजाः । धर्माधिनाथा कृष्णत्रयोदशी, सापि शुभा स्यात् । चान्द्रं चान्द्रस्यांशदिनादिभि[18](र्वा) वक्षमाणाः ।

---

1. M आपद्विधिरयं प्राक्तो युग्म
2. $T_1$ सङ्क्रान्त्यसौरमासः
3. $T_1$ मृगाः सचित्राः
4. M यत्वन्द्रग्न
5. T नैरुत
6. M पाठः । T मघात्वधिका
7. T शुक्लोजा
8. T भुक्तो
9. $T_1$ धर्मादिनाथा
10. $T_1$ दिनस्य
11. $T_1$ चान्द्रं for चान्द्रञ्च
12. $T_1$ तथा M नष्टो
13. $T_1$ मृत्युगो
14. T चान्द्रिं
15. $T_1$ मपीजवत्
16. T निशपो द्र.मू.
17. T शुक्लोजाः
18. T र्दा for र्वा

A. पूर्वश्लोकोक्तविरोधत्वात अत्र "गरुमौढ्यदिनं धतं" इति भवेद्वा ।

[1]सुख(गो) दुःखदो जीवो [2]द्वित्र्यङ्के चाबलो यदि।
बालान्न[3](व)न्नवान्नं स्यादाहिताग्नेर्भिदाल्पिका ॥ 272 ॥

शुभोऽत्र कर्मगो जीवो वारवर्गाश्च शीतगोः।
नवे फले मीन इष्टः [A]पुष्पवर्णे तु कोर्प्यजौ ॥ 273 ॥

आहिताग्नेर्दिवैवेष्टः शक्रभेष्वन[4]ला(दि)तः।
प्रतिपद्द्वयराकासु न नाक्षत्रमवेक्षते ॥ 274 ॥

शुभक्रियः शुभांशस्थो [4a]वली(न्दु)र्जीववीक्षितः।
केन्द्र[5]त्रिकोणे जीवो वा भुक्तियोगोऽयमुत्तमः ॥ 275 ॥

सहजारिभ[6]वेष्वेकः पापेषु बलवान् ग्रहः।
केन्द्रे गुरुश्च योगोऽयमष्टाविष्टफलप्रदः ॥ 276 ॥

वर्धमाने [7]शुभांशस्थे चन्द्रे जीवे त्रिकोणगे।
लग्नकेन्द्रे सितो योगो नवभुक्तौ शुभप्रदः ॥ 277 ॥

लग्ने गुरुः क्षते पापः शुक्रः केन्द्रे बलान्वितः।
शुक्लपक्षे [8]शुभांशस्थः शशी [9]यो(गोऽ)श(ने) शुभः ॥ 278 ॥

लग्नार्थभ्रातृबन्धुस्था जीवज्ञार्कसिताः क्रमात्।
चन्द्रश्च शुभकृद्भुक्तौ योगोऽयममृताह्व[10](यः) ॥ 279 ॥

---

शुभोऽत्रेति विधिः सर्वेषामपि नवान्ने समानः। शक्रभेषु चतुर्दशनक्षत्रेषु। अष्टौ = [11]अशने।

---

1. T सुखदो
2. $T_1$ द्वित्र्यंशे
3. T वा for व
4. T लार्दितः
4a. T बलीदु
5. $T_1$ त्रिकोणजीवे वा
6. $T_1$ ष्वेताः
7. $T_1$ पाठः। T शुभाङ्गस्थे
8. $T_1$ पाठः। T शुभाङ्गस्थः
9. T योगे शनेः
10. T ये
11. $T_1$ अशुने

---

A. अत्र "पुष्पपर्णे" इति भवेद्वा।

लग्ने शुक्रो धने सौम्यो [1]विक्रमेऽर्कः कुजो [2]भवे।
मन्दो वा भुक्तियोगोऽयममृताख्योऽतिशोभनः ॥ 280 ॥

कुजशुक्रार्किवागीशा व्ययलग्नारिकेन्द्रगाः।
शुभांशे शीतगुश्चाष्टौ [3]पुष्ट्यायुःश्रीविवर्धतः ॥ 281 ॥

कीटेऽन्त्यो घटगोवीणातुलामीनेषु मध्यमः।
[4]आद्योऽन्येषु दृगाणो हि भोक्तुर्बालस्य मृत्युदः ॥ 282 ॥

उपनिष्क्रामणे चापि दृक्काणोऽयं मृतिप्रदः।
रात्रौ वस्वद्रिरन्ध्राख्या [5]मुहूर्ताश्चाति भीतिदाः ॥ 283 ॥

निशास्थगुलिकश्चापि वर्ज्योऽत्रोद्वहनादिवत्।
कृष्णाष्टम्याः परं विश्व एव [6]बालान्नभोजनम् ॥ 284 ॥

रात्रौ वारफलं नैव चिन्त्यमन्यत्तु मान्दितः।
नवभुक्तिर्हरौ लग्ने शस्ताजपितृतारयोः।
[7]स्व[वारो]क्ते मुहूर्ते स्यात्सर्वेषां प्रथमाशनम् ॥ 285 ॥

अयं विधिस्त्वाग्रयणेऽङ्गरक्षा –
पादाङ्गवर्मादि नवग्रहे च।
[8]गजाश्वपश्वादिनिरीक्षणे च
तेषाञ्च पूर्वं यवसादिदाने ॥ 286 ॥

[9]स्वर्णैः पञ्चायुधं धार्यं रक्षायै तु शि[शो]र्गले।
असिचक्रगदेष्वासाश्चक्रं व्याघ्रनखान्यपि ॥ 287 ॥

---

कृणाष्टम्याः परं विश्वे=त्रयोदश्यामेव मुख्यतया क्रियत इत्याचारप्रदर्शन कृतम्
अन्यत्तु मान्दितः गुलिको रात्रावपि चिन्त्य इत्यर्थः।

---

1. M पाठः। T विक्रमोऽर्कः
2. M भवेत्
3. $T_1$ पुष्टायु
4. T आद्योऽन्त्येषु
   M आद्योरन्येषु दृगाणोऽजो
5. M पाठः। T मुहूर्तावतिभीरुदाः
6. $T_1$ तथा M बलान्न
7. T स्वपापोक्ते
8. M गवाश्व
9. M अयं श्लोकः नास्ति।

स्वामिप्रसादानुभवे सुवर्ण -
[1]रुप्याद्यम(त्रा)दिषु भोजनादौ ।
स्वारामजातस्य फलप्रसून -
[2]पर्णादिकस्याग्रयणे च तुल्यम् ।। 288 ।।

[इति] अन्नप्राशनविधिः ।। अथ चौलविधिः ।।

तृतीयेऽब्दे शिशो[3]र्गर्भाज्जन्मतो वाथ पञ्चमे ।
सप्तमे चोपनीत्या वा सह चौलं विधीयते ।। 289 ।।

[4]चतुर्थे नैव तत्कार्यमत्यन्तापदि षष्ठगे ।
प्रतिपन्मूलशुङ्मित्रघटसिंहालिनो धुताः ।। 290 ।।

[5]ज्येष्ठार्द्रे [6]पञ्चदश्य(र्कौ) [7]धनु(मे)षौ च [8]मध्यमौ ।
[9]ज्येष्ठार्द्रयोर्न कुर्वन्ति मध्येष्वन्येषु केचन ।। 291 ।।

सौम्याः षष्ठे भृगुर्मृत्यौ व्यये शुक्रबुधौ वरौ ।
कष्टश्चन्द्रोदयः [10]श(स्ता) [11]भानोर्विप्रे नृपेऽसृजः ।। 292 ।।

विट्छिद्रयोः शनेः स्त्रीणामिन्दोर्वारोदयांशकाः ।
विप्रस्य विहिते चापि भानुलग्ने च चौलकम् ।। 293 ।।

---

आग्रयणे प्रथमाशनं आग्रयणेऽयं विधिरिति योज्यम् । अन्नप्राशनम् । चौलविधिमाह- तृतीये इति । उपनीत्या वा सहेति चौलविधिः । षष्ठगे षष्ठवर्षे । अत्र गर्भादिति विधिरस्मिन् देशे [12]न परिगृह्यते, जन्मत एव परिग्रहः । अर्को द्वदशी । मध्येषु मध्यदेशेषु । [13]विप्रस्येत्याचारप्रदर्शनम् ।

---

1. T रुप्याद्यमन्त्रादिषु
2. $T_1$ वर्णादि
3. M पाठः । T गर्भा जातो वावथ पञ्चमे
4. M अस्याः पङ्क्ते स्थाने - "चतुर्थे नैष तत्कुर्यात् कदाचिदपि वत्सरे । षष्ठेऽत्यन्तापदि शिशोश्चौलमब्दे विधीयताम् ।।"
5. $T_1$ ज्येष्ठार्केन्द्रे for ज्येष्ठार्द्रे
6. T पञ्चदश्यर्कौ
7. T धनुर्मेषौ
8. $T_1$ मध्यतो
9. $T_1$ ज्येष्ठार्के
10. T शस्तो
11. M पाठः । T भानुर्विप्रे
12. $T_1$ "न" इति ग्रन्थपातः ।
13. $T_1$ विप्रस्योत्याचारी प्रदर्शना

न गोदानसमावृत्ती नादिमं भास्करे दिने ।
गोदानं मध्यमं तत्र नान्तिमेऽतीव दूषणम् ॥ 294 ॥

क्षौरवत् श्मश्रुकर्म स्यात् [1]बुधेन्द्वोर्वार एव वा ।
शावे वर्ज्याः सतां वारवर्गाः [2]शौ(क्रा) विशेषतः ॥ 295 ॥

अन्यशेषस्य चौलस्य मुहूर्तं न प्रतीक्षते ।
दुर्मुहूर्ते कृते क्षौरे सद्यः कुर्यात् पुनः शुभे ॥ 296 ॥

अष्टाहा(द्)द्वादशाहाद्वा मासाद्वा क्षौरमिष्यते ।
गोदानं [3]चौलवद्दिष्टं स्नानं गोदानवन्मतम् ॥ 297 ॥

तथापि कृष्णपक्षादौ केचित्स्नानं प्रकुर्वते ।
षोड[4]षाब्दत्वनियमो [5]गोदानस्य व्रतान्तरे ॥ 298 ॥

नाब्द[6](क्लृ)प्तिर्त च स्नाने तद्गोदा[7]नानुगं [8]परम् ।
यदास्तमयतः पूर्वमष्टमी वा चतुर्दशी ॥ 299 ॥

तदा[9]पीष्टे स्नानचौले न गोदाने व्रतादिकम् ।
समावृत्तिस्तु चौलोक्तनक्षत्रे मैत्रसंयुते ॥ 300 ॥

---

आदिमं चौलकर्म । अन्तिमं समावर्तनम् । न [10]चौलकं न गोदानसमावृत्ती इति पृथङ्निषेधात् चौलस्यानिष्ट[11](ता)धिक्यं सूचितम् । उपनीतेरनुक्तिश्चौलसादृश्या भावात् । विप्रादीनां भान्वादिवारोदयविधिरना[11a]द्ये क्षौरे इति केचिदाचार्या वदन्ति । श्मश्रुकर्म श्मश्रुक्षौरम् । तदपि विहितं शावे [12]क्षौरे । सद्यः - शब्दोदितमुख्यमध्याधमकालं प्रदर्शयति - अष्टाहादिति । दिष्टं = विहितम् । कृष्णपक्षादौ पञ्चम्यन्तात् प्रागित्यर्थः । गोदान[13](व्र)तादिकमित्यत्रादि-शब्देनोपनीतिर्गृहीता । कौषीतकानां स्नाने मित्रभं वर्ज्यम् ।

---

1. M पाठः । T बुधेन्दो
2. T शौक्रो
3. M चौलवद्दुष्टं द्र.व्या.
4. M षाब्दस्य
5. $T_1$ गोत्रदानस्य
6. T क्ल for क्लृ
7. $T_1$ नुगं for क्लृ
8. M मतम्
9. $T_1$ पिष्टे
10. $T_1$ चैलकं
11. का for ता T
11a. $T_1$ नात्ये
12. $T_1$ क्षेरे
13. T प्र for व्र

अर्यम[1]त्यार्यशूर्पाजे [2]मध्याह्ने तु यजुर्विदाम् ।
[3]अजेन्द्वार्यार्कमैत्रेषु वैष्णवे च मुनीरितम् ।। 301 ।।

सामगानां समावृतिर्ग्रहस्थित्यादिपूर्ववत् ।
[4]अन्यशेषतया [5]नानुवचने कालचिन्तनम् ।। 302 ।।

दिनमध्यत्रिभागोऽत्र मध्याह्न इति कीर्तितः ।
वर्ज्यं क्षौरसमावृत्योर्नक्षत्रमुपनीतिगम् ।। 303 ।।

नौ[6]वृषोत्सर्गयोः काम्येऽभिषेके [7]चौलवद्विधिः ।
अजे दुःखं हरौ शोकं व्यसनं वृश्चिके तथा ।। 304 ।।

चापे राजभयं कुम्भे मृतिरेणे महत्सुखम् ।
एकादश कुजो [8]मासा(न्) क्षपयेदायुषः शनिः ।। 305 ।।

पञ्चैकमर्कः क्षौरेऽ[9](च्छ)[10]रीशमासाद्विवर्धयेत् ।
मुनीषुलोकमासास्तु चन्द्रज्ञसुरपूजिताः ।। 306 ।।

---

तथानध्यायः कृष्णपक्षादिश्च । अनुवचनशब्देन समाप्ते व्रतकाले कर्तव्यं कर्मोदितम् । उपनीतिगं नक्षत्रमुपनयनकालनक्षत्रम् । नौवृषयोरुत्सर्ग उत्सर्जनम् । यदा धनधान्यादीनि नौवृषेषु च समारोप्य तैः सहगमनादिच्छति तदेत्यर्थः । अजो [11]मेषः । हरिः सिंहः । क्षुरकर्मणि पापानामुद[11]या[दा]युषः क्षयमानं सौम्यानामुदयादायुषे वृद्धिमानं च दर्शयति - एकादश कुजो मासानित्यादिना ।

---

1. M अर्थमित्रार्य
2. $T_1$ मध्याहनेति
3. M अजेन्द्वार्यार्कमित्रर्क्षहरिभेषु विधीयते
4. T अस्य । M पाठः
5. M पाठः । T नानुर्वचने
6. $T_1$ वृषेत्स
7. M क्षौर for चौल
8. T मासात् द्र.व्या.
9. T च्छं
10. $T_1$ M पाठः । T रंशमासा
11. $T_1$ मेहः for मेषः
12. T यानामायुषः for यादायुषः

अजाष्टकमविच्छिन्नं [1]चतुष्कं फल्गुनं क्षुरे।
सद्यो मृतिप्रदं [2](नृ)णां स्त्रीणां भाग्यकरौ [3](धु)तौ ॥ 307 ॥

[4]षष्ठीषु [5]तैलं [6](प)लमष्टमीषु
क्षुरक्रियाञ्चैव चतुर्दशीषु।
स्त्रीसेवनं नष्टकलासु पुंसा-
मा[7](युः क्ष)याग्र्यं मुनयो वदन्ति ॥ 308 ॥

अकाले क्षौरकरणादाम्नायाचारवर्जनात्।
परस्त्रीगम[8]नाच्चापि मृत्यु[9]र्वि(प्रान्) जिघांसति ॥ 309 ॥

रात्रौ न पृच्छेत् तत्कर्म यदि तस्योक्तिरीप्सिता।
आयुष्यकर्मशब्देन निर्दिशेत् तत्प्रगेऽपि च ॥ 310 ॥

करणं कर्णवेधं च [10]वपनं वस्त्रधारणम्।
प्रातः [11]पृष्ट यदि ब्रूयात्सचेलो जलमाविशेत् ॥ 311 ॥

---

अजाष्टकमिति। अष्टसु रोहिणीषु निरन्तरं क्षुरकर्म कृतं चेत् सद्यो मृति र्भवति, आशु भवतीत्यर्थः। तथा च चतुर्षु फल्गुनीषु चैवं पुरुषाणाम्। स्त्रीणां विच्छिन्नौ भाग्य[12](क)रौ धुतौ। [13]पलं=मांसम्। नष्टकला=अमावासी। [14]आम्नायो वेदः। तत्कर्म क्षुरकर्म। प्रगे प्रातः [15]का(ले) यदि ब्रूयादिति प्रतिवचने दोष इत्यर्थः।

---

1. $T_1$ "चतुष्कं" इति ग्रन्थपातः।
2. T नृणां
3. T धृतौ द्र.व्या.
4. M पाठः। T षष्ठेषु
5. $T_1$ तेलं
6. T वलं, $T_1$ तथा M बल
7. T मायुर्क्षयाग्र्यं
8. $T_1$ नाद्वापि
9. T र्विप्रां for र्विप्रान्
10. $T_1$ पवनं
11. $T_1$ पुष्ये
12. T तरौ द्र.मू.
13. $T_1$ फलं
14. $T_1$ आम्नयो
15. T काल

[1]कृ(षि)प्रश्नः प्रगे वर्ज्यः गृहगोपनसंश्रयः ।
प्रश्नश्च भोजनारम्भविषयं कीर्तनं [2]यथा ॥ 312 ॥

यियासोर्यानकथनं [3]चोर्वार्वर्पणवद्धुतम् ।
[4]शुक्ले चन्द्रे भवेत्कश्चित् लग्नादुपचयेऽङ्गपः ॥ 313 ॥

शुभकर्मेन्दु[5]रार्यो वा [6]ब(ली) केन्द्रत्रिकोणगः ।
गुरुः शुक्रः शशाङ्को वा स्वांशे वोपचये बली ॥ 314 ॥

कश्चिल्लाभे [7]तदीशेन [8]दृष्टौ लग्नेन्दुराशिपौ ।
मीनलग्नगतः [9]शुक्रो लाभेऽर्कः केन्द्रगो गुरुः ॥ 315 ॥

व्ययेऽर्कज्ञौ गुरुश्चन्द्रः केन्द्रे शुक्रो घटेऽङ्गगः ।
घटे सशुक्रे लग्नस्थे [10]ससूर्ये ज्ञे च रिःफगे ॥ 316 ॥

चन्द्र[11]त्रिकोणे केन्द्रे वा गुरौ योगः क्षुरे शुभः ।
गोऽजमीनाङ्गगः शुक्रो बुधो वार्को व्ययायगः ॥ 317 ॥

लग्नान्त्याये भृगु[12]ज्ञा(र्कौ) [13]केन्द्रे चन्द्रः शुभोऽङ्गगः ।
लाभारिभ्रातृगाः पापाः सौम्याः केन्द्रत्रिकोणगाः ॥ 318 ॥

एते योगा दश क्षौरे कीर्त्यारोग्यधनप्रदाः ।
त्रिजन्मप्रत्यरविपद्वधर्क्षाष्टमराशयः ॥ 319 ॥

---

[14](गृ)हगोपनसंश्रयः, वेश्मसञ्छादनविषयः प्रश्नः । भोजनारम्भविषयं कीर्तनं भोजनारम्भसाधनादिकथनं । कथने दोषः, न तु कर्मणि । [15]यियासो(र्गन्तु)मिच्छतो यानस्य कथने दोषः, न तु कर्मणि । उर्वार्वर्पणमुर्वारुफलानयनं, तदपि प्रातर्धुतम् ।

---

1. T कृषिःप्रश्नः
2. $T_1$ तथा
3. M पाठः । T चोर्वार्पणवद्धुतम् $T_1$ चोर्वार्पणबन्धुतम् द्र.व्या.
4. $T_1$ शुक्रे
5. $T_1$ रार्ये
6. T बलि
7. $T_1$ तदिशेन
8. $T_1$ दृष्टे
9. $T_1$ शुक्रौ
10. $T_1$ सूर्ये for ससूर्ये
11. $T_1$ त्रिकोण
12. T ज्ञार्का
13. $T_1$ केन्द्र
14. T ग्रह द्र.मू.
15. T यियासोर्क तु मिच्छतो

अङ्कभूमनु[1]षष्ठ्यन्त्या निन्दिता दन्तधावने ।
[2]त्रिजन्मार्यमरुद्रेन्द्रषट्पर्वार्केन्द्रभूरगे ॥ 320 ॥

वारेऽर्कारार्यशुक्राणां तैलं वर्ज्यमरोगिभिः ।
[3]प्रातः प्रातर्द्विजादीनां कर्तव्यं दन्तधावनम् ॥ 321 ॥

शुक्रवारेऽ[4]र्कवारे वा द्वयोर्वापि यथाविधि ।
रविस्तापं कान्तिं वितरति शशी भूमितसयो ॥ 322 ॥

मृतिं [5]लक्ष्मीं चान्द्रिः सुरपतिगुरुर्वित्तहरणम् ।
विपत्तिं दैत्यानां गुरुरखिल[6]भोगेष्वनुभवं
नृणां तैलाभ्यङ्गे सपदि कुरुते सूर्यतनयः ॥ 323 ॥

॥ [7]इति चौलविधिः ॥ अथोपनयनविधिः ॥

जन्मतः सप्तमे वर्षे कुमारस्याष्टमेऽपि वा ।
नवमे दशमे वापि कार्योपनयनक्रिया ॥ 324 ॥

आधानादष्टमे वर्षे नवमे दशमेऽपि वा ।
एकादशे च [8]कर्त(व्येत्ये)केऽन्ये जन्मपञ्चमे ॥ 325 ॥

गर्भतः पञ्चमेऽब्देऽपि तदिष्टं [9]भट्टशासने ।
गर्भसप्तमतः पूर्वं षष्ठे नापद्यपीरितम् ॥ 326 ॥

---

रुद्र आर्द्रा । इन्द्रो ज्येष्ठा । पुनरिन्द्रश्चतुर्दशी । भूः प्रतिपत् । यथाविधिशब्देन दन्तभक्षण[10]समये विहिता यथोक्तसाधन परिग्रहातवचनपूर्वमुखत्वादयः उक्ताः ।? चौलविधिः । अथोपनयनविधिः । जन्मत इति । आधानात् गर्भाधानकालात् । भट्टशासने भट्टाचार्यकृते शास्त्रे ।

---

1. M पाठः । T षष्ठान्त्या, $T_1$ षष्ठन्त्या
2. $T_1$ त्रिजन्मामरुद्रे
3. M प्रातर्व्रतं द्विजा
4. $T_1$ द्वाद्वोर्वापि for ऽर्कवारे वा द्वयोर्वापि
5. M लक्ष्मींश्चान्द्रिः
6. $T_1$ भोगेष्पनुभवतां
7. $T_1$ "इति" पदं नास्ति
8. T कर्तव्योऽप्येके M कर्तव्याप्येका
9. M भदशासने
10. $T_1$ सं यविहिता

**गर्भकालस्तु [1]होरास्थे श्लोके मृग्योऽयनादिके।**
**एकादशे तु राजन्यं वैश्यं द्वादशवत्सरे॥ 327॥**

**षोड[2]षाब्दादिद्द्वविंशाच्च [च]तुर्विंशादथः क्रमात्।**
**विहितेऽब्दे गुरौ[3A]द्व्याज्ञापञ्चमस्त्रीनवायगे॥ 328॥**

**जन्मकालेन्दुलग्नाभ्यां शुभदेष्वपरेष्वपि।**
**जन्म[4]भ्रातृसुहृच्छत्रु मृत्युद्वादशगो गुरुः॥ 329॥**

**व्याधिमारभयक्लेशविपत्पीडा[5]प्रदः शिशोः।**
**जन्मेन्दोरष्टमभ्रातृगतो जीवो मृतिप्रदः॥ 330॥**

---

मृग्य [6]अन्वेष्यः। "अयनक्षणवासरर्तवो मासोऽर्धं च [7]समाश्च भास्करात्" इत्यनेन गर्भकालो वेद्यः। गर्भस्य दशमे मासे पूर्णे प्रसूतिर्भवतीति शास्त्रतो लोकतश्च सिद्धम्। तत्र केषाञ्चित् नवमे मासे सूतिः। केषाञ्चिदेकादशे इति च शास्त्रदृष्टम्। तत्र मासा नाक्षत्रा स्युः। यथोक्तं "नाक्षत्रं गर्भिण्याश्चान्द्रा विद्यात्परेतपितृकस्य। सौरं [8]वा(र्धु)षिकानां वलान्नादौ व्रते च [9]सावनकम्।" इति। एतदस्मिन् श्लोके च सूचितम्। यथा अयनक्षणवासरर्तवो इत्यनेनाष्टौ सौरमासा उक्ता भवन्ति। तेषु नाक्षत्राश्चेन्न भवन्ति। एवमेकः प्रकारः। मासश्चेत्यन्यः। तत्र नव सौराः दश नाक्षत्राश्च भवन्ति। अर्धश्चेत्यपरः। तत्र सार्धा नवसौरा भवन्ति। चकारादेकादशस्य नाक्षत्रमासस्य शेषोऽपि सूचितः इति। अत्र दश मासाःसामान्येन गृह्यन्ते। वैद्याचार्यास्तु वर्षेण सार्धेन च सूतिः सम्भवतीति वदन्ति। तदप्यस्मिन् सूचितं समा[ः]चार्धं चेति। षोडषाब्दा इत्यादिना ब्राह्मणा[10]दीनामनतीतः कालः उक्तः। ततः परं न विधिरित्यर्थः। विहितेऽब्दे [11]इत्यत्रोपनीतिः कार्येति शेषः। जन्मभ्रातृ इत्यस्य विवरणं **जन्मेन्दोरि**ति।

---

1. M होरार्थे
2. $T_1$ पाब्दात्सद्विंशात् च
3. M पाठः ।T ह्याज्ञा
4. $T_1$ प्रातृ
5. $T_1$ व्रदः
6. $T_1$ अन्वेष्यम्
7. T समा च
8. T वाद्धुषि
9. $T_1$ साचनका
10. $T_1$ नामनतीतः
11. $T_1$ इत्यब्दोत्रोपनीतिः

---

१. अत्र दशमगोऽपि गुरुः गुरुबलप्रदः इति विशेषः

[1]जन्मवच्छ[2](त्रु)गो निन्द्यः शत्रुवद्व्ययगोऽपि च।
व्ययवत्सुखगोः कष्टो न्यूनदोषः क्रमात्परे ॥ 331 ॥

स्ववर्गगः पुष्टफलः पूर्ण[3]रश्मिः स्वतुङ्गगः।
अनिष्टस्थानसंस्थोऽपि न पीडां कुरुते गुरुः ॥ 332 ॥

तृतीयाष्टमतोऽन्यत्र संस्थितस्य बृहस्पतेः।
पीडाकृत्वनिषेधोऽयमन्येष्वप्यष्टमेतरे ॥ 333 ॥

राशौ स्थितेषु नो दोषः फलपूर्त्यादियोगिषु।
शास्त्रैकनिष्ठा अपरे मुख्याब्देऽष्टमगेष्वपि ॥ 334 ॥

दोषस्य निकृतिं शान्त्या भूयस्या मन्वते किल।
सम्प्रदायविदस्त्वेतन्न क्षमन्ते चिरन्तनाः ॥ 335 ॥

गर्भजन्माष्टमौ मुख्यौ सर्वेषां केवलोऽपि च।
सप्तमो मुख्य उदितः [4]क्वचिद्बृह्ये तु सामगे ॥ 336 ॥

अत्रापरेतिशब्देन [5]म(ध्य)देश्या विवक्षिताः।
[6]आचार्यस्याष्टमो राशिस्तद्वचन्द्रश्च निन्दितः ॥ 337 ॥

[7]नामादावष्टमेशस्य यदि [8]जन्मेशशत्रुता।
हिमद्युतेरष्टमे भे फलपुष्टिर्न वा भवेत् ॥ 338 ॥

---

न्यूनदोषाः क्रमात्परे इत्युक्तस्य तात्पर्यकथनम्। [9]शास्त्रैकनिष्ठाः शास्त्रमेव प्रमाणमिति वादिनः। न त्वाचारप्रधानास्ते इत्यर्थः। भूयस्या शान्त्या शान्तिक्रियया निष्कृतिं प्रायश्चित्तं मन्वते। किलेत्यनेन स्वस्यानभि[10]मतिः सूचिता। तत्राचारविरोधं दर्शयति-सम्प्रदाय[11]वि(दः) इति। केवलोऽपि च गर्भाष्टमात् प्राग्भागेऽपि इत्यर्थः। क्वचिदिति शाखाबाहुल्यात्। अपरेति शब्दः शास्त्रैकनिष्ठा इत्यत्रोदितः। हिमद्युतेरिति-चाष्टमराशेरपवादः।

---

1. $T_1$ जन्मप
2. T च्छत्रगो
3. $T_1$ रिश्मिः
4. $T_1$ क्वचिद्बृह्येषु सामगे
5. T मध्यं
6. $T_1$ पाठः। T आचार्यास्याष्टमो
7. $T_1$ नामावष्टमेशस्य
8. M जन्मेप
9. $T_1$ शास्त्रेकनिष्ठाः
10. $T_1$ मन्तिः
11. T विधिः द्र.मू.

द्विभागो कर्किणः शस्ता [1]परेऽपि बलवत्तराः ?।
तुलाविंशावरान्त्यस्थाः सौम्यापि शशिनो [2]वराः ?॥ 339 ॥

रोगो मूलमनध्यायश्चन्द्रः कर्क्यंशगोऽशुभः ।
[3]मन्वेकार्कशिवश्रो[3a](णा)चतुष्कं कर्मगः शशी ॥ 340 ॥

[4]धर्मे [5]मन्दोऽष्टमे शुक्रो मध्यश्चन्द्रोदयोऽशुभः ।
चतुर्दशाब्दादधिके चतुर्दश्यामपीष्यते ॥ 341 ॥

प्रतिपत्सिंहकरणे द्वादश्यादौ शुभोदये ।
श्रोणाचतुष्केऽपि तथा स(द्)दृष्टे कर्मगे विधौ ॥ 342 ॥

धर्मे [6]पूर्णबले मन्दे भृगुजे च तथाष्टमे ।
[A][7]इच्छन्त्यु[8]पन(यं) सन्तः स्वर्क्षाजोच्चान्यसंस्थिते ॥ 343 ॥

अपवादवियुक्तस्य लग्नं नेष्टं निशाकृतः ।
मीनकन्यानृयुग्मेषु [9]शुभेक्षायुतिसम्भवे ॥ 344 ॥

[10]शुभांशगस्य पूर्णेन्दोर्लग्नं नातीवगर्हितम् ।
जन्मेन्दो धर्मगाः सूर्यकुजसर्पाश्च [11]मध्य(माः) ॥ 345 ॥

मुहूर्तलग्नाद्धर्मस्था नियमेन विवर्जिताः ।
मुहूर्तलग्नाज्जन्मेन्दोरविशेषेण धर्मगः ॥ 346 ॥

---

मन्वादीनां मध्यमत्वं स्यात् । तेषां ग्राह्यत्वे विषयभेदं चन्द्रोदयस्य निषेधे विषयभेदं चाह-चतुर्दशाब्दादिति । द्वादश्यादौ द्वादश्यां एकादश्यां चेत्यर्थः । धर्मे मन्दोऽष्टमे शुक्र इत्यत्र मुहूर्तलग्नाज्जन्मेन्दोश्च धर्मगो मन्दो मध्यः । मुहूर्तलग्नात् जन्मेन्दोश्चाष्टमे [12]शु(क्रश)च मध्यमः इत्युक्तमिति प्रदर्शयति मुहूर्तलग्नादिति ।

---

1. $T_1$ परे विहलवत्तराः
2. $T_1$ पराः
3. $T_1$ मन्वेकाकशिव, M मन्वेर्कार्क
3a. T श्रोणां चतुष्कं
4. $T_1$ धर्मो
5. M मन्दाष्टमे
6. T पूर्णफले, M पाठः ।
7. $T_1$ इच्छुत्युप
8. T त्युपनयनं
9. M पाठः । T शुभर्क्षा
10. $T_1$ शुभाङ्गस्य
11. T मध्यगाः
12. $T_1$ पाठः । T शुक्रे च

---

A. अत्र वृत्तभङ्गभिया "इच्छन्त्युपनयनं" इत्यत्र "इच्छंत्युपनयं" इति कृतम् ।

**मन्दोऽष्टमगः शुक्रश्च मध्यत्वेनेह [1]कीर्तितौ ।**
**[2]शुक्रस्त्वेको गुरु[3]भृगुबुधा मन्त्रिहीनौ सितज्ञौ**
**[4]शुक्रचार्या विगुरुभृगवश्चन्द्रजीवौ कविज्ञौ ।**
**शुक्रचार्यो रविशशिबुधाः सर्व एव [5]शशुक्रौ**
**जन्मादिस्थाः शुभ[6]मुपनये दद्युरन्यत्र चापि ॥ 347 ॥**
**सिंह[7]कुम्भौ न शस्येते शुभेक्षायुत्यसम्भवे ।**
**उपनीत्युक्तयोगानामभावेनैव मेष भम् ॥ 348 ॥**
**अष्टमस्थो बुधो नेष्टः परिपूर्णबलोऽपि च ।**
**चन्द्रे पापैर्युते दृष्टे पापवर्गस्थितेऽपि [8]वा ॥ 349 ॥**
**यदि कुर्या[द]द्विजन्मत्वं स कुमारः क्षयी भवेत् ।**
**चन्द्रेऽर्कभागगे [9]शस्त्री स्वभागस्थे निषिद्धकृत् ॥ 350 ॥**
**भौमांशकस्थे पतितो [10]दुर्वृत्तो मन्द[11]भागगे ।**
**मेषोक्षसिंहा [12]अहन्या(न्ध्य)प्रदा निशि नृयुक्स्त्रियौ ॥ 351 ॥**
**कुलीरश्चान्धता प्राह्णे कोर्प्यश्वौ श्रोत्रनाशकौ ।**
**प्राह्णे तौलिमृगौ तद्वत् पादनाशकरौ पुनः ॥ 352 ॥**
**सन्ध्याचतुष्के [13]कुम्भान्त्यौ सर्वमङ्गलकर्मसु ।**
**उद्वाहे तु [A]तुजोऽर्थस्य दम्पत्योश्च हतिः क्रमात् ॥ 353 ॥**

---

अन्यत्र चापि उपनयनकालादन्यत्रापि जन्मादिस्थाः एते शुभं [14]दद्युरित्यर्थः । तत्र कैश्चिदिष्टकालग्रहचारनिरूपणे जन्मनि चन्द्रः शुभ इत्युक्तम् । [15]तृतीयपञ्चमव्ययेषु बुधस्य शुभत्वमनुक्तं च । उद्वाहेति । [16]आन्ध्यप्रद श्रोत्रनाशकपादनाशकरेषु राशियोगेषु क्रमाद्विवाहे [17]पुत्रनाशार्थनाशदम्पतिनाशा भवन्ति ।

---

1. $T_1$ कीर्तिते
2. $T_1$ शुक्ल
3. $T_1$ भृगुसुतबुधा
4. $T_1$ शुक्रज्ञार्यापि गुरु
5. $T_1$ ज्ञशुक्रे
6. M मुपनयने स्युरन्यत्र
7. $T_1$ सिंहकुम्भे
8. $T_1$ च for वा
9. $T_1$ गस्त्री
10. M दुर्वृत्तौ
11. $T_1$ बार्गगे
12. T अहध्यप्रदा द्र.व्या
13. T कुम्भात्या
14. $T_1$ दस्यु
15. $T_1$ तृतीयपञ्चमेषु for तृतीयपञ्चव्ययेषु
16. $T_1$ पाठः । T आध्य
17. $T_1$ नाशा for पुत्रनाशा

---

A. अत्र व्याख्यानुसारेण अपत्यार्थकपदमिति स्पष्टम् । प्रकरणानुगुणं षष्ठीकारकं अपत्यार्थकपदं चित्त्यम् ।

विद्यां नाशयतः [1]प्राप्तां मन्दभौमौ द्वितीयगौ ।
अन्योन्यमथवा दृष्टौ द्वादशस्थौ तु बन्धदौ ।। 354 ।।

व्ययस्थं [2]रविमर्कोऽत्थः स्वदृष्ट्या यदि पश्यति ।
शिष्यविद्या हरेत् प्राणी विबलो रोगदः शिशोः ।। 355 ।।

केन्द्रत्रिकोणगो जीवो ज्ञोऽङ्गे भानुसितौ व्यये ।
पापास्त्र्यायारिगाः केन्द्रे शुभस्त्र्यर्थाङ्गगः सितः ।। 356 ।।

केन्द्रे गुरुर्भवे भानुः शुभदृष्टः शशी बली ।
गोऽन्त्ये शुक्रे गुरौ केन्द्रे त्रिकोणेऽङ्गे स्वभे शुभः ।। 357 ।।

प्राह्ण घटादि[3]षट्केऽङ्गे केन्द्रे चन्द्रः शुभान्वितः ।
लाभेऽर्केऽङ्गे बुधे शुक्रे खगे चन्द्रे शुभांशगे ।। 358 ।।

---

**विद्यां** नाशयतः, प्राप्तां लब्धां विद्याकाले न नश्येदित्यर्थः । अत्र द्वयोर्युगपत्स्थितिः कल्प्यते । यतो बार्हस्पत्ये "वैवर्ण्यतः कुजोर्थस्थः" इति । द्वितीये भास्करिर्हानिमिति च पृथक् फल[4]मुक्तवा पुनः "विद्यां प्राप्तां [5]विनश्येतां मन्दभौसौ द्वितीयगौ । [6]अन्योन्यमथवा दृष्टौ द्वादशस्थौ तु [7]बन्धदौ" ।। इति चोक्तम् । [8]अन्योन्यमित्यत्र चैकस्य द्वितीये स्थितिः कल्प्यते । स्वदृष्ट्या समग्र[9]दृ(ष्ट्ये)त्यर्थः । केन्द्रत्रिकोणग इत्यादिभिः सार्धैश्चतुभिः श्लोकैर्दश योगा उक्ताः । तत्र [10]गोऽन्त्ये शुक्रे इत्यत्र वृषे मीने वा शुक्रः । केन्द्रे त्रिकोणे स्वभे गुरुः, स्वभशब्देनोच्चमपि विवक्षितम् । लग्ने शुभ इति योगः । तथा च बृहस्पति "भृगौ मीने वृषे वापि जीवे केन्द्रत्रिकोणगे । कर्किचाप[11]झषस्थेऽस्मिन् योगः सौम्यग्रहोदये ।।" इति । घटादिषु षट्स्वेकस्मित् लग्ने ।

---

1. T प्राप्तं
2. $T_1$ रविमर्कोस्य
3. $T_1$ षट्को ङ्गे
4. $T_1$ मुक्त्वा पुनः इति ग्रन्थपातः
5. $T_1$ विनत्येतां
6. $T_1$ तन्योन्य
7. $T_1$ बन्धभौ
8. $T_1$ अन्योमित्यत्र
9. T दृष्येत्यर्थः
10. $T_1$ शोन्त्ये
11. $T_1$ त्सषस्थे

मेषेऽर्के [1]वृषभे शुक्रे कर्किणीन्दौ यमोदये ।
वीणोदयोऽतितुङ्गेऽर्के शुक्रे [2]कर्क्यादिगे विधौ ॥ 359 ॥

मृगेऽर्के [3](खा)न्त्यगे सौम्ये जीवोऽच्छो वा झषाङ्गगः ।
योगा दशो[4]पनीतस्य दीर्घमायुर्ददत्यमी ।
उपनीतः शुभे काले दीर्घायुः स्यान्न संशयः ॥ 360 ॥

[5]अन[फा] सुन[फा]योगे शुभयोगे पुरोदिते ।
आयुर्योगेऽन्यशास्त्रोक्ते कार्योपनयनक्रिया ॥ 361 ॥

**[6]इति उपनयनविधिः ॥ अथोपाकरणविधिः ॥**

अथोपाकरणाख्यं च कर्म कुर्यात् स्फुटं वटोः ।
तत्तु प्रविश्य [7]केदारा(न्) प्रतिपद्य समन्ततः ॥ 362 ॥

---

यमोदये मिथुनोदये । वीणोदयेऽतितुङ्गेऽर्के इत्यत्र मिथुने लग्ने अर्केऽत्युसच्चस्थे, चन्द्रे कर्कटादिगते योगः स्यात् । तथा च बृहस्पतिः "मीनमेष-कुलीराणामन्त्याद्याद्यत्रिभागगाः । [8]क्रमात् शुक्रार्कचन्द्राः स्युः शुभो [9]योगो यमोदये ॥" इति । "मृगेऽर्के खान्त्यगे सौम्ये जीवोऽच्छो वा झषाङ्गगः ।" इत्यनेन द्वौयोगावुक्तौ । खान्त्यगे दशमे व्यये वा । सौम्ये मृगेऽर्के [10]मीन(स्थ)जीवोद(ये) एकः । मृगेऽर्के [11]दशमे द्वादशे वा सौम्ये मीनस्थशुक्रोदये [12]अन्यः । उपनयनविधिः । अथोपाकरणविधिः । **अथेति** । स्फुटं वटोः अवश्यं कार्यमित्यर्थः । केदा[13](रान्) शाल्यादीनामाकरप्रदे[14](शान्) ।

---

1. $T_1$ वृषभः
2. $T_1$ कर्क्यदिगे
3. T वान्त्यगे द्र.व्या.
4. $T_1$ वनीतस्य
5. T अनभा सुनभा
6. $T_1$ तथा M इदं वाक्यं नास्ति ।
7. T केदारात्
8. $T_1$ क्रमा
9. $T_1$ यो for योगो
10. T मीनस्य जीवोययो
11. $T_1$ द्वादशमे for दशमे द्वादशे
12. $T_1$ "अन्यः" इति ग्रन्थपातः ।
13. T रां for रान्
14. T शां for शान्

वीक्षमाणस्य पक्कानामोषधीनां विलोकनम् ।
प्रायो यदा तदा विष्णोर्नक्षत्रस्य च सङ्गमे ॥ 363 ॥

[1]हस्तपञ्चमिसंयोगे श्रावणे मासि वा भवेत् ।
आषाढे श्रावणे प्रोष्ठ[2]पदे वा मासि हस्तभे ॥ 364 ॥

पूर्णायां वा गृह्यवशात् प्राप्ते [3]मासि [4]मलेतरे ।
विद्यारम्भः सुरगुरुसितज्ञे[5](ष्व) भीष्टार्थदायी
कर्तुश्चायुश्चिरमपि [6]करोत्यंशुमान् मध्यमोऽत्र ।
नीहारांशौ भवति [7]ज[ड]ता [8]पञ्चता भूमिपुत्रे
छायासूनावपि च मुनयः [9]कीर्तयन्त्येवमाद्याः ॥ 365 ॥
[इति] उ[पा]करणविधिः ॥ अथ विद्यारम्भविधिः ॥

मौहूर्तिकैः सम्प्रदिष्टे काले वेदान् समभ्यसेत् ।
वसुद्विमूलशुङ्ग्मीनस्थिरा नेष्टाश्चराः परैः ॥ 366 ॥

[10]अनध्यायपरत्वाच्च नवमीमपि केचन ।
विद्यारम्भे प्रशंसन्ति [11]वागी(शार्चा)पुरस्सरम् ॥ 367 ॥

---

समन्ततः प्रतिपद्य वीक्षमाणस्य [12]केदारेषु परितो गत्वा पक्कानां शाल्याद्योषधीनां विलोकनं यदा प्रायो भवति, प्राय इत्यनेन स्वल्पभागस्य चेदपक्कत्वात् न दुष्यतीति [13]प्रदर्शितम् । तस्मिन् काले श्रवणनक्षत्रयोगे तत्कर्म कार्यं भवति । अथवा श्रावणे मासि हस्तपञ्चम्योर्योगे कार्यम् । एषः काल आश्वलायनगृह्योकतः । अन्येषामाह **आषाढे** इति । मलेतरे मासीति विधिः सर्वेषां समानः । अधिमाससंसर्पांहस्पतयो मलाख्याः । [14]उपाकरणम् । अथ विद्यारम्भविधिः । **मौहूर्तिकैरिति** । **मौहूर्तिकैः सम्प्रदिष्टे काले** इति च वचनमुपाकृतिसमये कृतः पाठस्तदङ्गभूत एव । न तु तेनारम्भ-क्रिया भवतीति ज्ञापनार्थम् ।

---

1. M हस्ते तु पञ्चमीयुक्ते श्रावणे
2. M पाठः । T पादः
3. $T_1$ मासे
4. M पाठः । T मलेकरे द्र.व्या.
5. T ज्ञेष्टयभी
6. $T_1$ तरौत्यंशुमान्
7. T जलता
8. $T_1$ वञ्चना
9. $T_1$ पाठः । T कीर्तन्त्येव
10. M "अनध्याय" इत्यारभ्य ततः पञ्चमपङ्क्तिगात "मध्यमम्" पर्यन्तं नास्ति ।
11. T वागीश्यचापुर
12. $T_1$ 'केदारेषु" इत्यारभ्य "गत्वा" पर्यन्तं ग्रन्थपातः
13. $T_1$ प्रदर्शीतम्
14. $T_1$ उपकरणम् ।

[1]विलि(ख्य) रसनाग्रे तु वाग्बीजस्तुतिपूर्वकः ।
स्वर्णाद्येन तु विद्याया आरम्भः शिष्टसम्मतः ।। 368 ।।

तिष्याजेन्दूत्तरार्द्रैकषड्विश्वार्कादि मध्यमम् ।
बृहस्पतिवसिष्ठाभ्यां प्रतिपत् शस्यते श्रुतौ ।। 369 ।।

त्रयोदशी सप्तमी च [2]ताभ्यामेव विगर्हिते[3] ।
वारवर्गोदया वर्ज्या दर्शनं चार्किभूजयोः ।। 370 ।।

मध्यमा रविशीतांशोः शे[4]षाणामुत्तमाः स्मृताः ।
पापास्तु पञ्चमे वर्ज्याः सौम्यस्तु बलसंयुतः ।। 371 ।।

लग्ने च पञ्चमे चापि प्रशस्तोऽत्र तु कर्मणि ।
बुधस्य मौढ्यं जीवाच्छमौढ्यतोऽतीव [5]निन्दितम् ।। 372 ।।

---

तिष्यादिनक्षत्रतिथिजातं मध्यमम् । [6]एकादयस्तिथयः, तासु मतभेदमाह - **बृहस्पतिवसिष्ठाभ्यामिति** ।

---

1. T विलिख्ये
2. T, नाभ्यामेव
3. M "विगर्हिते" इत्यनन्तरं "वारवर्गोदया" इत्यस्मात् पूर्वं मातृकायां श्लोकत्रयं एवं लिखितमस्ति।
   चन्द्रे बुधांशगे सौम्यैर्दृष्टे ते च न गर्हिते। वेदपाठसमायोगान्नवमी कैश्चिदिष्यते ।।
   वागीश्वरीं समभ्यर्च्य गणेशञ्च प्रसाध्य च। लिपिं विलिख्य जिह्वाग्रे स्वर्णाद्येन प्रजप्य च ।।
   कृत्वाशीर्द्विजमुख्यैस्तु यथाशक्ति प्रतोषितैः । तदाज्ञप्तस्य विद्याया आरम्भः शिष्टसम्मतः ।।
4. T, शेषणा
5. T, निन्दितः
6. T, एकादशस्थितयः

चापायु[1]धाश्वशकुनद्विप[2](वा)द्ययोग-
सामुद्र[3]सामयिककुक्कुटकूटकल्पा[4](न्) ।
वस्वर्कदस्रभुजगेन्दुकराम्बु[5]पाम्बा-
शीतांशुमित्रहरिभेन्दुषु [6]पूर्वमिच्छेत् ॥ 373 ॥

जौतिःशास्त्रे पौष्ण[7]दस्रौ वसुद्वि-
[8]स्वात्यो मैत्रं [9]मूलमार्द्रत्र्यजार्काः ।
कृत्स्ने [10]शिक्षोपक्रमेऽजत्रितिष्यः ।
श्रोणास्वातीरेवती चोत्तराश्च ॥ 374 ॥

चित्रेऽदितित्वाष्ट्रसमीरमित्रा
वैद्येऽर्क[11]वस्व(श्व्य)निलेन्दुमित्राः ।
[12]वाद्ये च हस्तं नटने [13]मृगार्यौ
गाने पुनर्व[14]स्वनिलौ प्रशस्तौ ॥ 375 ॥

---

चापादीनां द्वादशादीनां[15]मार(म्भं) वस्वादिषु द्वादशर्क्षेषु क्रमेण कुर्यात् । वसुभे चापारम्भः । अर्कभे [16]खड्गाद्यायुधारम्भः । अश्वशास्त्र-शकुनशास्त्र-गजशास्त्र-वाद्यशास्त्र-योगशास्त्र-सामुद्रिकशास्त्रेषु क्रमात् दस्र[17]भुज[ग]र्क्षेन्दु भहस्तवारुणा[18]दित[यः] शस्ताः । सामयिके सामयाख्ये शीतांशुभं, कुक्कुटशास्त्रे मित्रभं, कूटविद्यायां कैतवविद्यायां श्रवणभं, कल्पेष्विन्दुभंम् । अम्बा मातृभम् । अत्र बृहस्पतिः "मैत्रं कुक्कुटशास्त्रे [19]स्यादायुर्वेदे गजाश्वयोः । वारुणं योगशास्त्रेषु समयेष्विन्दुभं शुभम् ॥ वैष्णवं सुप्रशंसन्ति मायाचौरादिकैतवे । वासवः स्याद्धनुर्वेदे चायुर्वेदे विशेषतः । भेरीतालादिशास्त्रेषु नाट्ये सामुद्रिकाह्वये । हस्तस्तिष्यस्तथादित्यः सङ्गीते सौम्यमेव च ॥ सार्पं शाकुनकज्ञाने वेदे रोहिण्यही शुभौ ।" इत्यादि ।

---

1. $T_1$ पाठः ।T धाश्चशकुन
2. T पाद्य द्र.व्या.
3. $T_1$ सामियिकुकुकुट
4. T त् for न्
5. M पाठः ।T पाद्मा
6. T पूर्वमुच्छेत् । M पूर्वमुच्छत् । $T_1$ पाठः
7. $T_1$ दस्यौ
8. $T_1$ स्वान्त्यौ
9. $T_1$ मूलगार्द्राद्वित्र्यजार्काः
10. $T_1$ शिक्षोचक्रमे
11. T वस्वश्यनि
12. M पाठः । T वेदे द्र.व्या.
13. $T_1$ मृगेर्ये
14. $T_1$ स्वनिले
15. T मारम्भात्
16. $T_1$ खङ्गा
17. T भुजर्क्षेन्दु द्र.मू.
18. T दित for दितयः द्र.मू.
19. $T_1$ स्यादायुर्वेदं

विष्णुतन्त्रे चरा रुद्र तन्त्रे क्षिप्रास्तु तारकाः ।
विष्णुतन्त्रे सुधायोगा गजाश्वा[1](रो)हणे ध्रुवाः ॥ 376 ॥

[2]चरा हरित्रीवाय्वम्बाक्षिप्रास्तिष्याश्वि[3]हस्तभम् ।
द्विश्लोक्या विश्वमित्रेति सुधायोगा उदाहृताः ॥ 377 ॥

उत्तरत्रितयञ्चैव रोहिणी च ध्रुवा मताः ।
स्मृतौ विश्वत्रिपौष्णार्यहस्तपञ्चेन्द्व[4]जाश्विनः ॥ 378 ॥

शब्दशास्त्रेऽदितिद्व्यन्त्यवस्वजेन्द्वर्कमित्रभाः ।
नीतौ शतादितिद्व्यर्कस्वाती हर्यश्व्यजोत्तराः ॥ 379 ॥

उपनीतावि[5]वप्रोक्ता विद्यारम्भे ग्रहस्थितिः ।
शुभदा वारयोगा य उदितास्तेषु [6]वारपे ॥ 380 ॥

उदयस्थे स्वहोरायां विद्याग्रहणमुत्तमम् ।
प्रोक्तेषु भेषु सर्वेषु शुभवारे शुभांशके ॥ 381 ॥

शुभग्रहदृशायुक्ते शुभयुक्ते शुभग्रहे ।
विशेषाद्बुधवर्गेषु बुधदृष्टे बुधोदये ॥ 382 ॥

बुधवारे च होरायां शस्तं ज्ञो नास्तगो यदि ।
हस्ते ज्ञांशे [7]शशिज्ञार्का बुधवारे बुधोदये ॥ 383 ॥

विद्वारे ज्ञांशके ज्ञेन्दू हस्ते हस्तोदयेऽ[8]ङ्गगौ ।
स्ववारेऽत्युच्चगोऽङ्गस्थश्चान्द्रिः कन्याद्यगे खौ ॥ 384 ॥

---

द्विश्लोक्या श्लोकद्वयेन विश्वामित्राग्नयः साद्रिपञ्चम्यः इत्यादिकेन । होराः कालहोराः । हस्ते ज्ञांशे इत्यादिभि[9]र(र्धर्चैः) सारस्वतयोगा उक्ताः । हस्तोदये कन्यायां हस्ततारोदये । अङ्गगौ ज्ञांशे हस्तोदयसमीपगौ । कैश्चित् ज्ञांशमतीत्य हस्तोदयः प्रदर्शितः ।

---

1. T रेहणे
2. M वराहवित्रिवाय्वम्बा
3. $T_1$ हस्तभाः
4. $T_1$ जाश्विनम्
5. $T_1$ विष for विव
6. $T_1$ वारवे
7. M पाठः । T शशिज्ञार्कैः
8. M अङ्गगे
9. T रर्ध्वर्च्चैः

स्ववारेऽर्को [1]बुधो वेन्दुर्हस्ते ज्ञांशे विलग्नगः ।
केन्द्रे [A2]शुभो [3]गुरुज्ञों वा द्विभे वर्गोत्तमांशगः ॥ 385 ॥

लग्नेऽत्युच्चगतो भानुर्ज्ञसितौ वृषमीनगौ ।
सिंहेऽङ्के ज्ञांशगावारे बुधगुर्वो [4]बुधेन्दुना ? ॥ 385 ॥

स्ववारेषु स्वहोरायां लग्नेऽत्युच्चगता ग्रहाः ।
एतेऽष्टौ ज्ञानदा योगा बुधैः सारस्वताः स्मृताः ॥ 387 ॥

विद्याग्रहणविधिः ॥ अथ शस्त्रबन्धविधिः ॥
शस्त्रबन्धे तु शुङ्मित्रवस्वश्विहरिभं खेः ।
ईशादितो भनवकं रव्याक्रान्तगतागतम् ॥ 388 ॥

[5](धु)तं मूलं च शुभदं [6]कुजार्क्यर्कार्यवेधनम् ।
प्रातिकूल्यस्थितिं चैषां परिहृत्य शुभे दिने ॥ 389 ॥

कर्तव्यं शस्त्रपूजादिपूर्वकं विद्वदाज्ञया ।
सप्तसंख्येशकालानां चक्रे ज्ञेया खगव्यथा ? ॥ 390 ॥

---

यत्र ग्रहाणं विकल्पः सम्भवति [7]तत्रैक एव योग इति कृत्वाष्टाविति वचनम् । विद्या । एवं त्रैवर्णिकानां सामान्यकर्माण्यभि[8](धा)येदानीं शूद्रस्य शस्त्रबन्धकर्म विधीयते । शस्त्रबन्ध इति । [9]रवे(री)शादितो [10]भनवकं रविस्थितनक्षत्रादेकादशनक्षत्रादिकमृच्छनवकं रविणा युक्तं मुक्तं च यियासितं चेत् धुतम् । मूलभस्य केषुचित् [11]कर्म[स्व]तिष्टत्वा[त्] तच्छङ्कानिवृत्यर्थं अत्र शुभदं मूलमित्युक्तम् । वेधः शलाकाख्यः । प्रतिकूलस्थितिर्जन्माष्टमादिषु स्थितिः ।

---

1. $T_1$ बुधे
2. M शुक्रो
3. $T_1$ गुरुज्ञो
4. M बुधेन्द्विनौ
5. T धूतं द्र.व्या.
6. $T_1$ कुजार्क्यार्यवेधनम्
7. $T_1$ तत्रै च
8. T धेयादानी
9. T खे राशादितो द्र.मू.
10. $T_1$ ज्ञभनवकं for भनवकं
11. T कर्मसनिष्टत्वा तच्छङ्का

---

A. अत्र "शुक्रो" इति M पाठोऽपि योग्यो वा ।

लग्नाद्वित्ताम्बुगाः पापाः वर्ज्या इत्युदितं पुरा।
रात्र्याः परत्रिभागेऽपि शास्त्रे बन्धो मतो बुधैः ॥ 391 ॥

[1]कुम्भालिमेषसिंहास्तु वर्ज्या अत्रेति केचन।
कर्किस्त्रीघटकोदण्ड[2]मीनान्त्यर्धे रविर्धुतः ॥ 392 ॥

लग्ने [3]सूर्योऽतिनिन्द्यः स्याद्द्विःफगश्चा[4]तिनिन्दितः।
गर्भहोमेषु सर्वेषु नाम्नि कर्णस्य वेधने ॥ 393 ॥

चौले [5]वटौकृते स्नाने गोदानादिव्रतेषु च।
विवाहे गेहकरणे प्रतिष्ठाकलशादिषु ॥ 394 ॥

तिग्मांशोरुदयो [6]वर्ज्यो यथा शस्त्रस्य बन्धने।
[इति] शस्त्रबन्धविधिः ॥ अथ गेहविधिः ॥

मृगाच्चरस्थिरौ सार्कौ प्राच्यादिगृहसौख्यदौ।
नार्कभात्पञ्चमे राशौ भूचक्रस्थे सृजेद्गृहम् ॥ 395 ॥

यत्र राशौ[7](ग्र)हः सौम्यस्तस्मिन् भूचक्रसंस्थिते।
स्थापयेत् प्रथमं स्तम्भं शुभार्थी तद्वदंशके ॥ 396 ॥

चरेन्दूदय[8]शुक्पापशुक्लप्रतिपदोऽशुभाः।
ग्राम्यराश्युदयः शस्तः शस्ता [9]षष्ठाष्टगाः शुभाः ॥ 397 ॥

---

इत्युदितं पुरा पुरातनैरेवमुदितमित्यर्थः। शस्त्रबन्धः। [10]अ(थ) गेहविधिः। **मृगादिति**। चरस्थिरौ सार्कौ चरस्थिर[11]राश्यभिधौ मासावित्यर्थः। **नार्कभादिति** - रविस्थितराशेः पञ्चमराशिरभीष्टभूमिगतराशिचक्रे यत्र भवति तत्र गृहं न कुर्यात्। तद्वदंशके ग्रहस्थितांशके।

---

1. $T_1$ कुम्भादिमेष
2. M पाठः। T मानान्त्यर्धो
3. $T_1$ सूर्यादिनिन्द्यः
4. M श्चापिनिन्दिताः
5. M पाठः। T पदूकृतौ, $T_1$ पटूकृतौ
6. M वर्ज्यो इति ग्रन्थपातः।
7. T गृहा
8. M पाठः। T शुक्रचाप
9. $T_1$ पाठः। T षष्ठाष्टमगाः
10. T अह
11. $T_1$ राश्यभिदौ

अन्यदिश्यधमा विष्णु[1]शतास्विपितरो?पमाः ।
मध्यमा स्वदिशि श्रेष्ठाः सर्वास्तारा विचित्रकाः ॥ 398 ॥

पत्तने त्वाष्ट्रदस्रान्त्य[2]बु(ध्न्यः) सेनानिवेशने ।
मघाश्रोणाजविश्वार्य[3]मित्रा धान्य[4]गृहे शुभाः ॥ 399 ॥

विश्व[5](शू)र्प[6]मघेन्द्विन्द्र भरणी [7]भगकृत्तिकाः ।
पाकगेहेऽर्कभं भुक्तिगेहे बह्निगृहेऽग्निभम् ॥ 400 ॥

शय्यागेहे [8]भगस्वात्यौ [9]चुल्यां तु भरणी शुभा ।
शतमित्राम्बुबुध्निद्विमूलार्द्रा जलभाजने ॥ 401 ॥

मघामित्रेन्द्वजा[10](श्वन्त्य)तिष्यादित्युत्तराः शुभाः ।
प्रासादग्रामनगरसभादेवालयादिषु ॥ 402 ॥

उलूखलगृहं [11]पाकगृहं पशुगृहं [12]खलम् ।
कन्याद्युभयरशिस्थे सूर्ये कुर्यात्समृद्धये ॥ 403 ॥

चरध्रुवर्क्षयोः कार्यः कवाट उभयोदये ।
वेधो वर्ज्यो [13](गृ)हारम्भे तत्प्रवेशे च गोपने ॥ 404 ॥

कूपादिखनने पूगनालिकेरादि[14]वा(प)ने[15] ।
राजपीडा च हानिश्च सूर्यवेधफलं मतम् ॥ 405 ॥

स्थानक्षयो मृतिर्दाहं कुजवेधफलं मतम् ।
वंशक्षयो वित्तहानि र्भूतबाधा ज्ञवेधने ॥ 406 ॥

---

अन्यदिशि=[16]तन्नक्ष-[त्रा]वस्थितदिशोऽन्यदिशि । स्वदिशि तन्नक्षत्रावस्थितदिशि तत्तद्दिगाश्रितगेहे इत्यर्थः । चरध्रुवर्क्षयोः नक्षत्रयोः ।

---

1. M शताश्व
2. T बुध्निः
3. M मित्रधान्य
4. $T_1$ शुभे ग्रहाः for गृहे शुभाः
5. T सूर्प
6. $T_1$ मघेन्द्र
7. M भाग्य
8. $T_1$ पाठः । T भगः स्वान्त्यौ
9. $T_1$ चुर्त्थां तु
10. T जाश्वान्त्यातिष्टा
11. $T_1$ पाकगृहं इति ग्रथपातः ।
12. $T_1$ बलं for खलम्
13. T ग्रहारम्भे
14. T वा वने
15. "वापने" इत्यनन्तरं राजपीडा इत्यस्मात्पूर्वं M मातृकायां विशेषतस्तु सर्वत्र शुभवेधस्तु कैश्चन ।" इति पङ्क्तिमध्ये विद्यते ।
16. T तन्नक्षवस्थित

[1]आचारभ्रंशनं विप्रात् पीडनं चेड्यवेधने।
स्थाना[न्] निवृत्तिः स्त्रीहानिर्भृगुवेधे फलं [2]भवेत्॥ 407॥

चोरनीचारिभिः पीडा [3]वेधे मन्दासुरोद्भवे।
[4]वेधतामागतो दोषः शुभयोगेन नश्यति॥ 408॥

शुक्राचार्य[5]कुजाः कुजार्यभृगुजा जीवासुरेड्यासृजो
मन्देनेन्दु[6]सुता खीन्दुगुरवः [7]सौम्येन्दुमन्दाः क्रमात्।
[8]इन्द्वर्कीन्दुसुतास्त्रयस्त्रय इमे लग्नाम्बरास्ताश्रिताः
कुर्यु[9]र्ग्रामगृहादिकार्यकरणे वृद्धिं सुरश्रीसमाम्॥ 409॥

रोहिण्यामुदये शशाङ्कतनये [10]लग्नाम्बरे वा गुरौ
पापेष्वात्मजमृत्युहानिरहिते पूर्णाख्ययुक्ते विधौ।
योगोऽयंकिल पुर्णकुम्भगदि(त)स्तस्मिन् [11]गृहं स्थापितं
आयुःश्री[12]धनपुत्रदारसहितं पूर्णं सहस्राब्दकम्॥ 410॥

अर्यमर्क्षे गुरोवारि सिंहे लग्ने गृहं [13]सृजेत्।
यमविष्णुमघान्त्यार्धे [14]कोष्ठं कर्क्यलिगे सृजेत्॥ 411॥

[15]कर्क्यंशगे गुरौ सेन्दुशुक्रे वेश्म सृजेत्स्थिरम्।
स्तम्भः क्रियोपरि स्थाप्यः पुष्ये सेन्दौ सितोङ्गगे॥ 412॥

---

मन्दासुरोद्भवे मन्दवेधे राहुवेधे च। योगे पापदर्शनादि न [16](नश)यति। दिग्बल-योगवदिति कल्प्यम्। आत्मजमृत्युहानिरहिते स्थाने इति शेषः। क्रियोपरि भूचक्रस्थितमेषराशौ

---

1. $T_1$ आचार्य
2. M मतम् for भवेत्
3. $T_1$ वेध
4. M इयं पङ्क्ति मातृकायां नास्ति।
5. M पाठः। T कुजाङ्कुजार्य भृगुजाः
6. $T_1$ सिता
7. $T_1$ तथा M सौर्येन्दु
8. M चन्द्रार्को त्थशशाङ्कजास्त्रय
9. $T_1$ र्भ्राम
10. M धर्माम्बरे
11. M पाठः। T गृहस्थोपितम्
12. T न for धन
13. M स्रजेत्
14. $T_1$ कोष्टं
15. $T_1$ कर्क्यंगगे
16. T दुष्यति द्र.मू.

[1]चतुर्भिरुदितैर्योगैः कृत्वा वेश्म न नश्यति ।
मृगस्य पञ्चमांशेऽर्के कृत्वा गेहं तदा विशेत् ॥ 413 ॥
आजे पौष्णेऽथवा कृष्णचतुर्दश्या समन्विते ।
गृहार्थं संगृहीतानां दारुणां न [2]घुणाद्भयम् ॥ 414 ॥
रोहिण्यां छेदयेद्दारु [3]गृहोपक्रमसाधनम् ।
केन्द्रे गुरौ सितेङ्गस्थे तृणाद्यैश्छादयेद्गृहम् ॥ 415 ॥
स्तम्भं विधूदये कुर्याद्वेण्वारोहान् बुधोदये ।
भृगूदये तु [4]स(ञ्छा)द्यं वज्राग्निस्तं न बाधते ॥ 416 ॥
विधौ पुष्यस्थिते लग्ने तत्काले कृतवेश्मकम् .
तल्लग्ने [5]प्रविशेदेवं धनपुत्रविवर्धनम् ॥ 417 ॥
रोहिणीमूलमैत्रार्कमघारेवतिसंयुते ।
चन्द्रे [6]व्याघ्रहरिविष्टिवर्जिते कुजवासरे ॥ 418 ॥
चान्द्रे वा गुरुलग्ने वा चुल्लिं तत्रैव कारयेत् ।
[7]कृत्तिकायां कुजे वारे कुजलग्नेऽथवा निशि ॥ 419 ॥
अग्निसन्धुक्षणं कुर्यात्तस्य श्रीरतुला भवेत् ।
[8]मन्दसूर्यारलग्ने तु स्वांशके यदि [9]संस्थि(तः) ।
उलूखलं कृतं यत्तु तण्डुलस्य विवर्धनम् ॥ 420 ॥

---

[10]विधौ पुष्यस्थिते लग्ने वेश्मकुर्यादिति शेषः । तत्रैव यथोक्तं कालकृते "यथोक्तकालप्रविशेच्चन्द्रे लग्ने च वेश्मनि । अग्निसन्धुक्षणं चुल्यां स्वांशके यदि संस्थितः ॥" मन्दादिषु यो लग्नगतः स इत्यर्थः । तण्डुलस्य विवर्धनम् तस्मिन्निति शेषः ।

---

1. M इयं पङ्क्ति नास्ति ।
2. M पाठः । T घृणां
3. $T_1$ गृहोवक्रमसादनम्
4. T सच्छाद्यं
5. M प्रविशेदेव
6. M व्याघ्रश्च मृगराट्वर्जिते for व्याघ्रहरिविष्टिवर्जिते
7. M कार्तिकायां
8. $T_1$ मन्दे
9. T संस्थिता । M संस्थितै द्र.व्या.
10. $T_1$ विधो

बुधवारे तु [1]मै(त्र)र्क्षे श्रीपक्षे जलसम्पदि ।
चरराश्युदये काले मुसलं कारयेद्बुधः ॥ 421 ॥

[1a]अवघातं च तद्योगे [2](मा)ङ्गल्यं तत्र निर्दिशेत् ।
गृहस्य जन्मनक्षत्रे न दातव्यं सुभावहम् ॥ 422 ॥

सङ्ग्रहे [3]सुप्रशस्तं स्यान्मृत्युभं तत्र वर्जयेत् ।
[4]कृत्तिकास्थे खौ केचित् भरीस्थे [5]तु केचन ॥ 423 ॥

उभयस्थे खावन्ये न [6]वाञ्छन्ति गृहक्रियाम् ।
कर्किस्थे रेवतीस्थे च खौ नेष्टा गृहक्रिया ॥ 424 ॥

[7]षष्टेरूर्ध्ववयस्कानां पुंसामपि च नेष्यते ।
अन्तर्वर्त्न्यां च भार्यायां नेचछन्ति किल तत्क्रियाम् ॥ 425 ॥

सर्पाग्निशस्त्रवन्तं द्रेक्काणं वीक्षते [8]रविर्बलवान् ।
भौमो वा मध्याह्ने विद्याद्भयमग्निसम्भूतम् ॥ 426 ॥

---

श्रीपक्षे शुक्लपक्षे । अवघातं च तद्योगे कुर्यादिति शेषः । तत्र [9]तस्मिन् स्थाने । गृहस्य जन्मनक्षत्रे यस्मिन् नक्षत्रे गृहं सृष्टं स्थापितं तस्मिन् नक्षत्रे । गृहस्य गृहस्य पर्यन्ततः सिद्धमिति केचित् । तन्न युक्तं, जन्मनक्षत्र इति वचनात् । अतः प्रतिमास्थापनकालनक्षत्रवत् गृह्यस्थापनकालनक्षत्रं ग्राह्यम् । शुभावहं दर्पणादि । [10]षष्टेरूर्ध्ववयस्कानां पुरुषाणां [11](गृ)हस्थापनं नेष्टम् । पुंसामनेनैव स्त्रीणामित्युक्तं भवति । मध्याह्ने [12]लग्नाद्दशमस्थाने स्थितो रविर्भौमो वा । द्रेक्काणं लग्नस्थम् ।

---

1. T मैत्रेर्क्षे
1a. $T_1$ अवधातं
2. T मङ्गल्यं
3. M तु प्रशस्तं
4. $T_1$ कृत्तिकाज्ञे
5. M पाठः । T खापरे
6. M पाठः ।T वाञ्छति
7. $T_1$ ,M पाठः । T षष्टेष्टरुर्ध्व द्र.व्या.
8. M रपि बलवात्
9. $T_1$ तस्मिन् इति ग्रन्थपातः ।
10. $T_1$ षष्टेरुर्ध
11. T ग्रह
12. $T_1$ लग्नाहदशम

मेषादिमः सपरशुः स चापौ नृयुगन्तिमौ ।
[1]सिंहपाथोनयोर्मध्यौ [2]तथा कलशमध्यमः ॥ 427 ॥

मृगतौल्यन्तिमौ [3]चापपूर्वञ्चाप्यथ वह्नियुक् ।
[4]मीनान्त्यः कुम्भमध्यश्च [5]वृषाद्यश्चाथ सर्पयुक् ।
[6]कर्कटान्त्यश्च मीनान्त्यो वृश्चिकस्यादिमावपि ॥ 428 ॥

आस्थानादिप्रवेशे च निर्गत्यानुप्रवेशने ।
[7]कवाटस्थापने चैव गृहोपक्रमवद्विधिः ॥ 429 ॥

## [8]इति गृहविधिः ॥ अथ गृहप्रवेशविधिः ॥

पुरो दक्षिणगे शुक्रे कर्क्रिस्त्रीघटगे रवौ ।
रोग[9]सं(ज्ञे) चरे राशौ द्वन्द्वे वा न विशेत् गृहम् ॥ 430 ॥

---

[10]सर्पाग्निशस्त्रयुतद्रेक्काणानाह - **मेषादिम** इति । आस्थानादि आस्थानमण्डपादि । [11](गृ)हविधिः ॥ अथ गृहप्रवेशविधिः । **पुरो दक्षिणगे** इति । पुरुषो यां दिशमभिमुखीकृत्य प्रविशति, तद्दिङ्मुखस्य पुरुषस्याग्रतः शुक्रो नेष्टः । तथा दक्षिण भागगतश्च नेष्टः । तस्य स्थितिस्तु त्रिधा कल्प्यते । [12]पूर्वस्यां पश्चिमस्यां वा यत्र शुक्रो दृश्यते तत्र [13]स्थितः स भवति । अथवा उदयस्थः पूर्वदिशि, चतुर्थस्थ उत्तरस्यां सप्तमस्थः पश्चिमदिशि, दशमस्थो दक्षिणस्यामिति । अथवा कृत्तिकामघामित्रश्रविष्ठादिषु [14]दिग्भेषु यत्र स्थितस्तस्यां दिशि स भवतीति । तथा च श्रीपतिः - "उदयति दिशि यस्यां याति यत्र [15](भ्रम)द्वा, विचरति च भचक्रे येषु दिग्वारभेषु । त्रिविधमिह सितस्य प्रोच्यते सम्मुखत्वं मुनिभिरुदित एव त्यज्यते तत्र यत्नात् ॥" इति । दक्षिणगतः शुभः शुक्र इति च कैश्चिदुक्तम् । अतः पक्षद्वये विषयभेदो निरूप्यः ।

---

1. M पाठः । T सिंहपार्थोत
2. M आद्यश्च धनुषस्तथा
3. M चापि सचापश्चाथ
4. $T_1$ मीनान्तं
5. $T_1$ वृषाद्यश्वाथ
6. $T_1$ कर्कटान्त्यश्व, M कर्कटान्त्यौ च
7. $T_1$ कपाट
8. $T_1$ "इति" पदं नास्ति
9. T संज्ञो
10. $T_1$ सर्पानिशस्त्र
11. T ग्रह
12. $T_1$ पूर्वस्यात्
13. $T_1$ स्थितिः
14. $T_1$ दिग्भ्येषु
15. T भूमाद्वा

[1]शुक्रे [2]क्षे(त्रो)च्चगे विप्रे भृगुगोत्रेथवा गृहे।
गच्छेदात्ययिगे कार्ये ततः शुक्रो न दोषदः ॥ 431 ॥
[3]नि(र्ग)मान्नवमे मासि दिने वा न विशेद्गृहम्।
उक्तं [4]तुल्यमिदं सर्वं नवत्वं कर्तृगेहयोः ॥ 432 ॥
ज्योतिर्गण[5]मुर(गा)न्तं विचरति धनिष्ठादि भार्गवो यावत्।
[6]तावदुदीच्यां प्रच्यां यात्रां न तु कारयेत् प्राज्ञः ॥ 433 ॥
पित्र्यादिश्रवणान्तं विचरति शुक्रो यदा तदा प्राज्ञः।
दक्षिणपश्चिम भागे यात्रां न तु कारयेत्सततम् ॥ 434 ॥

## [इति] गृहप्रवेशविधिः ॥ अथ मङ्गलाङ्कुरम्

नवमे सप्तमे वा प्राक् पञ्चमे मङ्गलाङ्कुरम्।
निशारम्भेह्नि वा कुर्यात् काले रोगोदिते शुभे ॥ 435 ॥
[इति] मङ्गलाङ्कुरम् ॥

---

अथवात्र पदच्छेदो निरूप्यः। विप्रे भृगुगोत्रेऽथवा [7](गृ)हे इति। भृगुगोत्रजातं कञ्चित् ब्राह्मणं अग्रे कृत्वा तस्य पृष्ठतश्च[8]र(न्) प्रविशेदित्यर्थः। निर्गमो [9]निर्गमकालः। [10]ग्रामाद्ग्रामान्तरप्रवेशादौ यात्रायाः प्रवेशाङ्गत्वाद्यात्रायां केषाञ्चिदभिमतं शुक्रदोषमाह। **ज्योतिर्गण**[11][मिति]। अस्मिन् पक्षे हि कदाचित् वामे शुक्रो निषिध्यते। कदाचिद्दक्षिणे। अतः [12]पु(रो) दक्षिणग इत्यत्र च पदच्छेदः। कदाचिद्दक्षिण इति प्रकल्प्यते। गृहप्रवेश। प्रतिष्ठादेर्मङ्गलाङ्कुरपूर्वकत्वात् तद्विधमाह - **नवमे इति**। मङ्गलानां [13]बीजानां मङ्गलाङ्कुरम्। निशारम्भे निशादौ अह्नि च विधिर्भवति। तथा च बृहस्पतिः - "नित्यावेव कर्तव्यं सुमुहूर्ते शुभोदये। सायाह्ने शुभदृष्टेऽश्वेदिति ?। दिवानिशोर्विकल्पोऽत्र इति च मङ्गलाङ्कुरम्।

---

1. T₁ तथा M मातृकायां "शुक्रे" इत्यारभ्य इतः तृतीयपङ्क्तिगान "नविशेद्गृहम् ॥" इत्यन्तं नास्ति।
2. T क्षेत्रेच्चगे
3. T निर्गमान्नवमे द्र.मू.
4. M सर्वमिदं तुल्यं नवत्वे
5. T मुरगन्तं
6. T₁ "तावदुदीच्यां" इत्यारभ्य ततः द्वितीयपङ्क्तिगात "तदा प्राज्ञः" पर्यन्तं मातृकायां नास्ति।
7. T ग्रहे
8. T श्चरं
9. T₁ अहिर्गमकालः
10. T₁ ग्रामां
11. T माह
12. T पुरु द्र.मू.
13. T₁ बीजीनां

## अथ देवप्रतिष्ठाविधिः ॥

तिष्योत्त[1]रा(श्च) श्रवणाजहस्ताः
पौष्णानुराधामरुतोऽश्विनी च ।
क्रमात् [2]प्रतिष्ठासु हिता द्विजादेः
सर्वस्य पौष्णेन्द्वदिति[3]प्रजेशाः ॥ 436 ॥

त्र्युत्तराजेन्द्वदित्यार्यपौष्णार्कस्वातयः शुभाः ।
प्रतिष्ठाया[4]मिति प्राह वसिष्ठोन्ये मघामपि ॥ 437 ॥

अर्केन्द्वोः शुभदौ वारौ [5]राज्ञां [प्रोक्तौ च] [6]भास्क(रेः) ।
विशां बुधस्य विप्रणां [7]गुरु(भा)र्गवयोर्दिने ॥ 438 ॥

शस्ता भूमनुरुद्रर्तुतिथयो ब्राह्मादिषु ।
रिक्तापर्वाष्टमीभ्योऽन्याः सर्वेषां शुभदा मताः ॥ 439 ॥

मध्यमौ त्वाष्ट्रवसुभौ षष्ठी [8]चार्कोदयोऽशुभः ।
षष्ठान्त्यौ जन्मलग्नाभ्यां वर्ज्यौ तद्वदधो[9]मुखः ॥ 440 ॥

वर्ज्यश्चापश्चरो नेष्टाः शुभदृष्टास्तु मध्यमाः ।
नेष्टो [10]लग्नाम्बुगश्चन्द्रो व्यये शस्तौ सितेन्दुजौ ॥ 441 ॥

व्ययधर्माष्टधीसंस्थाः पापा हन्युर्यथाक्रमम् ।
आचार्यं चान्नदातारं शिल्पिनं प्रतिमामपि ॥ 442 ॥

[11]विष्णोस्तु श्रावणो मासो राका श्रवणवा[12]रु(णौ) ।
शस्ताः स्युः स्थापने भौमवार[13]वर्गोदयास्तथा ॥ 443 ॥

---

अथ देवप्रतिष्ठाविधिः । तिष्योत्तराश्चेति । श्रवणाजहस्ताः क्षत्रियस्य देवप्रतिष्ठायां हिताः । अश्विनी शूद्रस्य हिता ।

---

1. T राश्व द्र.व्या.
2. M प्रतिष्ठा विहिताः
3. $T_1$ प्रजेशम्
4. $T_1$ मि प्राह
5. M राज्ञः
6. T भास्करे
7. T गुरुर्भार्गव
8. M पाठः । T चार्कोदयः शुभः
9. M मुखम्
10. $T_1$ लग्नाम्बुश्चन्द्रो
11. M इयं पङ्क्ति मातृकायां नास्ति ।
12. T वारुणा
13. M पाठः । T वर्गोदयस्त था

आर्द्रा हरस्य शस्ता स्या(द्)दुर्गायास्त्वाष्ट्रकृत्तिके ।
नवमी [A1]शशिवारश्च तद्वर्गश्च शुभाः स्मृताः ॥ 444 ॥

[2]चित्रा ज्येष्ठा च मन्वब्धि[3]तिथी वारोदयौ रवेः ।
गणेशस्य [4B]तु भा षष्ठ्यग्नेयौ गुहस्य तु ॥ 445 ॥

आद्येष्टकाष्टबन्धे च सङ्कोचे स्थापनेऽपि च ।
[5]प्रतिष्ठावद्विधिः प्रोक्तः प्रतिष्ठायां जलस्य च ॥ 446 ॥

रवे[6]रुद(ग)तौ पूर्वपक्षे सायाहनवर्जिते ।
[7]अह्नि चैताः क्रियाः सर्वाश्चौलोपनयनादिवत् ॥ 447 ॥

[8]रात्रेः परत्रिभागेऽपि चैताश्चौ[9]लादयो न तु ।
लग्नाधिपः शुभो वापि बली केन्द्रत्रिकेणगः ॥ 448 ॥

युग्मर्क्षगः शशी [10]लग्नाच्छुभांशे शुभकृद्बली ।
चन्द्रात् त्रिकोणकेन्द्रस्थः शुभो बलसमन्वितः ॥ 449 ॥

शुक्रेन्दू [11]वृषगौ सौम्य[12]वर्गगौ लग्नपो [13]भवे ।
मीनोदये मृगे [14]भानौ त्र्यंशगेऽच्छे बली विधुः ॥ 450 ॥

मीनेऽर्के वृषलग्नेऽच्छे शुभाः केन्द्रत्रिकोणगाः ।
[15]मेषगेऽर्के भवे शुक्रे केन्द्रे जीवे विधुर्बली ॥ 451 ॥

---

आद्येष्टका प्रतिष्ठाङ्गा । स्नपनमभिषेकः । जलस्य प्रतिष्ठा जलाशयस्थापना ।

---

1. $T_1$ पाठः । T शनि
2. $T_1$ चित्र
3. $T_1$ तिथि
4. M शुभा
5. M प्रतिवद्विधिः
6. T रुदर्गतौ । $T_1$ दर्गतौ
7. M पाठः । T अग्नि
8. $T_1$ रात्रे
9. M पाठः । T चालोदयो
10. $T_1$ लग्नाः शुभांशे
11. $T_1$ वृषभौ
12. $T_1$ भागौ for वर्गगौ
13. $T_1$ भवो
14. $T_1$ भागौ
15. $T_1$ मेषने

---

A. अत्र मदीयाभिप्रायेण "शशि" इति $T_1$ पाठः स्वीकृत ।
B. अत्र चतुर्थीवाचकः शब्दश्चिन्त्यः । "गणेशस्य चतुर्थी स्यात्" इति भवेद्वा ।

सिंहलग्ने भवे भानौ खे बुधे लग्नगे [1]भृगौ ।
[2]शुक्रे [3]वृषोदये व्युग्रे निधने [4](ग्र)हवर्जिते ।। 452 ।।

स्थिरराशिगतौ चन्द्रलग्नौ बलसमन्वितौ ।
एकादश प्रतिष्ठायाममी योगाः प्रकीर्तिताः ।। 453 ।।

## [इति] प्रतिष्ठाविधिः ।। अथ यात्राविधिः ।।

ऋक्षेष्वशोकचित्रेषु स्वदिक्षु गमनं वरम् ।
सार्वद्वारं वसुश्रो[5]णापौष्णार्यार्काश्विमित्रभम् ।। 454 ।।

प्राच्यादौ हरिविश्वेन्द्राः प्रोष्ठपादद्वयाश्विनः ।
पुष्याजा[6]वर्यमार्कर्क्षौ वर्ज्याः परिघपङ्क्तिता ।। 455 ।।

परिघो नाम दण्डोऽस्ति वायव्याग्नेयकोणगः ।
तदतिक्रमणं [7]कष्टं नराणां [8]न तु गोस्त्रियोः ।। 456 ।।

शक्रैकाङ्घ्रज भाग्यन्तु प्राच्यादौ [9]मृतिदं क्रमात् ।
शूर्पोत्तराग्न्यजेष्वाद्य[10]महोरात्रस्य वर्जयेत् ।। 457 ।।

मूलार्द्रेन्द्रा[11]हिषु त्याज्यो द्वितीयो वायुपुष्ययोः ।
[12]सार्काश्विनोस्तृतीयांशः [13]पौष्णमैत्रशशाङ्कके ।। 458 ।।

---

व्युग्र इति वृषोदयविशेषणम् । कुज[श]निवारयोर्ज्येष्ठाकृत्तिकार्द्रसु च रिक्तायां श्रावणमासे च न दृश्यते प्रतिष्ठा । अथ यात्रविधिः । ऋक्षेष्विति । स्वदिक्षु नक्षत्रदिक्षु । [14]परि(घा)तिक्रमणं तु पूर्वोत्तरदिङ्नक्षत्रेषु पश्चिमयाम्यदिग्गतस्य भवति । तथादक्षिणपश्चिमनक्षत्रेषु सौम्यपूर्वदिग्गतस्य च भवति ।

---

1. $T_1$ भृगो
2. $T_1$ पाठः ।T शुक्रो
3. $T_1$ वृषोदयेष्वुग्रे
4. T गृह
5. M श्रोण
6. $T_1$ वर्यामा
7. M नास्ति
8. $T_1$ न त
9. M मृतिभं
10. $T_1$ मनोरात्रस्य
11. $T_1$ दिषु for हिषु
12. M पाठः । T सार्काश्विने
13. M त्वाष्ट्रमैत्रेन्दुभेषु च
14. M परिमातिक्रमणं

[1]सचित्रभे तुरीयांशस्त्रिपूर्वभरणीमघे ।
पञ्चमोऽन्येषु षष्ठांशः शेषास्त्वंशाः शुभप्रदाः ॥ **459** ॥

सौम्ये गत्वा [2]शिवादित्योः [3]समध्युष्यार्यभे व्रजेत् ।
धनसिध्यै [4]ह(रौ) गत्वा स्वसीम्नि न वसेत् पुनः ॥ **460** ॥

मैत्रे गत्वैन्द्रभेऽध्युष्य मूले [5]यायाद्धनाप्तये ।
स्वसीम्न्येवं ततो गच्छेद् धनारोग्यादिसिद्धये ॥ **461** ॥

नाध्युष्य वेन्दु[6]विष्णवार्यहस्तेषु त्वरया व्रजेत् ।
अग्रहेष्वेव गन्तव्यं नक्षत्रेषु प्रयत्नतः ॥ **462** ॥

प्रागादिषु कुजः सोममन्दौ ज्ञार्यौ च भृग्विनौ ।
सुखदा दुःखदाः सूर्यगुरुशुक्रेन्दवः क्रमात् ॥ **463** ॥

वारौ दक्षिणयो[7]र्नोपचयदिङ्नाथयो र्धुतौ ।
शुक्रज्ञवारौ न [8]शुभौ गोस्त्रियोर्दूरतो गतौ ॥ **464** ॥

तारा वह्निमघामित्रवस्वाद्याः सप्त सप्त च ।
प्राच्यादिषु क्रमात्कल्प्या कोणेष्वग्न्यादिकेष्वपि ॥ **465** ॥

नन्दा भद्रा जया पूर्णा प्राच्यादौ तिथयः शुभाः ।
पृष्ठगः स्थिरवीणाधोमुखप्रतिपदोऽशुभाः ॥ **466** ॥

---

[9]अ(ध्युष्य) गृहाद्बहिः स्वदेशे कुत्रचिदुषित्वेत्यर्थः । स्वसीम्नि स्वदेशे । प्रागादिषु कुज इत्यादयो वारप्रदर्शकाः । दक्षिणयोः दक्षिणभागगतयो उपचयदिङ्नाथयोः उपचय[10]गतग्रहगन्तव्यदिङ्नाथयोर्न धुताविति वचनम् । प्राप्तिनिषेधं प्रति शुभावित्यर्थः । अत्र बृहस्पतिः "प्रदक्षिणं दिगीशस्य यात्रा यमसिताद्विना । लग्नोपचययातानां यात्रा [11](वा)रेऽतिशोभना ।" इति ।

---

1. M सपौष्णेषु चतुर्थांशः
2. M शिवादिभ्यो
3. $T_1$ समभ्युष्य
4. T हरो
5. $T_1$ पाठः । T यावायाद्धनाप्तये
6. T विष्णवार्य
7. M र्नापचय
8. $T_1$ शुभो
9. T अध्यूक्षः द्र.मू.
10. $T_1$ ग्रहगन्तव्य for गतग्रहगत्ववयं
11. T वरेतिऽशोभना

[1]शुभस्त्रिलाभगो जीवो मध्यश्च भ्रातृमृत्युगः ।
शुक्रज्ञौ मृत्युगौ शस्तौ कुजसूर्यौ च कर्मगौ ॥ 467 ॥

नेष्टः कृष्णेन्दुरस्ता(ङ्ग)[2]सुखेष्वङ्गे च षष्ठपः ।
इष्टं [3]दत्वाम्बुगश्चन्द्रः पुनराशुमृतिप्रदः ॥ 468 ॥

दुर्वलोऽरिमृतिस्थो वा दिङ्नाथो [4]गन्तुराधिकृत् ।
लग्नतो जन्मतो द्वित्रिषड्[5]लाभे गतिरुत्तमा ॥ 469 ॥

[6]लग्नोपचययातस्य पापस्यापि शुभं भवेत् ।
वारस्तथा दिगीशस्य तत्प्रदक्षिणयायिनाम् ॥ 470 ॥

षष्ठोऽटमो द्वादशकश्च राशिः
सर्वेषु कार्येष्वपि गर्हणीयः ।
क्षौरे विवाहे च तथा प्रयाणे
षष्ठं विदुः कर्तुरतीव शोभनम् ॥ 471 ॥

जन्मलग्नौ तदीशौ च पातालास्तगतौ धुतौ ।
एते खमध्यलग्नस्था गमनेऽभीष्टसिद्धिदाः ॥ 472 ॥

कृत्तिकायां दधि प्राश्य रोहिण्यां कृसरं तथा ।
[7]मृगशीर्षे मृगमांसमार्द्रायां रुधिरं स्पृशेत् ॥ 473 ॥

पुनर्वसौ पटोलानि पुष्ये तु घृतपायसम् ।
आश्लेषे तैत्तिरं मासं मघायां शालिभोजनम् ॥ 474 ॥

---

दूरं योजनाधिकम् । इष्टं यात्राफलं । द्वित्रिष[8](ड्ला)भे राशौ । कृसरं [9]तिलमिश्रान्नम् । मृगमांसं मृगमांसम् । तित्तिरिर्विहगः ।

---

1. M शुक्रस्त्रिलाभ
2. T सुखेष्वङ्गौ
3. $T_1$ दत्वां युगश्चन्द्रः
4. M गन्तुमाधिकृत्
5. M ला भो
6. "लग्नोपचययातस्य तत्प्रदक्षिणयायिनाम् ॥" अयं श्लोकः M मातृकाया उद्धृतः । T तथा $T_1$ मातृकायां नास्ति ।
7. $T_1$ मृ-गशीर्ष
8. T षड्लाभे
9. $T_1$ तिलं मिश्रन्तम् ।

अपूपं पूर्वफल्गुन्यामुत्तरे तु कपित्थकम् ।
हस्ते तु [1]यावकं प्राश्य [2]चित्रा(यां) चित्रभोजनम् ।। 475 ।।

स्वात्यामामलकं प्राश्य विशाखायां पलान्नकम् ।
[3]कुल(त्थं) [4]चानुराधायां ज्येष्ठायां बीजपुरकम् ।। 476 ।।

मूले तु मूलकं प्राश्य चाषाढे [A]चष्कुली तथा ।
[5]वैश्वर्क्षे शालिसक्थूञ्च [6]श्रवणे सक्तुपायसम् ।। 477 ।।

यवान्नं मधुसंयुक्तं भक्षयेद्वसुदैवते ।
मधुशर्करसंयुक्तं वारुणे च इति स्मृतम् ।। 478 ।।

अजैकपादनक्षत्रे वाराहं मांसभक्षणम् ।
क्षीरं चोत्तर[7]भद्रायां रेवत्यां [8]गु(ड)संयुतम् ।। 479 ।।

मुग्दान्नमश्विनक्षत्रे भरण्यां शाकपायसम्
नक्षत्रभक्षणं पूर्वं पश्चात्तु तिथिभक्षणम् ।। 480 ।।

अर्कपत्रमथ तण्डुलोदकं
घृतं यवान्नं च हविष्यभोजनम् ।
[9]सौवर्णमम्भो मधुबीजपूर्वकं
तोयं च गोमूत्रमथो यवञ्च ।। 481 ।।

---

कपित्थकं कपित्थवृक्षफलम् । यावाकं यवान्नम् । चित्रभोजनं=बहुविधैर्द्रव्यैः [10]सम्पादितम् । पलान्नं मांसमिश्रान्नम् । शल्कुली मोदकभेदः । गुलसंयुतमन्नं प्रस्तुतं क्षीरं वा । अर्क[11]पत्रं अर्काख्यस्य द्रुमस्य पत्रम् । तण्डुलोदकं तण्डुलक्षालनजलम् । हविष्यभोजनं होमशेषादिदेवतार्थं सम्पादितस्य हविः संज्ञा । सौवर्णमम्भः सुवर्णमिश्रितजलम् ।

---

1. $T_1$ यापकं, T यवकं द्र.व्या.
2. T चित्रायाः
3. T कुलस्थं
4. M पाठः । T चानुराधायां
5. $T_1$ वैश्यर्क्षे
6. M पाठः । T श्रावणे
7. M पाठः । T भद्रासु
8. T गुल
9. M सौपर्ण
10. $T_1$ सम्पादिकम्
11. $T_1$ पत्रन्

---

A. अत्र मूले तु चष्कुली, व्याख्याने शल्कुली इति च लभ्यते । अतः शुद्धः पाठश्चिन्त्यः ।

सपायसञ्चैव [1]गु(डं) क्षतोत्थं
मुग्दान्नकञ्च प्रथमाद्यनुक्रमात् ।
अभक्ष्य[2]संस्पृष्टिरलब्धकानां
[3]स्मृतिश्च सिद्धिं [4]गमने ददाति ॥ 482 ॥

सूर्यवारे घृतं [5]प्राश्य सोमवारे पयस्तथा ।
कोद्रवं मङ्गले वारे बुधवारे तिलानपि ॥ 483 ॥

गुरुवारे दधि [6]प्राश्य शुक्रवारे यवानपि ।
माषान् भुक्त्वा [7]शनेर्वारे ततो गन्तुर्न दोषदाः ॥ 484 ॥

प्रागादिभक्षणं वक्ष्ये घृतं चैव तिलं पयः ।
[8]गु(डं) च भक्षयित्वैव गन्तव्यं हि क्रमेण तु ॥ 485 ॥

[9]खास्ताम्बूदयगे सूर्ये क्रमात्प्राच्यादिषु व्रजेत् ।
याति येन मुहूर्तेन [10]गृहा(त्ते)नैव मानवः ॥ 486 ॥

धनुःसहस्रमर्धं वा षष्टिं वा दूरतो व्रजेत् ।
पञ्चरात्रात्परं गन्ता बहिर्वा सम्प्रयाति चेत् ।
पुनरप्यालयं गत्वा शुभे गच्छेन्मुहूर्तके ॥ 487 ॥

आद्ये विरुद्धे शकुने प्रतीक्ष्य
प्राणान् नृपः पञ्च च षट् च यायात् ।
अष्टौ द्वितीयेऽथ पुनस्तृतीये ।
गतिं न कुर्यात् पुरुषः शुभार्थी ॥ 488 ॥

---

[11]क्षतो(त्थं) रुधिरम् । [12]प्राणा(न्) प्रतीक्ष्य प्राणायामान् कृत्वेत्यर्थः ।

---

1. T गुलं
2. M पाठः । T संस्पर्शमलब्ध
3. M पाठः । T स्मतिश्च
4. $T_1$ गमनो
5. M प्राश्यं
6. M प्राश्यं
7. $T_1$ शनैवरि
8. T गुलं
9. $T_1$ खस्ता
10. T गृहा तेनैव M गृहात्तैरेव मानवाः
11. T क्षतोढं द्र.मू.
12. T प्राणात्

श्वेत[1]माल्यं तथा [2]लाजान् मत्स्यमांसमपां [3]घटम् ।
[4]छत्रं पत्रं ध्वजं चैव [5]हेमरुप्यमणिस्तथा ।। 489 ।।

दधि सर्पीर्मधून्याम्रं यव धान्यतिलानपि ।
मृदं सर्षपदूर्वाश्च रोचनागरुचन्दनम् ।। 490 ।।

एतानन्यांश्च हि शुभान् गच्छत् दृष्ट्वाप्नुयात् फलम् ।
[6]गोमये वा [7]पुरीषे वा यस्य [8]पादो [8a]निमज्जति ।। 491 ।।

उद्धृतं गोमयं दृष्ट्वा यात्रासिद्धिर्विनिर्दिशेत् ।
संस्पृश्य दक्षिणं सक्थि श्रीमच्छैवं षडक्षरम् ।। 492 ।।

शत[9]मष्टाधिकं जप्त्वा गच्छेन्निःसंशयं बुधः ।
प्रदक्षिणीकृत्य शिवं [10]गाश्च संस्पृश्य घासकम् ।। 493 ।।

तेभ्यो [11]दत्वाथवा विप्रान् सन्तोष्यानुज्ञया व्रजेत् ।
अर्थस्ध्यिर्थगमनेऽ[A]वय[12]मुक्त्वा पथो जपेत् ।। 494 ।।

दीर्घाध्वगमने चैव भयस्थान[13]गमेऽपि च ।
सम्पूषन्नध्वन इति जपेत्सादरमर्थवित् ।। 495 ।।

---

गोमय इति । यात्राया असिद्धिर्यात्रासिद्धिः । प्रथमान्तं चेत् भवेदिति विनिर्दिशेत् इति योज्यम् । दोषस्य शान्तिमाह संस्पृश्येति । [14]घासकं [15]तृणमुष्टिः । अर्थवित् मन्त्रार्थ[16]मनुस्मरन् अवयवेत्यादिमन्त्रेषु गृह्यसूत्रसिद्धेष्वृचं पादग्रहणे सूक्तं सूक्तादौ हीने पादे इति परिभाषया ऋक्सूक्तविभागो वेद्यः ।

---

1. $T_1$ पाठः । T श्वेतमाप्यां
2. M जालं
3. M घटः
4. M सितच्छत्रं ध्वजं
5. T हेमरुत्म । M पाठः
6. M पाठः । गोमयो T
7. M पाठः । T पुरीषो
8. M पाठः । T पादे
8a. M न मज्जति, $T_1$ नियच्छति
9. M मष्टादिकं
10. M पाठः । T गवां
11. M दत्वा तथा
12. $T_1$ मुत्वा
13. $T_1$ गतोऽपिच
14. $T_1$ घातकं
15. $T_1$ तृणत् पुष्टिः
16. $T_1$ मनुस्मामयं मत्येत्यादि मन्त्रेषु

---

A. अत्र ''अवयवमुक्त्वा'' इति भवेद्वा । छन्दोभङ्गभिया ''अवयमुक्त्वा'' इति लिखितं वा । व्याख्याने ''अवयवेत्यादिमत्रेषु'' इति व्याख्यानं दृश्यते ।

सम्पूषन् विदुषेत्येतज्ज[1]पेद्दिङ्मोहसम्भवे ।
[2]नद्यामुडुपसिध्यर्थं रमध्वं [3]मेतृचं जपेत् ॥ 496 ॥

[4]इष्टकार्यस्य विघ्नं स्यद्दिने यात्रा समन्विते ।
यत्नेन वर्जयेत् क्षौरं तैलाभ्यक्तिं तथैव च ॥ 497 ॥

कृत्वा तु मैथुनं रात्रौ प्रभाते योऽधिगच्छति ।
नासौ फलमवाप्नोति कृछ्रेण विनिवर्तते ॥ 498 ॥

यात्राकाले तु सम्प्राप्ते मैथुनं यो[5]नि(षे)वते ।
रोगार्तः क्षीणकोशश्च स निवृत्ते[6](त) वा न वा ॥ 499 ॥

यात्रायां प्रस्थितो यश्च ब्राह्मणानवमन्यते ।
नासौ प्रतिनिवृत्ते[7](त) तदन्तं तस्य जीवितम् ॥ 500 ॥

पारक्यं वा स्वकीयं वा पुरुषं स्त्रियमेव वा ।
ताडयित्वा तु यो गच्छेत्तदन्तं तस्य जीवितम् ॥ 501 ॥

यस्तु सम्प्रस्थितो यात्रां स्वभार्यां नाभिनन्दति ।
भार्या वा नाभिनन्देत न च प्रतिनिवर्तते ॥ 502 ॥

अर्के षष्ठगते जीवे लग्नस्थे बलसंयुते ।
केन्द्रे गुरौ [8]बु(धे) वापि [8a]क्लीमे चन्द्रे बलान्विते ॥ 503 ॥

---

उडुपशब्देन नदीतरणसाधनं [9]नावादिकमुच्यते । अर्के षष्ठगते इत्यादिभि[10](र्द्वि)-चत्वारिंशद्भिः श्लोकार्धैः [11](द्वि)चत्वारिंशद्योगा उक्ताः । तत्र ग्रहविकल्पात् जातं योगाधिक्यं नाङ्गीकृतम् । क्लीमापोक्लिमम् ।

---

1. M जपदिङ्मोह
2. $T_1$ द्या for नद्या
3. M म ऋचं
4. $T_1$ मातृकायां "इष्टकार्यस्य" ततः द्वादशपङ्गित "प्रतिनिवर्तते" पर्यन्तं नास्ति ।
5. T निषवते
6. T न
7. T तु
8. T बुधौ
8a. M क्लिबे
9. $T_1$ पाठः। नावादिग
10. T द्वा for द्वि
11. T द्वा

द्विट्सुखाङ्गा[1](स्त)रवत्रिस्थाः पापज्ञार्यसितेन्द्विनाः ।
पापास्त्र्यायारिगाः शुक्रेऽनुकूले लग्नगे गुरौ ॥ 504 ॥

शुभेषु धनगेष्वर्के लग्नगेऽस्तगते विधौ ।
चन्द्रे कर्मगते चान्द्रे षष्ठे लग्नगते खौ ॥ 505 ॥

[2]बलिनौ जन्म[3]लग्नेशौ शून्ये मृत्यौ शुभस्तनौ ।
पापेऽङ्गस्थे खगे भानौ शुक्रो ज्ञो वा खलाभगः ॥ 506 ॥

त्र्यर्थाङ्गगा रविज्ञाच्छास्त्र्यायारिस्थौ कुजार्कजौ ।
जीवेऽङ्गस्थे [4]विधौ पापे भ्रातृस्थे [5]सुखगौ शुभौ ॥ 507 ॥

अ[6](ङ्ग)त्र्य[7]स्तायखे [8]जीवे पापश्चन्द्रो रविः [9]शुभः ।
गुरुचन्द्रार्किशुक्रज्ञा लग्नायाज्ञाम्बुधीगताः ॥ 508 ॥

सर्वे लाभार्थगाः सौम्या गुरौ लग्ने बलाधिके ।
लग्नारिखसुखस्थो ज्ञः शुभदृष्टो बलाधिकः ॥ 509 ॥

[10]लग्नार्थत्रिषडस्तेषु [11]शुक्रार्क्यर्कारमन्त्रिणः ।
लाभाज्ञारिव्ययास्ताङ्ग भ्रातृस्था भास्करादयः ॥ 510 ॥

षट्कर्मत्र्यस्तलग्नाम्बुलाभस्था वार्यवारगाः ।
पापास्त्र्यायारिगाः केन्द्रत्रिकोणेऽन्ये सुखे शशी ॥ 511 ॥

कुजजीवार्कशुक्रज्ञास्त्रिसुतायाष्ट[12A]कामगाः ।
पापो [13]लाभे तृतीयेऽर्के [14]शुक्रे बन्धौ तनौ गुरौ ॥ 512 ॥

---

1. T स्थ for स्त
2. $T_1$ बलिना
3. $T_1$ पाठः । T लग्ने
4. $T_1$ विदो
5. M सुखगे
6. T अङ्गे
7. M स्तारिखे
8. $T_1$ जीवः पापौ चन्द्रः
9. $T_1$ शुभौ
10. $T_1$ लग्नास्त
11. M पाठः । T शुक्राक्योरमन्त्रिणः
12. M कर्मगाः
13. M लाबो
14. $T_1$ शुक्रो

---

A. अत्र सन्दिग्धः पाठः ।

लाभेऽर्कज्ञौ [1]यमाच्छारेन्द्वार्यास्त्र्य[A]ङ्गारिखाङ्गगाः ।
एकान्तरर्क्ष[2](ग): [3]सौम्यः [4]शुक्राज्जीवा[5]द्यमात्कुजात् ॥ 513 ॥

षट्सु राशिषु [6]सर्वेऽपि ग्रहाः एकान्तरस्थिताः ।
[7]निरन्तराः ग्रहाः पञ्च विसूर्याः पञ्चराशिगाः ॥ 514 ॥

[8]उभावेकांशगौ [9]लग्ने ग्रहौ न [10B]शशिभूमिजौ ।
सुखे लग्नेऽपि [11]वा चन्द्रो मध्यस्थो बुधशुक्रयोः ॥ 515 ॥

जीवे लग्ने [12]भृगौ षष्ठे रुक्षे दक्षिणगेऽबले ।
गुरुशुक्रौ चतुर्थस्थौ सप्तमस्थे निशाकरे ॥ 516 ॥

बन्धुस्थौ ज्ञसितौ द्यूने चन्द्रेऽङ्गे गुरुवीक्षिते ।
कुजयुक्तनवांशर्क्षात् गुरुशुक्रोऽथवा खगः ॥ 517 ॥

यमारस्थांश[13]काद्‌ध्र्वं शतांशे वर्तते बुधः ।
[14]एकोडुगौ गुरुकुजौ केन्द्रगौ शुभवीक्षितौ ॥ 518 ॥

---

एकान्तरर्क्षगः सौम्य इत्यत्र शुक्रजीवयमकुजेष्वेकस्मात् स्थितिर्विवक्षिता । अत्र बृहस्पतिः ।"एकान्तरर्क्षगः सौम्यः शुक्राद्वारात् गुरोस्तु(वा) । यमाद्वे"ति । षट्सु राशिष्वित्यत्र एकस्मिन् राशौ ग्रहद्वयमभिहितम् । रुक्षे दक्षिणगे बले इत्यत्र रुक्षत्वादिविशिष्ट शुक्र इति कल्प्यते । नो चेत् कस्मिंश्चित् दुर्बले रुक्षे ग्रहे दक्षिणग इति योजना स्यात् । "[15]रुक्षो दक्षिणमार्गगः ह्रस्वाङ्गोऽपि बली ग्रहः" इति बार्हसपत्ये पाठः । तत्रापि विशेष्यो विचिन्त्यः । ह्रस्व इति वचनं सर्वत्र [16]क्षीणरश्मेर्भवति ।

---

1. M यमाश्चारे
2. T गाः द्र.व्या
3. $T_1$ सौम्याः
4. M पाठः । शुक्राजीवा
5. $T_1$ द्यामान्कुजान्
6. M सर्वेषु
7. M निरन्तरं
8. M पाठः । T शुभ्र
9. $T_1$ चन्द्रे
10. M शनिभूमिजौ
11. $T_1$ मा for वा
12. $T_1$ भृगोः
13. $T_1$ ता for शका
14. $T_1$ एकोडुगो
15. $T_1$ रक्षो
16. $T_1$ क्षीरश्मेः

---

A. "त्र्यङ्गारिखाङ्गगाः" इत्यत्र अङ्गपदं कुत्र अङ्कपदं कुत्रेति निर्णये सन्देहः ।

B. अत्र पाठनिर्णयः दुष्करः ।

लग्नस्थावेकनक्षत्रगतौ बलयुतौ शुभौ ।
[1]यात्रादिगीशयुक्तर्क्षात् पञ्चमस्थो वली ग्रहः ॥ 519 ॥

शुक्रो [2]ज्ञोऽर्को गुरुर्वापि क्षिति[3](जा)क्यों(स्त्रि)कोणगः ।
लग्ने शुभस्तृ[4]तीयेऽन्ये जीवेऽन्येऽथवोच्चगः ॥ 520 ॥

पापेष्वाये गुरौ लग्ने शून्ये पुत्रे [5]खगे विधौ ।
शुभेष्वेको यदा लग्ने शुभदृष्टः प्रदीप्तिवान् ॥ 521 ॥

शुभेष्वेको बलोपेतस्त्रिकोणे केन्द्र एव वा ।
उच्चगेषु ग्रहेष्वेको लग्नगः कर्किगे विधौ ॥ 522 ॥

स्वात्यां सशुक्लपञ्चम्यां [6]जीवेऽ(ङ्ग)स्थे बलान्विते ।
शुभा गन्तुरमी योगाः द्विचत्वारिंशदिष्टदाः ॥ 523 ॥

चान्द्रा योगाश्च होरोक्ता यात्रायां शुभदायिनः ।
प्रवेशभात् तृतीयर्क्षे न गन्तव्यं कुतश्चन ॥ 524 ॥

न वेदयेत् प्रत्युषसि गृहनाथे [7]गृहाद्गमः ।

## [इति] यात्राविधिः ॥ अथ वश्यविधिः ॥

वृषसिंहालिवीणाजा वारवर्गाश्च भास्वतः ।
ज्येष्ठा च राजयोगाश्च शस्ता राजाभिषेचने ॥ 525 ॥

[8]श्रोणात्रिमूलचित्राद्विशोका वर्ज्यास्तथा रविः ।
कुम्भ[9]कन्याकुलीरस्थः शेषं तुल्यं प्रतिष्ठया ॥ 526 ॥

वृषभे वृषभांशे वा लग्नस्थे रोगवर्जिते ।
वक्ष्यमाणेऽथवा योगे दृष्टो वश्यो भवेत्प्रभुः ॥ 527 ॥

---

यात्राविधिः । राज्ञः [10]समृ[ध्य](र्थ)[म]भिषेक-विधिमाह-वृषसिंहेति । राजयोगा होरासूक्ता [11]श(स्ताः) । [12](व)श्यविधिमाह - वृषभे इति ।

---

1. $T_1$ रात्रा
2. $T_1$ श्रेर्को
3. $T_1$ पाठः । T क्षितिजोस्तिकोणगः
4. $T_1$ तृतायो
5. $T_1$ यगे
6. $T_1$ जीवेऽङ्गे
7. $T_1$ गृहागमः
8. $T_1$ श्रोण
9. $T_1$ कन्यं
10. T समृर्थाभिषेक
11. T शस्त
12. T पश्य

लग्ने वर्गोत्तमांशस्थौ [1]शुक्रार्यौ सह भाषणात् ।
जीवे लग्ने सुखे शुक्रे चन्द्रे च सह भाषणात् ।। 528 ।।

(खा)[2]ङ्गाम्बुष्विन्दुजीवाच्छा वेश्मखाङ्गेषु वा क्रमात् ।
चन्द्रे कर्क्यंशगे शुक्रे सार्ये खे मित्रवेश्मगे ।। 529 ।।

मन्दार्कारा [3]मदायास्ते शुक्रशक्रगुरूदयात् ।
एषु सप्तसु योगेषु दृष्टो वश्यो भवेत्प्रभुः ।। 530 ।।

**[इति] वश्यविधिः । अथ विद्वेषयोगाः ।।**

[4]कर्माङ्गबन्धुनिरता रविभौमचन्द्राः
कर्माङ्गबन्धुनिरता गुरुसूर्यचन्द्राः ।
[5]मन्दे बलेऽस्तरिपुगे तपने तनुस्थे
लाभाङ्गशत्रुनिरताः कुजमन्दसूर्याः ।। 531 ।।

कर्माङ्गबन्धुनिरता रविचन्द्रजीवाः
कर्माङ्गसोदरगता रविचन्द्रजीवाः ।
वित्ताङ्गसोदरगताः शशिसूर्यजीवाः ।
द्वेषाय [6]गौरिशिवयो[7]रपि सप्तयोगाः ।। 532 ।।

[इति] द्वेषयोगाः ।।

---

लग्ने वर्गोत्तमांशस्थौ [8]इत्यादिभिः पञ्चभिः श्लोकार्धैः सप्तयोगा उक्ताः । [9]खा(ङ्गा)म्बुष्वित्यनेन द्वौ योगौ । मन्दार्कार इत्यनेन च द्वौ । शुक्रोदयलग्नान्मन्दादिषु ग्रहेष्वेकः । गुरूदयलग्नान्मन्दादिषु ग्रहेष्वन्यः । प्रभुरित्युपलक्षणम् । कर्माङ्गेत्यादिभिः सप्तभिः श्लोकपादैः सप्तविद्वेषयोगाः ।

---

1. $T_1$ शुक्रर्यौ
2. T खङ्गम्बु $T_1$ खाखाम्बु
3. $T_1$ मदार्यस्ते
4. $T_1$ कर्मान्न
5. $T_1$ मन्द
6. M शौरिशिवयो
7. M पाठः । T रवि for रपि
8. $T_1$ इत्यादिविधिः for इत्यादिभिः
9. T खखाम्बु

अथोच्चाटनयोगाः ।
चरर्क्षे चरभांशे वा चरराशौ चरांशके ।
चन्द्रोदये वा चरभे [A]कुजाङ्गे त्वब्जपोदये ॥ 533 ॥

गेहे [1]कुजे तनौ सूर्ये शुक्रे सप्तमसंस्थिते ।
मन्देऽस्ते लग्नगे सूर्ये [2]चतुर्थे कुजसंस्थिते ॥ 534 ॥

दशमेऽर्के चरे लग्ने विधौ षष्ठाष्टमे कुजे ।
केन्द्रत्रिकोणगाः पापा विक्रमारिगताः शुभाः ॥ 535 ॥

योगेष्वेतेषु कर्तव्यं (श)[3]त्रोरुच्चाटनं सुधीः ।
[इति] उच्चाटनयोगाः ॥ षट्कर्मविधिः ॥
[4]सूर्योद(यं) समारभ्य घटिकादशकं क्रमात् ॥ 536 ॥

ऋतवः स्युर्वसन्ताद्या अहोरात्रं दिने दिने ।
वसन्तग्रीष्मवर्षाख्यशरद्धेमन्तशैशिराः ॥ 537 ॥

[5]हेमन्(तः) शान्तिके प्रोक्तो वसन्तो वश्यकर्मणि ।
शिशि[6](रो) स्तम्भ[7](ने) ज्ञेयो विद्वे(षे)[8] ग्रीष्म ईरितः ॥ 538 ॥

---

**चरर्क्ष** इत्यादिभिः उच्चाटनयोगाः । चतुर्भिःश्लोकपादै[9]श्चत्वा(रः) । **गेहे कुजे** इत्यादिभिश्चतुर्भिः श्लोकपादैश्चत्वारः । **सूर्योदयं** इत्यादि षट्कर्मविधिः । दिने दिने अहोरात्रम् । व(स)न्ताद्याः [10]ष(डर्त)वः स्युः । कथमित्यत्राह - सूर्योदयं समारभ्य घचिका[11]दश(कं) क्रमादिति । सूर्योदयमारभ्य घटिकादशकं वसन्ताख्यः । ऋतुः । पुनर्घटिकाद[12]श(कं) गीष्मः । एवं [13]वर्षादयोऽपिक्रमाद्भवन्ति । ऋतूनां विनियोगमाह-हेमन्तः शान्तिके इति ।

---

1. $T_1$ कुजौ
2. $T_1$ चतुर्थ
3. T रत्रोरुच्चा $T_1$ रात्रो
4. T सूर्योदय
5. T हेमन्ताः
6. T रे
7. T नो
8. T विद्वेष
9. T चत्वारि
10. T षड्तवः
11. T दश for दशकं द्र.मू.
12. T दश for दशकं
13. $T_1$ वर्षादयो विक्रमा

---

A. अत्र ''कुजेऽङ्गे'' भवेद्वा ।

प्रावृडुच्चाटने ज्ञेया शरन्मरणकर्मणि ।
जलं शान्तिविधौ शस्तं वश्ये वह्निरुदीरितः ॥ 539 ॥

स्तम्भने [1]पृथिवी शस्ता विद्वेषे व्योम कीर्तितम् ।
उच्चाटने स्मृतो वायुर्भूयोऽग्निर्मारणे मतः ॥ 540 ॥

तत्तद्भूतोदये सम्यक् तत्तत्कर्म समाचरेत् ।
ईशचन्द्रेन्द्रवरुणवाय्वग्नीनां दिशो मताः ।
शान्तिवश्यस्तम्भने च विद्वेषोच्चाटमारणे ॥ 541 ॥

## [इति] षड्कर्मविधिः ॥ अथ चतुष्पाद्विधिः ॥

विश्वनन्दादिशो निन्द्याः गजामात्यादिदर्शने ।
शतादित्याश्विशुङ्मूल[2]चित्राश्चान्यैः स्तुता मघा ॥ 542 ॥

मूलार्काजेन्दुरुग्दस्रा निन्दिता मध्यमा [3]मघा ।
[4]शुभेष्वतिबलिष्ठेषु [5]गज[6]शाला(द्यु)पक्रमः ॥ 543 ॥

वसूत्तरादितीन्द्वर्कत्र्यश्विरोगा न शोभनाः ।
शूर्पं शुभकरं शालाप्रवेशे करिणां सदा ॥ 544 ॥

[7]वस्वर्कद्व्यजरुक्दस्रा निन्द्यास्तद्दन्तकर्मणि ।
अङ्कुशं करिणां योज्यं यमवारे यमोदये ॥ 545 ॥

---

भूतोदयविनियोगमाह - जलमिति । [8]ईशादिदिङ्मुखेषु शान्त्यादीन् कुर्यात् । [9]गजामात्यादिदर्शने चतुष्पाद्विधिमाह - विश्वनन्देति । शतादयश्च निन्द्याः । मूलार्कादयः शालाद्युपक्रमे [10]निन्दि(ता)ः । अश्वकर्म अश्वे कार्यं कर्म ।

---

1. $T_1$ पृथुवी
2. M पाठः । T चित्राश्वानैस्तुता
3. $T_1$ मोघाः
4. M उभेष्वतिबलिष्ठेषु
5. $T_1$ वलि for गज
6. T शालान्युपक्रमः द्र.व्या.
7. $T_1$ वस्वक् द्विणरुक् दस्रा
8. $T_1$ पाठः । T रंशादिदिङ्मुखेषु
9. $T_1$ गजमत्यादिदर्शने
10. T निन्दितः ।

[1](ऊ)ध्वोंदयेऽश्वकर्म स्याच्छतश्रोणाश्विवाय्वि[2](ने) ।
[3]सुन[फा]दिषु योगेषु तेषां शालाद्युप[4]क्र(म): ॥ 546 ॥

कुम्भाद्यंशगते सूर्ये दारुं संगृह्य गोगृहम् ।
सृजेत् पुष्ययुते जीववारे वापि वृषोदये ॥ 547 ॥

रिक्तादित्य[5]त्र्यजाश्वार्कचतुर्वसुयमाच्युताः ।
[6]सिंहव्याघ्रौ सितक्रूरवा(स) नेष्टाः पशोर्गृहे ॥ 548 ॥
इति [7]चतुष्पा(द्वि)धिः ॥ अथ वस्त्रविधिः ॥

नववस्त्रे शुभं शूर्पं कन्यारक्षेत्र धन्वितः ।
सिंहारेति पठन्त्यन्ये रवेर्दौबल्यसम्भवे ॥ 549 ॥

शतमूलशशिश्रोणाशोकप्रतिपदोऽशुभाः ।
मघार्द्रे मृतिदे [8]वारीड् विषदो ग्लौ[9]र्वृषक्षतेः ॥ 550 ॥

अन्याङ्गे भुक्तपूर्वे च [10]मान्यै(र्दत्ते) प्रसादतः ।
न कालनियमं प्राहुर्नववस्त्रे विपश्चितः ॥ 551 ॥

[इति] वस्त्रविधिः ॥

---

[11]नववस्त्र इत्यादि वस्त्रविधिः । खौ दुर्बले [12]सिंहार(क्षे)त्र(ध)न्वि(नः) इत्यन्ये पठन्ति । कन्यादीनामशुभा इत्यनेन सम्बन्धः । वारीड् वरुणः । [13]ग्लौ(मृ)गशीर्षं, तत् वृषक्षतेर्दायकं, मूषिकेण छिन्नं वस्त्रं भवेदित्यर्थः । अन्याङ्गे उपनयनसमावर्तनादौ । भुक्तपूर्वे अन्येन केनचिदनुभूते वस्त्रे ।

---

1. T मूर्धोदये
2. T वाय्विनो
3. T सनभादिषु
4. T क्रमाः
5. $T_1$ त्र्यच्छाश्वार्क
6. $T_1$ सिंहव्याघ्रो
7. T चतुष्पाविधिः
8. M पाठः । T वारी
9. M वृषत्क्षतेः M दृषत्क्षतः द्र.व्या.
10. T मान्यैदुक्ते M मान्यैदते
11. $T_1$ न वस्त्र for नववस्त्र
12. T सिंहारक्षत्रधन्वित द्र.मू.
13. T ग्लौमृगशीर्षं

अथ वैद्यविधिः ॥
चित्राद्व्यजाश्विपुष्यार्द्राशतेन्दुहरस्य शुभाः ।?
आरार्कबुधजीवानां वाराश्चौषधसेवने ॥ 552 ॥

[1]चरा(न्त्या)ष्टमवीणाश्च शस्ताः पूर्णात्र निन्दिताः ।
नेष्टाः षष्ठाष्टमे पापा दुष्टयोगोऽत्र सोभनः ॥ 553 ॥

गुर्वार्क्यंशकनक्षत्रे गुरो[2]र्वा(र्कि)दिने तथा ।
तद्दिनेशांशके युक्ते रो[3](ग)र्णादि प्रतिक्रिया ॥ 554 ॥

इति वैद्यविधिः ॥ अथ श्राद्धविधिः ॥

परतः कृष्णपञ्चम्या वर्जयित्वा चर्तुशीम् ।
कन्याकुम्भगते सूर्ये श्राद्धं कुर्यादिनक्षये ॥ 555 ॥

शूर्पेन्द्रवह्न्य[4]जा(न्त्या)र्द्रापूर्वादित्यहिनैऋताः ।
नन्दा पूर्णा निशा सन्ध्या स्थिरोर्ध्वमुखतौलयः ॥ 556 ॥

[5]जिनत्रिघनजन्मर्क्षाण्यष्टमं प्रेतजन्मतः ।
श्राद्धं निघ्नन्ति यन्निन्द्यमन्यत्र तदिहेष्यते ॥ 557 ॥

---

अथ औषधविधिः । [6]चित्रा(द्री)ति । दुष्टयोगो दग्धादियोगः। गुर्वार्क्यंशकनक्षत्रे नक्षत्रे गुर्वार्क्यंशके इत्यर्थः । [7]तद्दिने(शां)शके युक्ते गुरोर्दिने गुरोर्दिनांशके, आर्किदिने आर्कियामेचेत्यर्थः । रोगस्य ऋणस्य अरेश्च नाशाय [8]क्रियाः कार्याः । अथ श्राद्धविधिः । परत इति । दिनक्षये अपराह्णे [9]अष्टकादिसंज्ञितं श्राद्धमत्र विहितम् । श्राद्धं कर्म निघ्नन्ति शूर्पादयः प्रेतश्राद्धं निघ्नन्ति । पिण्डकर्तुर्जन्मनक्षत्रं [10]जन्मतश्चतुर्विंशभं सप्तविंशभं च प्रेतश्राद्धे वर्ज्यम् । तथा च माधवीये "भार्यापुत्रसमन्वितस्य नियतं नेच्छन्तिजन्मत्रयं। कर्तुः [11](स्व)स्य च [12]सङ्कृति[त्रिघनभे] त्याज्ये स्थिरर्क्षाणि च।" इति। नक्षत्रविधिश्च तत्र श्राद्धे, प्रेतश्राद्धे च पृथक्पठितः ।

---

1. T चरात्याष्ट
2. T र्वार्की
3. T रोगार्णारि
4. T जात्यार्द्रा
5. $T_1$ जन
6. T चित्राद्विति
7. T तद्दिनेनांशके
8. $T_1$ क्रिये
9. $T_1$ अषकादि
10. $T_1$ जन्मभ
11. T तस्य
12. T सङ्कृति च नरभन्त्याज्ये

तृतीये द्वादशे पक्षे चतुर्विंशे यथाक्रमम् ।
एकोद्दिष्टं [1]वपेत्पिण्डमन्त्यमध्यादिपञ्चके ॥ 558 ॥

कविं कथय [2]तवङ्गिदिनेष्वेतत्त्रयं क्रमात् ।
वित्ताङ्गगर्भवारेषु मुख्यं स्यात् पिण्डपञ्चकम् ॥ 559 ॥

मृताहादोजयुग्मादौ शस्तौ पिण्डाय पुंस्त्रियोः ।
अत्रैकराशिगास्तारा: शस्ता मध्या द्विराशिगाः ॥ 560 ॥

[3]निन्द्यौ शुक्रारयोर्वारौ मुख्यौ [4]शनिशशाङ्कयोः ।
एकादशेऽह्नि यत्कार्यं श्राद्धं तत्र तु वर्जयेत् ॥ 561 ॥

विशेषतो भूततिथिमेकोद्दिष्टान्तरे तु वा ।
बहूद्दिष्टे विरोधो न यत्र त्वस्या [5]विवर्जनम् ॥ 562 ॥

त्रिमुहूर्तातिरिक्तत्वं मध्याह्नव्यापनं तथा ।
प्रयोजकद्वयं त्विष्टमिति कैश्चिदुदीरितम् ॥ 563 ॥

---

**तृतीये** इति । [6]पक्षोऽत्र पञ्चदशदिनात्मकः । अन्यथा चेत् तन्वङ्गिदिने आदिपञ्चकं न सम्भवति । एकोद्दिष्टं सपिण्डीकरणात् प्राक् प्राप्तम् । तत्र त्रैपक्षषाण्मास [7]सांवत्सरिकाख्यमिह विहितपञ्चसु दिनेषु तेषां कालः स्यात् । कविं-कथय-तन्वङ्गि-दिनेषु [8]तत्त्रयं भवति । दिनपञ्चकमपि दिनादि भवति । [9]भूततिथिः कृष्णचतुर्दशी । बहूद्दिष्टं सपीण्डीकरणादिकं अस्या भूततिथेर्विवर्जनं यत्र देशे शास्त्रे वा भवति तत्रापि बहूद्दिष्टे[10]तस्यामविरोधः । त्रिमुहूर्ताति[11](रिक्त)त्वंमस्तमयात्प्राक्, मध्याह्नव्यापनं सङ्क्रमदिनविषयं, क्वचित् तदिति पूर्वोक्तविशेषः ।

---

1. M भवेत्
2. M तन्वङ्गी
3. $T_1$ निन्द्या शुक्रादयो
4. T शशाङ्कयोः
5. M विवर्जयेत्
6. $T_1$ पक्षात्र पञ्चदिश
7. $T_1$ संवत्सरिकाख्य
8. $T_1$ तत्रय
9. $T_1$ भूतिथिः
10. $T_1$ "तस्यामविरोधः" इत्यारभ्य ततः द्वितीयपङ्क्तिगात "प्राक्" इत्यन्तं मातृकायां ग्रन्थापातः ।
11. T तिथितत्वं द्र.मू.

क्वचिच्चापि न भूतेष्टा वर्जनीया मतान्तरे ।
पौर्णमास्यामर्धरात्रे श्राद्धमिच्छन्ति केचन ।। 564 ।।

दिवसस्याष्टमो योंऽशः [1]कुतपः सोऽतिशोभनः ।
[2]चतुर्थोऽपि वरः [3][कु]ह्वां सर्वत्राप्यपरे विदुः ।। 565 ।।

सञ्चयोऽ[4](स्थ्नां) कृष्णपक्षे एकभे विषमे तिथौ ।।
चतुर्थेऽघदिने वा स्यात् सञ्चयोऽ[5](स्थ्ना)मतः परम् ।। 566 ।।

कृष्णपक्षोऽह्नि मन्देन्द्वो[6]रश्वि(न्या)र्द्रार्य[7]वारुणाः ।
या [8]तिथिस्त्रिमुहूर्ता स्यात् पूर्वमस्तमयाद्रवेः ।। 567 ।।

श्राद्धादौ सा प्रशस्तोपवासादौ चोदयात्परम् ।
[9]स्याल्लिङ् सम्भावनार्थोऽत्र [10]त्रिमुहूर्तगिरस्ततः ।। 568 ।।

ह्रासे साम्ये च वृद्धौ च स्मृत[11]मर्थत्रयं बुधैः ।
ह्रासे तृतीयसंस्पर्शस्तत्परार्धस्पृशिः समे ।। 569 ।।

---

क्वचिदपि शास्त्रे भूततिथिर्नेष्टा न विहिता । मतान्तरे तु [12]व(र्ज)नीयेति कथिता । अंशो मुहूर्ताख्यः । अघदिने अशौचदिने । या तिथिरित्यत्र स्यादिति [13]लिङ् सम्भावनार्थः । [14]यथाकथञ्चित् त्रिमुहूर्तत्वं सम्भाव्यमित्यर्थः । ततस्त्रिमुहूर्तशब्दस्य तिथेह्रासे साम्ये वृद्धौ चार्थत्रयं बुधैः स्मृतम् । तत्प्रकारमाह-ह्रासे तृतीयेति ।

---

1. M पाठः । T कुतवः
2. $T_1$ पाठः । T चतुर्थे
3. T गुह्वां
4. T स्था for स्थ्नां
5. T स्था
6. T रश्विद्यार्द्रा
7. M वारुणो
8. $T_1$ तिथिस्त्री
9. T स्याल्लिङ्गं भाव । $T_1$ पाठः ।
10. M पाठः । T त्रिमुहूर्तशिरस्ततः
11. $T_1$ मर्धत्रयं द्र.व्या.
12. T वर्णनीयेति द्र.मू.
13. वित् for लिङ्
14. $T_1$ "यथाकथञ्चित्" आरभ्य मित्यर्थः।" पर्यन्तं मातृकायां ग्रन्थपातः

**तुरीयस्पर्शनं वृद्धावुपवासेऽ[1](प्य)यं नयः**
**सम्प्रदायगतो मार्ग एषः स्मृत्यानुगामिनोः ॥ 570 ॥**

**[2]दिग्द्वादशांशमतयोर्विरोधादाश्रितो मिथः ।**
**धीरता पाकवद्धस्य करणं प्रियता तिथेः ॥ 571 ॥**

---

अत्रार्कास्तमयादुत्क्रमेण मुहूर्तगणना । स्पर्शशब्देन घटिकापादसम्बन्धो विवक्षितः । [3]उपवासे तु यथा मुहूर्तगणना श्राद्धादावित्यत्रादिशब्देने[4](ष्ट्या)दि परिगृहीतम् । उपवासादावित्यत्रादिशब्देन जन्मनक्षत्रादिपुण्यदिनविहितं कर्म गृहीतम् । अनयोराचारविशेषश्च चिन्त्यः । उक्तस्य श्राद्धमार्गस्य सम्प्रदायपरिगृहीतत्वं, तत्परिग्रहे हेतुं च प्रदर्शयति-**सम्प्रदायेति** । अहोरात्रस्य दशांशेन श्राद्धं कार्यमित्येतन्मतं स्मृत्यनुगामि स्यात् । अहोरात्रस्य द्वादशांशेन श्राद्धं कार्यमित्ये[5]त(द)पि स्मृत्यनुगामि । उभयमपि स्मृतिविहितमित्यर्थः । अनयोर्मतयोः परस्परविरोधात् पूर्वाचार्यैराश्रितोऽयं [6]मार्गः । एतदुक्तं भवति - श्रुतिस्मृतिवत् बाधकबाध्यत्वाभावादनयोः पक्षयोर्विषयभेदः कल्पितः । तिथेः प्रमाणस्य समत्वे द्वादशांशविधिः, अतिवृद्धौ दशांशविधिरिति । एवं समवृध्योर्विधिभेदादति[7](ह्रा)से च विधिभेदः स्यात् । ततस्तदन्तराले च त्रैराशिकेन विधिः कल्प्य इति । अस्मिन् प्रकरणे तिथिशब्दस्तिथेर्नक्षत्रस्य दिवसस्य च वाचको भवति । वृद्धिह्रासयोस्त्रैराशिकप्रदर्शनार्थं परमवृद्धिह्रासमाह-**धीरतेति** । एतत्प्रमाणमिन्द्वर्कयोः स्थूलगतिसाधितम् । सूक्ष्मगतिसाधितं तु [8]लिख्यते-दूरतः सूनुवद्धस्य गुरुणा धनता तिथेः । विनाडिकादि परममारोहमवरोहणमिति ।

---

1. T व्ययं
2. M पाठः । T दिग्धादशांश
3. $T_1$ "उपवासे" आरभ्य "परिगृहीतं" पर्यन्तं मातृकायां ग्रन्थपातः
4. T ष्या for ष्ट्या
5. T तमपि
6. $T_1$ माभः
7. T प्रासे
8. $T_1$ लिख्यन्ते

विनडिकादिपरममारोहमवरोहणम् ।
शकला[1]दधिका वोना विनाढ्यः षष्टिताडिताः ॥ 572 ॥

धीरतादिहृताः स्वर्णं यथा योगं शटाङ्गिनि ।
मध्याह्नव्या[2]पिनी या स्यात्तिथिः पूर्वापरापि वा ॥ 573 ॥

आब्दिकं तत्र [3]कुर्वीत वृद्धिह्रासौ न कारणम् ।
[4]इत्युक्त्या सङ्क्रमदिने नायं पक्षः समाश्रितः ॥ 574 ॥

पूर्वाह्णमथ मध्याह्नमपराह्णमिति [5]त्रयः ।
[6]अह्नो भेदो मतः कैश्चित् परैः [7]प्राह्णन्तु पूर्वकम् ॥ 575 ॥

पूर्वाह्णं तु द्वितीयं स्यात् मध्याह्नं तु तृतीयकम् ।
अपराह्णं तुरीयं स्यात् सायाह्नं पञ्चमं [8]स्मृतम् ॥ 576 ॥

---

त्रैराशिकमाह-शकलादिति विनाडिकामानम् । शकलाच्छ्राद्धं कार्यमिति योज्यम् । तिथेः [9]समत्वे स विधिः । षष्टिनाडिकातस्तिथेरधिका ऊना वा विनाडायः सन्ति चेत्ताः षष्ट्या निहत्य यथाप्राप्तेन धीरतादिमानेन विनाडीकृतेन विभजेत् । तत्र लब्धा विनाडिकाः [10]षडाशीत्यस्मिन् विनाडिकामाने स्वर्णं यथाविधि कुर्यात् । तावत्यो [11](वि)नाड्यः सूर्यास्तमयात् प्राक् सन्धिश्चेत् तस्मिन्नहनि श्राद्धं कार्यम् । ऊनाश्चेत् परेऽहनिः । स्वर्णविभागस्तु वृद्धौ धनं ह्रासे ऋणमिति । अस्य वृद्धिह्रासपक्षस्य सङ्क्रमदिनवृद्धौ प्रवृत्तिरिति प्रदर्शनाय सङ्क्रमविधिमाह मध्याहनव्यापिनीति । पूर्वतिथिशब्देनातीततिथेः शेषो मासारम्भे दिनगत उक्तः । परतिथिशब्देन मासाद्य-दिनमुक्तम् । व्याप्तिरत्र मध्याहनावसानातिक्रमः । [12]आ(ब्दि)कं प्रत्यब्दं मृतमास-विहितम् । वृद्धिह्रासौ न कारणम् । तिथेर्वृध्या ह्रासेन च न विधिभेदः इत्यर्थः । सङ्क्रमा-दन्यत्र वृद्धिह्रासौ कारणमित्यनेनापि सिद्धम् । मध्याह्नमत्र पञ्चांशपक्षसिद्धं गृह्यते ।

---

1. M पाठः । T दधिकोपेता विनाड्यः
2. $T_1$ व्यपिनी
3. $T_1$ कुर्वत
4. $T_1$ इत्युक्या
5. M त्रयम्
6. $T_1$ अन्नौ भेदा
7. $T_1$ प्राणन्तु
8. $T_1$ मतः
9. $T_1$ समत्व
10. $T_1$ षटाशीति
11. $T_1$ ऽपि नाड्यः
12. T आब्दीकं

पञ्चधा भेद उक्तोऽह्नः पक्षोऽयं बहु[1]सम्मतः ।
अतीत्यापि स्थितिर्व्याप्तिः [2]पूर्वस्यास्तु [3]तिथेर्मता ॥ 577 ॥

मध्याह्नस्पर्शमात्रेण परस्याव्यापनं मतम् ।
कृतकार्या तिथिर्याह्नि पूर्वस्मिन् [4]तां तिथिं [5]नयेत् ॥ 578 ॥

अयं [6]पक्षस्तु केषाञ्चित् नायं भेदः परैर्मतः ।
उक्त[7]कालात् प्राक्तनी चेत् पिण्डदाद्यैव सा तिथिः ॥ 579 ॥

---

अतीत्येति प्रोक्तविवरणं - मासारम्भदिने पूर्वतिथिशेषो विद्यते चेत् तस्यास्तिथेर्मध्याहनमतीत्य स्थितिरस्ति चेत् सा तिथिस्तस्मिन् दिने पिण्डदा स्यात्। यतो मध्याह्नादिक्रमेण तस्याः मध्याह्नव्यापनं भवति । तिथिशब्देन मासस्य प्रथमदिनमुक्तम्। [8A]तस्यां दिवि सङ्क्रमकालः स्यात्। यस्मिन् दिने मध्याह्नावसानात् प्रागेव सङ्क्रमकालो भवति तस्मिन् दिने उत्तरमासस्य प्रथमदिनं भवति । यतो मध्याह्नस्पर्शमात्रेणैव परस्याव्यापनं भवति । अतस्तस्मिन् दिने मध्याह्नव्यापिनी तिथिस्त्रिमुहूर्ताधिकशब्देन [9]ग(दि)ता । तिथी च [10]द्वे पिण्डदे भवतः । यदा पुनर्मध्याह्नमतीत्य सङ्क्रमस्तदा सङ्क्रमदिनोत्तरदिने मध्याह्नस्पर्शिनी तिथिः त्रिमूहूर्तन्यायसिद्धा। तिथी द्वे च पिण्डदे भवतः। यतस्तद्दि[11](नं) मासारम्भदिनम्। कृतकार्येति। मासारम्भदिनात् पूर्वस्मिन् दिने या तिथिः कृतकार्या त्रिमुहूर्ताधिका भवति [12]तां तिथिनयः न्यायो न प्राप्नोति - इति केचित्। मध्याह्नस्पर्शिन्यपि न पिण्डदेत्यर्थः । [13]प(रै)रयं भेदो न मतः । तथापि पिण्डदैवेत्यर्थः । एवं त्रिमुहूर्तशब्दोदितन्यायस्य निषेधस्थानप्रदर्शनाय सङ्क्रमविधिमुक्त्वा पुनस्त्रिमुहूर्तविधि[14]शेषमेवोपसंहरति - **उक्तकालादिति** । उक्तकालः त्रिमुहूर्तोदितकालः। प्राक्तनी प्रागेवारब्धा। [15]अद्यैव तस्मिन्यहन्येव।

---

1. M सम्मतम्
2. T पूर्वस्यान्तु
3. M पाठः । T स्थितेर्मता
4. M तास्तिथि
5. $T_1$ नयः
6. $T_1$ नाप्नोति for पक्षस्तु
7. $T_1$ काला
8. $T_1$ तस्यदिनि
9. T गतिता
10. $T_1$ त्वे for द्वे
11. T ना for नं
12. $T_1$ पाठः । T का
13. $T_1$ परेरयं $T_1$ पतरेरयं
14. $T_1$ शेषमेतवा संहरति
15. $T_1$ अद्यव

---

A. अत्र "तस्मिन् दिने सङ्क्रमकालः स्यात्" इति भवेद्वा।

[1]पराचीना यदि [2]भवेदपरा पिण्डदा तिथिः ।
पूर्वास्तमयतः [3]पू(र्वा) परास्तमयतः परा ॥ 580 ॥

एका तिथिघटीमात्रा स्यात् परेऽहनि पिण्डदा ।
[4]घटीगीरतिसूक्ष्मस्य कालस्यात्र [5]प्रदर्शिका ॥ 581 ॥

त्रिमुहूर्ताधिका[6] या तु तिथिरस्तमयात् परा ।
मध्याह्न[7]स्पर्शिनी क्रान्तिः श्राद्धं तत्रापि चेष्यते ॥ 582 ॥

आद्याः प्रतिपदो येंऽशा[8]स्त्रयो योऽन्त्यश्च पर्वणः ।
याममात्राव[9]शेषेऽह्निनिष्ठत्वेष्विष्टिरिष्यते ॥ 583 ॥

[10]यदाह्नोऽष्टांशवाच्यत्र यामशब्दस्तथा खलु ।
तेष्वत्रेत्यविरोधार्थो [11]यदा तुर्यांशवाचकः ॥ 584 ॥

---

पराचीना यथोक्तकालमतीत्यारब्धा। अपरा अपरदिनगता। परेऽहनि पिण्डदेत्यर्थः। त्रिमुहूर्तन्यायस्यापवादमाह - पूर्वास्तमयत इति। कदाचिदेका तिथिः पूर्वास्तमयतः प्राक् त्रिमुहूर्ताधिकापि परास्तमय[म]तिक्रम्य भवति चेत् सा परे अहन्येव पिण्डदेत्युक्तं भवति। एकेत्यनेन कदाचिदेव तथा सम्भवतीति सूचितम्। घटीशब्दो हि स्वल्पकाले वर्तते । तथा च केशवस्वामी "सा घटी तैलादिभाजने स्वल्पकालेऽपि" इति । एष विधिः [12]नक्षत्रस्यैव सम्भवति । त्रिमुहूर्ताधिकेत्येत् व्याख्यातम् । केषुचित् देशेषु [13][तिथि]नक्षत्रयोरेव दशांशेन श्राद्धं क्रियते । तत्वहोरात्रस्यांशवशात् । [14]अथेष्टिकालमाह - आद्या इति । अंशाः पादाः पर्वान्त्यपादो याममात्रावशेषेऽह्निनिष्ठोऽत्र गृहीतः । तत्र समाप्तिं प्रपन्न इत्यर्थः । तेषु प्रतिपदादिषु यथोक्तपर्वान्त्यपादयुतेष्विष्टिरिष्यते। अस्य विवरणं यदेति। अत्र याम-शब्दोऽह्नोऽष्टांशवाचीतियदा कल्प्यते, अह्नोऽष्टांश[15]मितप्रतिपत्[16](स्या)दित्यर्थः।

---

1. M पराविना द्र.व्या.
2. M भवेदपरां
3. T पूर्णा द्र.व्या.
4. M घटीशब्दस्तु सूक्ष्मस्य
5. M प्रदर्शकः
6. $T_1$ ता for का
7. M स्पर्शनी
8. $T_1$ सूर्यो for स्त्रयो
9. M शेषेणनिष्ठ
10. M इयं पङ्क्तिः मातृकायां नास्ति।
11. M ज्ञेयः for यदा
12. $T_1$ नक्षत्रैव
13. T विधि for तिथि
14. $T_1$ अनेष्टिकाल
15. $T_1$ पाठः। T मिति
16. T सादित्यर्थः।

[1]तेष्ववेति तदा शिष्टैर्नियमः संश्रितः किल ।
अष्टम्येकादशी षष्ठी शुक्लपक्षे चतुर्दशी ।। 585 ।।

एताः परयुताः शस्ताः पराः पूर्वेण संयुताः ।
एकादश्यौ [2]कुहूश्चोर्ध्वयुता [3]राकामुकुन्दभौ ।। 586 ।।

पूर्वान्तिमौ बुधैर्विष्णु[4]पञ्चकत्वेन [5]कीर्तिताः ।
पूर्णा [6]पूर्वेद्युरन्येद्युरप्यल्पैकादशी यदा ।। 587 ।।

तदा पूर्वां गृही भिक्षुः परां भक्तो [7]द्वयी भजेत् ।
एकादशी यदान्येद्युर्नकिञ्चित् दृश्यते तदा ।। 588 ।।

उपोष्या दशमीयुक्ताप्यन्यथैषातिनिन्दिताः ।
[8]विद्धाप्येकादशी ग्राह्या [9]परतो द्वादशी न चेत् ।। 589 ।।

अविद्धापि च विद्धा स्यात् परतो द्वादशी यदि ।
अरुणोदयमाश्रित्य पौराणिकमतानुगाः ।। 590 ।।

---

[10]तदा तेषु बहुवचनान्तयच्छब्दोदितेषु तेषु प्रतिपत्पादेष्वेव विधिर्भवति । न तु [11]पर्वान्त्यपादे इति शिष्टैर्नियमः संश्रितः । किलेति वार्तायाम् । याममात्रा प्रतिपदस्ति चेदपि प्रतिपत्पादत्रये विधिरस्त्येव । तथा च स्मृतिः "पूर्वाह्ने वाथ मध्याह्ने यदि पर्व [12]समाप्यते । उपोष्य तत्र पूर्वेद्युस्तदहर्याग इष्यते ।" अपराह्नेऽथवा रात्रौ यदि पर्व समाप्यते । उपोष्य तस्मिन्नहनि श्वो भूते याग इष्यते ॥" इति । अथोपवासविधिः । **अष्टमीति** । [13]परयुता परेऽहनीत्यर्थः । कुहूरमावास्या । राका पौर्णमासी । विष्णुपञ्चकमिति संज्ञा । पूर्णा पूवेद्युः दशमीरहितेत्यर्थः । गृही [14]गृहस्थः । भिक्षुः सन्यासी । विद्धा दशमीसहिता

---

1. $T_1$ तेष्ववेति
2. $T_1$ कु.....श्चोर्ध्व
3. $T_1$ रार्कमुकुन्दभौ द्र.व्या.
4. $T_1$ पञ्चतत्वेन द्र.व्या.
5. M पाठः । T कीर्तितौ
6. M पाठः । T पुर्वद्युः
7. $T_1$ द्वयं
8. $T_1$ विद्याप्येका द्र.व्या.
9. $T_1$ तथा M परेतो
10. $T_1$ तदाषु for तदा तेषु
11. $T_1$ पाठः । T पूवान्त्य
12. $T_1$ समाह्यते
13. $T_1$ पाठः । T वारयुताः
14. $T_1$ गृहस्वः

रुग्माङ्ग[1]दादयो [2]वेधं दिशा वर्ज्यं सदाब्रुवन् ।
[3]मान्धातृप्रमुखा स्मार्ता [4]विद्धापीति वचोऽनुगाः ॥ 591 ॥
[5]सूर्योदयिकावधिकां परां विद्धां तिथिं जगुः ।
उदयात् प्राक् चतस्रस्तु [6]नाडिका हि पुराणगैः ॥ 592 ॥
अरुणोदयवेलेति प्रोक्ता [7]केवलशास्त्रगैः ।
द्वादशी दशमी प्रोक्ता स्वर्गदैकादशी स्मृता ॥ 593 ॥
[8]त्रयोदशीद्वादशीभ्यां सहिताः स्वर्गमोक्षदाः ।
निशार्धमुखयोर्दृष्टा रोहिणी सहिताष्टमी ॥ 594 ॥
उपोष्या सिंहगे सूर्ये चन्द्रार्चनपरैर्द्विजैः ।
उपोष्या सङ्क्रमस्तोक[9]नाड्यासन्नेऽह्नि सादरात् ॥ 595 ॥

---

दिशा वेधं दशम्या वेधम् । वेधः सम्बन्धः । रुग्माङ्ग[10]दा(दयो) दशम्या वेधं सदा वर्ज्यमित्यब्रुवन् । परतो द्वादशी न चेदपि दशमीसम्बन्धो वर्ज्य इत्यर्थः । पौराणिकमतानुगानां रुग्माङ्गदादीनामरुणोदयकालमाश्रित्य वेधकल्पना। स्मार्तानां [11](मा)न्धा(तृ)प्रमुखानां [12]वि(द्धा)प्येकादशी ग्राह्या । परतो द्वादशी न चेदिति मतानुगानां सूर्योदयमाश्रित्य सूर्योदयिकावधि[13](कां) परां विद्धातिथिं जगुरिति। सूर्योदय[14]समभूतावधिकामपरसूर्योदयेन स्पृष्टामेकादशीं तिथिं विद्धां जगुः। पुराणगैः पौराणिकैः । केवलशास्त्रगैः शास्त्रमेव प्रमाणमिति वादिभिः । उदयात् प्राक् चतस्रो नाडिका अरुणोदयवेलेति प्रोक्ता। केवलशास्त्रगैरित्यनेन तैः प्रत्यक्षकालो न गृहीत इति सूचितम्। स्तोकनाड्या[15]स(न्नेऽहनि) षोडषनाडिकासन्नेऽहनि ।

---

1. $T_1$ दादो for दादयो
2. M वेध द्र.व्या
3. $T_1$ मान्यातृ
4. M पाठः । विद्धावीति
5. $T_1$ सूर्योदका for सूर्योदयिकावधिकां
6. M नाडिकादि पुराणगैः
7. M शास्त्रविचिन्तकैः
8. $T_1$ त्रयोदशीभ्यां for त्रयोदशीद्वादशीभ्यां
9. $T_1$ नाध्यासन्नेऽह्नि
10. T दादो for दादयो
11. T चान्धात्रिप्रमुखानां द्र.मू.
12. T विद्धं प्येका द्र.मू.
13. T का for कां द्र.मू.
14. $T_1$ सर्वहूता
15. T सन्नग्नि

### ।। अथ श्राद्धोपवासेष्वनध्ययनविधिः ।।

अनध्यायो मनुस्त्र्यष्टौविश्वोध्यार्धो निशान्वितः ।
निशि पूर्वार्धनिष्ठा सप्तमी द्वादशी तथा ।। 596 ।।

अष्टमी हन्त्युपाध्यायं [1]शिष्यं हन्ति चतुर्दशी ।
[2]विद्यां पञ्चदशी हन्ति प्रतिपत्सु न चिन्तयेत् ।। 597 ।।

सन्ध्यायां गर्जिते मेघे वेदपाठं करोति यः ।
[3]चत्वारस्तस्य नश्यन्ति आयुः प्रज्ञा यशो बलम् ।। 598 ।।

रात्रेस्तृतीय [4]भागोऽपि सन्ध्याशब्देन लक्षितः ।
अष्टम्याः साष्टकायाश्च पूर्वार्धे च तिथी तथा ।। 599 ।।
[5]यथोपाकरणादूर्ध्वे तिथी चाध्यायवर्जिते ।

### ।। अथ भूमिप्रवेशः ।।

मित्राश्विदृव्यजचित्राद्विमघातिष्यशिवोत्तरे ।
रिक्तापर्वाष्टमीहीने कर्षकः प्रविशेद्ध्रुवम् ।। 600 ।।

मेषालिकर्किणः शस्ता [6]वारा अपि शुभा सृजाम् ।
वारेषु कौजः श्रेष्ठोऽत्र मध्यमौ बुधजीवयोः ।। 601 ।।

शेषा [7]वारा विवर्ज्याः स्युः सोमवारः कदाचन ।
कृषि[8]शेषवनच्छेददाहो भूमिप्रवेशवत् ।। 602 ।।
(इति) भूमिप्रवेशविधिः ।।

---

अथानध्ययनकालविधिः । अनध्याय इति । मनुत्र्यष्टौ चतुर्दश्यादित्रयमष्टमी च । [9]वि(श्वो)ध्र्वार्धः = त्रयोदश्यपरार्धः । निशान्वितः = निशिदृष्टः । पूर्वार्धनिष्ठा = पूर्वार्धे समाप्ता आरब्धा च । केचिदाचार्या एवं पठितवन्त = "त्रयोदशी यदा रात्रौ लोकनाडी प्रमा भवेत् । तदा रात्रौ नाध्ययनं सार्धदिङ्नाडिका यदा ।।" "अष्टमी च तदा रात्रावनध्यायं प्रकीर्तितम् ।" इति । रात्रेस्तृतीयभाग इत्येतदपररात्रविषयं, न तु दिनविषयम् । भूमिप्रवेशविधिः । [10]मित्रा(श्वी)ति । कृषिविधिः ।

---

1. $T_1$ शिष्या M शिष्यान्
2. $T_1$ विद्यात्
3. $T_1$ चत्वारत्वास्तस्य
4. M भागे
5. $T_1$ यथोपकरणा
6. M ज्ञाच्छेड्यर्ग्रोदयास्तथा
7. M पाठः । वारापि वर्ज्याः
8. $T_1$ शेषौ
9. T विश्वार्ध्वार्धः
10. T मित्रार्थीत । द्र.मू.

## अथ कृषिविधिः ॥

सौम्यचित्राद्विविष्णुत्रिमित्रशोकाश्विनो ध्रुताः ।
गोवराह[1]खरा निन्द्याः [2]कृषौ वारो खेः शुभः ॥ 603 ॥

हलप्रवाहः प्रथमः समुष्कैर्निरुजैर्वृषैः ।
स्नपितैः सित[3]पु(ष्पा)दिभूषितैर्वलिभिः शुभैः ॥ 604 ॥

सीतादौ विषमाः शस्ताः प्रागग्रा [4]वोदगग्रगाः ।
[5]शु[A](नं न) आदिजापेन संस्कृता कृषिरुत्तमा ॥ 605 ॥

हलादिसाधनच्छेदे दुर्निमित्ते कृषिं त्यजेत् ।
[6]मृगान्त्यकर्किगोवीणाः शस्ताः कष्टः खगो रविः ॥ 606 ॥

चन्द्रश्च सुखगो नेष्टः खलग्नास्तेषु मध्यमः ।
भद्रातिथिं कृषौ वापि वर्जयन्ति कृषीवलाः ॥ 607 ॥

[7]स्वामी चेदत्र भूदेवो नास्यात्य[8](न्त)[9]मपेक्षितम् ।
आनुकूल्यं [10]पदो(त्था)नामेव तत्राधि[11]कारतः ॥ 608 ॥

---

**सौम्येति**। कृषौ कषणक्रि(या)याम्। हलप्रवाहः कर्षणम्। सीता लाङ्गलपद्धतिः। [12]शु(नं न) आदिजापेन [13]शु(नं न) इत्यादिमन्त्रजपेन। कृषिं त्यजेत् कृषिं न कुर्यात्। भूदेवा ब्राह्मणाः। क्षेत्रस्य स्वामी ब्राह्मणश्चेदस्य ब्राह्मणस्य भद्रातिथिवर्जनं नात्यन्तमपेक्षितम्। आनुकूल्यमष्टमराश्यादिराहित्यम्। पदोत्थः [14]शू(द्रः)। नियोगात् ब्राह्मणस्य नियोगात्। तस्यापि ब्राह्मणस्यापि। तत्कर्मणि शूद्रस्याधिकारान्नियोगात् करणेऽपि शूद्रस्यानुकूल्यं चिन्त्यमेव। अपिशब्देन च तत्प्रदर्शितम्।

---

1. $T_1$ पाठः। T करा
2. $T_1$ कृषो
3. T पुष्यादि
4. $T_1$ पोदशग्रगाः
5. T शुनन्न
6. $T_1$ मृगां च
7. $T_1$ स्वामि
8. T न्त्य
9. $T_1$ मवेक्षितम्
10. T पदोऽर्थाना $T_1$ वदोर्त्थानां द्र.व्या.
11. $T_1$, M तारतः
12. T शुनन्न
13. T शुनन्न
14. T शूद्राः

---

A. ऋग्वेदे 4.57.8

ससूर्यतारात् परदारमापदे
वृषस्य तासां हि भयं [1]शुकान्तकृत् ।
रुद्रोऽङ्गिरा[2]स्त्वत्र कृषीवलक्षया-
यान्ये कृषावृक्षगणाः समृद्धये ॥ 609 ॥

[3]मैत्रार्यमाश्विरोहिण्यां साहि[4](र्बु)ध्न्यां स्थिते कुजे ।
कृष्यादिकरणं नात्र कुर्यात्सस्यविनाशनम् ॥ 610 ॥

राहु[5]भौमार्कवेधर्क्षे कृषिकर्म विवर्जयेत् ।
तत्रैव शुभ[6]वेधः स्यान्मध्यमः कृषिकर्मणि ॥ 611 ॥

बीजस्यार्यो विशिष्टो हि कृषौ [7]तु भृगुरुत्तमः ।
[8]सर्वत्रापि रविः श्रेष्ठो विशेषेण तु चन्द्रमाः ॥ 612 ॥

शुभोदये तु सफला कृषिः पापोदयेऽबला ।
रोहिण्याद्यांशगेऽङ्गस्थे चन्द्रे स्यात् [9]कृष्युपक्रमः ॥ 613 ॥

---

लाङ्गलचक्रगतनक्षत्र[10]फलान्याह ससूर्यतारादिति । वेति सूर्यस्थितर्क्षम् ।? [11]रविद्वितीयम् । दारमष्टाविंशभम् । एतत्त्रयं लाङ्गलप्रोतदण्डस्य मूलगतं वृषभनाशकृत् । अस्य [12]त्रिकस्य पूर्वत्रिकमपरत्रिकं च लाङ्गलस्य हस्तग्राह्यभागे मुखभागे च [13]गतं शुभदं भवति । तासां हि तत्त्रिकं युगस्याग्रे स्थितं भवति । [भ]यं शुकान्तकृ[14](दिति) । त्रिकं दण्डाग्रे स्थितम् । रुद्रोऽङ्गिरास्त्वत्रेति त्रिकं युग्मस्यापराग्रे स्थितम् । एतानि त्रीणि त्रिकानि कृषीवलानां क्षयाय । नवादिपञ्चकं सप्तदशादिपञ्चकं च लाङ्गलदण्डस्य पार्श्वगतयोः स्थितं शुभदं भवति । अत्राभिजिद्युक्तान्यर्क्षाणि । आर्यो विशिष्टः बलयुतो लग्नादिगतश्च विशेषेण बीजकर्मणि शुभद इत्यर्थः ।

---

1. M शुभान्तकृत्
2. M पाठः । T स्तत्र
3. $T_1$ मैत्राश्विरं माश्वि
4. T बु
5. $T_1$ भौमोर्क
6. $T_1$ वेदः
7. $T_1$ "तु" इति ग्रन्थपातः ।
8. $T_1$ सर्वात्रापि
9. $T_1$ कृष्युपक्रमम्
10. $T_1$ ष्वान्याह for फलान्याह ।
11. $T_1$ पाठः । वि for रवि
12. $T_1$ तिकस्य
13. T गततं
14. T दि त्रि for दिति

लग्नाम्बुगो गुरुः सौम्यदृष्टः कृषिविवर्धनः ।
जीववारे [1]मघोपेते तुलालग्ने कृषिः शुभः ॥ 614 ॥

जलांशे शोभनश्चन्द्रो विषनाडीविवर्जिते ।
[2]चन्द्रवारेऽर्यमोपेते कुम्भलग्ने कृषिः शुभः ॥ 615 ॥
शुक्रचन्द्रमसौ केन्द्रे स्थितौ शोभनदौ सदा ।

## [इति] कृषिविधिः ॥ अथ बीजवापविधिः ॥

[3]चित्राशुक्प्रतिपद्भद्राकन्यामेषालिधन्विनः ।
अशुभा वह्निशूर्पाद्रा मध्यमा [4]बीजकर्मणि ॥ 616 ॥

विहिता [5]बीज(वापे)ऽन्यैर्विश्वादित्य[6](न्त्य)वायवः ।
मासास्त्र्यब्धिशरा मुख्या मुद्गादौ षष्ठपञ्चमौ ॥ 617 ॥

मृगेन्द्र इषुषट्छैलभागसंस्थो रविर्धुतः ।
यथा पूर्वाख्यफल्गुन्यां [7]आ(द्य)पादग(त)स्तथा ॥ 618 ॥

व्रीहितोऽन्यत्र नक्रस्य हरधीरनगांशगः ।
घटाद्यभागगश्चापि तदाद्येन द्युवद्धुतः ॥ 619 ॥

मित्राद्यपादगश्चापि त्वष्टुराद्याङ्घ्रिगो यथा ।
तथा कर्षकसंसिद्धे केषाञ्चिद्वपने बुधः ॥ 620 ॥

---

[8]बी(ज)वापनविधिः - चित्राशुगिति । भागोऽत्र त्रिंशांशः । अंशश्च त्रिंशांशः । तदाद्येन द्युवत् । कुम्भ[9]मा(स्या)दिमार्कवारवत् [10]सो(ऽपि) नेष्ट इत्यर्थः । केषाञ्चिद्बीजानां [11](वा)पे कर्षाणां सिद्धे कर्षकभाषिते नक्षत्रे च रविर्धुतः यथा भाग्यस्थस्तिलस्य, पूर्वाषाढस्थः कुलस्थस्य इत्यादि कैश्चि(त्) कर्षकैरुदितम् ।

---

1. $T_1$ मघोवेते
2. $T_1$ चन्द्रवारे यभोषेते
3. $T_1$ तथा M चित्रयुक्
4. $T_1$ मध्यमान्वितुकर्मणि
5. M बीजवपान्यै, T बीजपापान्यै
6. T त्य for न्त्य
7. $T_1$ आद्यपादगतास्तथा
8. T बीजावापन $T_1$ बीजावाचन
9. T मास्यदिमार्क
10. T सोविनेष्टः
11. T पापे

संवत्सरादौ यस्मिन् भे भूयिष्ठं [1]वृष्टिसम्भवः ।
ततो मुनीषु[2]भस्थोऽ(र्कः) सस्योप्तौ तद्विनाशकृत् ॥ 621 ॥

नेष्टः कर्माम्बुगश्चन्द्रो भ्रातृगाश्च शुभास्तथा ।
दिग्यात्राव[3](द्गृ)हारम्भे [4]बीजवापे च चोदिताः ॥ 622 ॥

अल्प?शक्य[5]वियद्बीजं [6]प्रवपेद्व्याघ्रसिंहयोः ।
जावे बलिनि लग्नस्थे नान्येच्छा बीजवापने ॥ 623 ॥

खेलं [7]कुरङ्गे विमते तु [8]कज्जलम्
सत्पुण्यमान्ये झटगौर [9]इतयः ।
वीरे शरे तीरसरे वितण्डुलं
शिष्टेऽन्नवृद्धिः [10]फणिभात्क्रमेण ॥ 624 ॥

खेलस्य [11]वेल्लमित्याख्या [12]कज्जलस्थेयलेरके
[13]पतङ्गपरचक्रादिरिति व्यक्तं [14]परं द्वयम् ॥ 625 ॥

---

बीजवापे राहुस्थितनक्षत्राद्दिनक्षत्रफलमाह – खेलमिति । खेलमिति जलेन [15]बाधा । कज्जलमिति [16]द्रवीकृततृणादिना जलमालाख्येन । वाधा इंतय इति । पतङ्गपरचक्रादिभि[17]र्बा(धा) । "अतिवृष्टिरनावृष्टिर्मूषिकाः शलभाः श[A]भाः । स्वचक्रपरचक्रं च सप्तैते इंतयः स्मृताः" इति प्रसिद्धम् ।

---

1. $T_1$ दृष्टिसम्भवः
2. T भस्थोर्के
3. T बद्गहारम्भे
4. $T_1$ बीजपापे
5. $T_1$ पियद्बीजं
6. M तद्वपेत् for प्रवेपत्
7. M कुरङ्गेऽपि मते
8. $T_1$ खञ्जलम् द्र.व्या.
9. M पाठः । T ईरितः
10. $T_1$ फणिभाक्रमेण
11. M वेल
12. M खज्जल
13. $T_1$ परतङ्ग for पतङ्ग
14. M द्वयं परम्
15. $T_1$ वाधा
16. $T_1$ द्रद्वीकृत
17. T बाधा

---

A. शुकाः इति भवेद्वा

दिवाकराक्रान्तगतागतानि
न सन्ति पूर्वापरगं द्वयं सत्
प्राक्पृष्ठगं [1]मध्यफलं भषट्कं
बीजोप्ति हेतो[2]र्न(व) निष्फलानि ॥ 626 ॥

लग्ने ज्ञार्यौ खगः सूर्यः [3]कुजोऽरौ लाभगाः परे ।
शुक्रेऽर्थे लग्नगे जीवे त्रिस्थौ ज्ञार्कौ भवे परे ॥ 627 ॥

शुक्रेन्द्वर्कबुधार्येषु लग्नार्थत्र्यम्बुकर्मसु ।
[4]जीवेऽर्थपुत्रगेऽङ्गस्थौ शुक्रेन्दू लाभगाः परे ॥ 628 ॥

शुक्रेऽ[5]र्थगेऽङ्गगे जीवे षट्त्रिलाभगताः परे ।
पापास्त्र्यायारिगाः सौम्या [A][6]धर्मकर्मार्थलग्नगाः ॥ 629 ॥

गुरुर्लग्ने भवे भानुः शुक्रज्ञौ [7]दशमे स्थितौ ।
सप्तैते शुभदा योगा बीजवापनकर्मणि ॥ 630 ॥

[B]गोधूमकोद्रवतिलकुलत्थ माषमुद्गकादीनाम् ।
[8]मीनर्क्षजन्मभवनं शाल्यादीनां च तच्चैव ॥ 631 ॥

व्रीह्यादिबीजमन्याद्वा स्वपापोहेन शोधितम् ।
विघ्नराद्पूजनार्थं च स्वल्पं शिष्टस्य [9]क्लृप्तिभिः ॥ 632 ॥

---

अत्राभि[10]जि(द्यु)तानि भानि । दिवाकरेति न सन्ति शुभानीत्यर्थः । पूर्वगमपरगं च द्वयं तथा भषट्कम् । बीजवापे योगानाह - लग्ने ज्ञार्याविति । गोधूमादि द्रव्यभेदानां जन्मर्क्षसंज्ञितान् राशीन् तत्फलं चाह - गोधूमेति ।

---

1. T मध्यगतं फलं for मध्यफलं
2. T नेच
3. $T_1$ पाठः । T कुजारौ
4. $T_1$ जीवेर्कपुत्रगे
5. $T_1$ र्थगङ्गस्थे
6. M धर्मकामार्थ
7. M दशमः
8. M मीनयुगं जन्मर्क्षं शाल्या
9. M क्लृप्तितः
10. T जिद्दितानि

---

A. अत्र पाठनिर्णयः दुष्करः ।
B. अत्र "गोधूम" आरभ्य ततः तृतीयपङ्क्तिगात "शोधितम्" पर्यन्तं श्लोकार्थ अस्पष्टः छन्दो भङ्गश्च ।

**ऊनं कृत्वाथ विंशांश[1]मेवं त्यक्त्वावशेषितम् ।**
**गणेशित्राज्ञया भूमावुप्तं स्याद्बहुपुष्टिदम् ॥ 633 ॥**

**मूलानां शशिभवनं मेषो राशिश्च जन्मर्क्षम् ।**
**वृक्षाणां सिंहभवनं [2]पर्णानां वृश्चिकं ज्ञेयम् ॥ 634 ॥**

**एषां स्वजन्मभवनात् सुखदशमस्थानसंज्ञिते पापे ।**
**बीजनिवापनकाले [3]सस्यानां नाशमायाति ॥ 635 ॥**

**तत्रैव शुभयुक्ते जन्मर्क्षे वा यदा तु सङ्ग्राह्यम् ।**
**निवपेद्वा शुभमिच्छन् [4]यदि तेषां सङ्ग्रहं कुर्यात् ॥ 636 ॥**

**बीजानां सङ्ग्रहे लापे [5](गृ)हसंवेशनेऽपि वा ।**
**धान्यप्रच्छादने सूत्रौ प्रशस्तं सजलाह्वयम् ॥ 637 ॥**

**पक्षान्तयोस्तुहिनराश्युद[6]यास्तयोश्च**
**[7]सिन्धोस्तदुत्कटमुपैति हि वीचिमाला ।**
**मध्ये च पक्षयुगलस्य नभस्थलस्य**
**मध्य[8]स्थितेव हिमधामनि वाडवाग्निम् ॥ 638 ॥**

---

आयातीति पाठश्चेत् पुरुषपरः । सत्रायातीति पाठश्चेत् सत्पुरुषपरस्य? । बीजानां [9]ला(वे)छेदने । सूतौ पुष्पोत्पत्तौ । अथवा बीजानामङ्कुरसद्भावे तत्र चेत् पक्षाख्या जलवृद्धिः गृहीता । अथवा स्त्रीणां प्रसूतौ सूतिस्तु भविष्यत्फलज्ञानार्थमुक्ता । सजलाह्वयं जलवृद्धिः । जलवृद्धिकालमाह - **पक्षान्तयोरिति** । प्रतिपद्द्वये पक्षाख्यः । जलवृद्धेरारम्भः एवमष्टमीद्वयपूर्वार्धान्तं जलस्य वृद्धिः । [10]त(तः)प्रभृति ह्रासारम्भः । एवं पञ्चदश्यन्तं ह्रासः । तथा चन्द्रस्योदयेऽस्तमये च जलस्य वृद्धिरारम्भः । चन्द्रे खमध्यगे पातालस्थे च जलस्य ह्रासारम्भः ।

---

1. M मपि
2. $T_1$, M वर्णानां
3. M यस्यादीनां भवेन्नाशः
4. M यदि एषां
5. T ग्रहसंवेशने
6. M पाठः । T योऽस्तयोश्च
7. M सिन्धोस्तदुत्कर
8. $T_1$ स्थितेच्युत for स्थिते
9. T लापे
10. T तत्र

सजलाह्वयशब्देन सिन्धुवृद्धिर्विवक्षिता ।
[1]अश्विन्यां सस्यसम्पत्तिः सूतके चाल्पमेव च ।। 639 ।।

[2]सस्यानां [3](वा)पने विद्याद् भरण्यां पशुभक्षणम् ।
[4]वपने कृत्तिकायां तु चङ्क्रमात्तद्विनश्यति ।। 640 ।।

आर्द्रायां सस्यनाशः स्यात् पक्षिभिः [5]संक्षयस्तदा ।
पक्वे नश्यन्ति सस्यानि [6]पुनर्व(सौ) वसुक्षयः ।। 641 ।।

नश्यन्ति पशुभिः सार्पे कृमिभिर्वा विनश्यति ।
कृमिभिः पूर्वफल्गुन्यां पक्वं नश्यति सर्वथा ।। 642 ।।

चित्रायां तु खरोष्ट्रैश्च विनाशमुपगच्छति ।
विशाखासु च सस्यानां क्षेमं सौकर्यमेव च ।। 643 ।।

जलेशे [7]सस्यनाशः स्यात् वारुणे मध्यमं मतम् ।
अहि[8]र्बु(ध्न्यु)प्तसस्यानां पाके पक्षिभिराहतिः ।। 644 ।।

रेवत्यां [9]सस्यनाशः स्यात् पक्वं कोमलसंयुतम् ।
[10]श्रोणाशूर्पमघा[11]याम्येष्वन्त्यपादेऽलिकर्किभे ।। 645 ।।

धान्यलाभः शुभः कैश्चित् [12]बीजवापवदिष्यते ।
गृह्णीयाद्धान्य[13]मजभे यमवारे यमोदये ।। 646 ।।

[इति] बीजवापविधिः ।।

---

सिन्धुवृद्धिः समुद्रवृद्धिः । अश्विन्यां सस्यस्य वृद्धिकाले सम्पत्तिर्भवति । सूतके फलोत्पत्तौ स्वल्पमेव स्यात् । एवं सस्यानां वापने फलं विद्यात् । [14]च(ङ्क)मात् जनसञ्चारेण नाशः । वसुक्षयः सस्यानां द्रव्यक्षयश्च । क्षेमंलब्धस्य पालनम् ।

---

1. $T_1$ उश्वित्यां
2. $T_1$ अस्यानां
3. T पापने
4. M पाठः । द्र.व्या. T पापकेन कृत्तिकायां शुचं क्रमार्तद्विनश्यति ।
5. $T_1$ संशयस्त
6. T पुनर्वस्वोर्वसु
7. $T_1$ सन्ध्यनाशः
8. T बुध्न्योप्त, M बुध्वोप्त
9. M पाठः । T पक्व
10. M पाठः । T श्रोण
11. M पाठः । T यात्ये
12. $T_1$ बीजापापे
13. $T_1$ मजगे
14. T चक्रे च क्रमात्, $T_1$ चक्रेमात्

## अथ धान्यसङ्ग्रहविधिः ॥

चित्रास्वात्यहिमूलार्द्राशूर्पपर्वमघायमाः ।
रिक्तापर्वाष्टमीहीना धान्यसङ्ग्रहणे वराः ॥ 647 ॥

मध्यमा श्रवणाजार्का पञ्चपूर्तय उत्तमाः ।
[1]स्थिरभं शनिदृष्टिश्च पूजितं धान्यसङ्ग्रहे ॥ 648 ॥

भानामग्न्यादिकानामभिजिदनुसृताः सप्तका वेद[2]संख्या-
स्तेषामेकैकमध्ये [3]मुनिभिरभिहिता स्थाणवस्तत्प्रमाणाः ।
अष्टावेकत्रिकाः स्युः शलश इति पृथङ्नाम तेषामिनस्पृ
ग्रिक्तः पूर्णो वरः स्याद्रवियुतकलशाः स्तम्भसंज्ञाश्च पूर्णाः ॥ 649 ॥

नक्षत्रतिथिवृद्धिश्च पूर्णकुम्भसमन्वितः ।
श्रीपक्षे जल[4]वृद्धिश्च पञ्चपूर्ण इति स्मृतः ॥ 650 ॥

पञ्चपूर्णे कृतं कार्यमभीष्टं फलमाप्नुयात् ।
प्रवेशे सङ्ग्रहे योगे विशेषेण प्रशस्यते ॥ 651 ॥

प्राजापत्यमघामैत्रं [5]नि(र्ऋ)तित्रय [6]उत्तराः ।
मृगेन्द्रमृग[A]कर्क्यालिकुम्भ[7]मी(नाश्)च राशयः ॥ 652 ॥

[8]एतेषां राशिनक्षत्रे पूर्वाह्ने भृगुसंयुते ।
व्रीहिबन्धनकर्माणि धान्यवृद्धि[9]करं भवेत् ॥ 653 ॥

वरुणाजमघेन्द्रेषु मन्देन्दुदिनयोगिषु ।
धान्यप्रच्छादनं कुर्यादुदये [10]चन्द्रमन्दयोः ॥ 654 ॥

---

धान्यानां सङ्ग्रहादिविधिः - चित्रास्वातीत्यादि। श्रीपक्षे पूर्वपक्षे। प्रवेशे धान्यानां गृहप्रवेशे। योगे धान्यस्य धान्यान्तरेण योगे। व्रीहिबन्धनः कुसूलादिषु स्थापनम्। प्रच्छादनं=रज्वादिना कुसूलादेःच्छादनम् ।

---

1. M पाठः। T स्थिरभङ्गनिदृष्टिश्च
2. M वेध
3. M पाठः। मुनिभिरभिनुता
4. $T_1$ वृद्धश्च
5. T निऋृति
6. M उत्तमाः
7. T मीनौ च
8. M एतस्मिन्
9. M कराणि
10. M चान्द्रि

---

A. अत्र "कुम्भालिकर्किमीनाश्च" इति परिवर्तनेन "कर्क्यालि" इत्यत्र विद्यमानदोषो दूरीकृतो भवति।

कुसूले निक्षिपेद्धान्यं लग्ने शशिसितान्विते ।
सूर्यवारे मघायुक्ते धान्यैः कोष्ठं प्रपूरयेत् ॥ 655 ॥

आजे धान्याहृतिः कार्या यमवारे यमोदये ।
मन्ददिने तल्लग्नेशे करे धान्याहृतिः कार्या ॥ 656 ॥

कर्कटकालिविलग्ने चन्द्रे पितृ[1]भार्यम[2]वरांशस्थे ।
कोष्ठागाराधानं धान्यानां वृद्धये कार्यम् ॥ 657 ॥

राशिरश्मिवशाद्धान्य संख्या [3](वा)रपरश्मितः ।
कुसूलाच्छाद[4]रज्जूनां संख्या वेद्या मनीषिभिः ॥ 658 ॥

[5]हनुर्लोके तनौ पूज्यास्तेन चिह्नं स्तनं सिने ।
लभ्यं नित्यं नटी भोग इति मेषादिरश्मयः ॥ 659 ॥

मुनिः पुत्रः सनिर्धेनु नृपस्तावोर्ध्वनिस्थितिः ।
ख्यादिरश्मयो धान्यनिधानं यत्र यक्षराट् ॥ 660 ॥

बुधादिसप्तवारेषु ध्वजादाविभपश्चिमे ।
सप्तस्थाने क्रमा[6]द्वेद्या विबुधैर्धन[7]दस्थितिः ॥ 661 ॥
[8]मकारान्तानि नक्ष[9]त्राण्यम्यन्ताश्च तिथिर्विधा ।
धान्यप्रच्छादनं कुर्यात्तद्[10](घु)णेनैव बाध्यते ॥ 662 ॥

---

कुसूलमिति पलालादिभिः कृतं पात्रम् । कोष्ठं धान्यस्थापनाय कृतं गृहम् । धान्यसंख्याः कुसूलादिषु स्थाप्यानां धान्यानां प्रस्थादिमान संख्याः । गृहे यत्र यक्षराड् वैश्रवणं तिष्ठति तत्र कुसूलस्थं धान्यं स्थाप्यम् । ध्वजादौ पूर्वादिदिशि। इभपश्चिमे उत्तरान्ते दिविभागे । बुधवारे प्राच्यां, कुजवारे उदीच्यां, गुर्वादिवारेषु आग्नेयादिषु । एव धन[द]स्य स्थितिः । नक्षत्रस्य मकारान्तत्वं भाषायाम् । [11]अ(म्य)न्ताः पञ्चमीसप्तम्यादयः । घुणाः प्राणिभेदाः ।

---

1. $T_1$ भार्याम
2. M चरांशस्थे
3. T पारपरश्मितः
4. $T_1$ रज्ञानां for रज्जूनां
5. M हनुर्लोकस्तनौ
6. $T_1$ द्वेधा
7. $T_1$ दस्तितिः
8. $T_1$ मकरान्ताग्नि
9. M त्राण्यम्यन्ताश्च
10. T बुणेनैव
11. T अभ्यन्ताः द्र.मू.

## अथ धान्यव्ययविधिः ॥

अश्विन्यां च पुनर्वस्वोस्तिष्यादित्योत्तरासु च ।
पूर्वासु च धनिष्ठासु सौम्ये [1]श्रवणपौष्णयोः ॥ 663 ॥

धान्यानां तु व्ययं कुर्याद्वृद्धि[2]मि(च्छन्) गुरोरपि ।
कृत्तिकारोहिणीरौ[3]द्राश्चित्रा ज्ये[4]ष्ठा च नैऋतम् ॥ 664 ॥

स्वाती[5]शतभिषक्चैता निन्दितास्तद्व्यये सदा ।
शेषाणि मध्यमान्याहुर्धान्यादीनां व्ययेषु च ॥ 665 ॥

[6]दर्शाष्टमी तथा रिक्ता वर्ज्याः शेषाः शुभावहाः ।
केचिद्रिक्तां प्रशंसन्ति धान्यादीनां व्ययेषु च ॥ 666 ॥

शकुनादीनि विष्टिं च वर्जयेत् सर्वदा नरः ।
नित्ययोगेषु सर्वेषु शुभेषु शुभदं भवेत् ॥ 667 ॥

आदित्य भौमशुक्राणां वारवर्गाश्च निन्दिताः ।
शेषास्तु [7]शुभदाः प्रोक्ताः कैश्चिच्छुक्रः प्रशस्यते ॥ 668 ॥
स्थिरोभयचराः श्रेष्ठमध्यहीनाः क्रमाद्व्यये ।
त्रिषडायगताः पापाः शुभाः केन्द्रत्रिकोणगाः ॥ 669 ॥

शुभदाश्च ग्रहाः सर्वे नेष्टाः रन्ध्र[8]गताः सदा ।
हिरण्यं रजतं ताम्रमारकूटमयस्तथा ॥ 670 ॥

अन्येषां सञ्चयानां तु व्ययं सर्वसमृद्धिकृत् ।
स्थिरराशौ स्थिते चन्द्रे स्थिरराशौ तु भार्गवे ॥ 671 ॥

भार्गवस्योदये कुर्यात् धान्यानां तु व्ययं नरः ।
एकांशकगतौ स्यातां [9]भृगुचन्द्रौ यदा क्वचित् ॥ 672 ॥

---

[10](आ)रकूटं धातुभेदः । हिरण्यादीनि यानि तेषामन्येषां च सञ्चयानां च यथोक्ते काले व्ययं कुर्यात् । तं कर्म सर्वसमृद्धिकृते । सर्वकर्मकम् ।

---

1. M पाठः । T श्रवणपुष्यभे
2. T मिच्छं
3. $T_1$ रौद्राश्वित्रा
4. M पाठः । T ज्येष्ठाख्य नैऋताः
5. M पाठः । T शतभिषगाद्या
6. M दशाष्टमी
7. M शुभप्रदाः for शुभदाः
8. M पाठः । T गतः
9. M मृग
10. T अरकूटं

धान्यानां तु व्ययं कुर्यात्तदाप्नोति समृद्धिकम् ।
नीचस्थानगते चन्द्रे तथा नी[1]चगते खौ ॥ 673 ॥

धान्यानां तु व्ययं कुर्यात्तच्छेषं [2]स्यादरातिगः ।
मन्दोदये व्यये भौमे राहौ तु धनसंस्थिते ॥ 674 ॥

धान्यानां तु व्ययं कुर्यात्तच्छेषं चाशु नश्यति ।
[3]भृग्वङ्गारकसूर्याणामंशके दिवसे तथा ॥ 675 ॥

लग्ने द्रेक्काण [4]भागेषु युक्ते चैव निरीक्षिते ।
न दद्यात् सञ्चितं कोशं यदीच्छे[5]द्विद्धिमात्मनः ॥ 676 ॥

मन्दोदये [6]शुभर्क्षेषु मन्दवारेऽथवा [7]गुरौ ।
धान्यानां च व्ययं कुर्याच्छेषो वृद्धि[8]करो भवेत् ॥ 677 ॥

भरण्यार्द्रामघाश्लेषात्रिपूर्वत्वाष्ट्रशूर्पभे ।
धातृमूलाग्निवस्वन्त्यशाक्रे ग्राह्यं न दीयताम् ॥ 678 ॥

मासाद्येऽह्नि मघायां च [9]पक्षतौ च न दी[10]य(ता)म् ।
विषमचरणधिष्ण्यं भद्रातिथिर्यदि जायते ।
[A]सुरगुरुशनिक्ष्मापुत्राणां [11]कुतश्चन वासरे ॥ 679 ॥

मुनिभि[12]रुदितः सोऽयं योगस्त्रिपुष्करसंज्ञितः ।
त्रिगुणफ़लदो वृद्धौ नष्टे हृतौ च मृतेऽपि वा ॥ 680 ॥

---

विषमचरणधिष्ण्यं कृत्तिकापुनर्वस्वादि [13](पा)दभं, यस्य नक्षत्रस्य [14]रा(शौ) विषमाश्चरणास्तमित्यर्थः ।

---

1. M नीचस्थानगते
2. M पाठः । T स्यादरातिताम्
3. $T_1$ भृगावारक
4. M भागे च
5. M पाठः । T सिद्धिमात्मनः
6. $T_1$ तथा M शभर्क्षेषु
7. M गुरोः
8. M पाठः । T करं
9. M पाठः । पक्षतो
10. T दीयतम्
11. M पाठः । T कथञ्चन
12. $T_1$ तदितः for रुदितः
13. T वादभं
14. T राशो

---

A. मुहूर्तचिन्तामणौ त्रिपुष्करयोगकथनावसरे रविवारः उक्तः । अत्र तस्य स्थाने गुरुवार इति वैशिष्ट्यम् । श्लोके छन्दो भङ्गश्च ।

शुक्रवारे शुक्रलग्ने तथा शुक्रस्य वर्गके ।
सङ्क्रमादिदिने चापि फलमेतत्समं स्मृतम् ॥ 681 ॥

## [इति] धान्यव्ययविधिः ॥ अथ क्रयविक्रयविधिः ॥

उत्तरात्रयरोहिण्यः पौष्णमूलाख्यवारुणाः ।
विशाखं चेन्द्रभं [1]चित्रा तिष्यादित्यकरास्तथा ॥ 682 ॥

अश्विसौम्येन्दुभाग्याश्च शुभाः स्युः क्रयविक्रये ।
छिद्रां च [2]शकु(निं) विष्टिं [3]त्यक्त्वा(न्या)स्थिथयः शुभाः ॥ 683 ॥

नित्ययोगेषु सर्वेषु शुभेषु शुभदं भवेत् ।
गोयुग्माजालि[4]जूकाश्च ससिंहाः शुभदास्तथा ॥ 684 ॥

[5]चन्द्रे वर्गोत्तमगते पुंष्करांशगते तथा ।
उच्चस्वक्षेत्रमित्रस्थे रन्ध्रे पापविवर्जिते ॥ 685 ॥

उक्तस्थानगतैः सर्वैः ग्रहैः सिद्धिः [6]क्रयादिना ।
[A]चन्द्रे पवनर्क्षगते गुरुदिवसे शुक्लपक्षपञ्चम्याम् ।
क्रयविक्रयसिद्धिकरी यात्रा सम्यग्बुधैः कार्या ॥ 686 ॥

## [इति] क्रयविक्रयविधिः ॥ अथ कूपादिविधिः ॥

[B]श्रोणावसु[7]द्विचित्राश्वि[8]मूलेन्द्वन्त्याश्विरुक्धनुः ।
कूपाद्युपक्रमे नेष्टा मघा शस्ता [9]महात्मभिः ॥ 687 ॥

---

उत्तरात्रयेत्यादि क्रयविक्रयविधिः । अश्विसौम्येन्दुभाग्या इति पाठो न युक्तः । अश्विनीसौम्य भाग्या इति पाठोऽत्र ग्राह्यः । भाग्यसंज्ञा फल्गुन्योरुभयोरपि स्यात् । कूपादिविधिः - श्रोणावसुद्वीति । मतभेदप्रदर्शनाय बहुधोक्तिः ।

---

1. M पाठः । T चैत्र
2. T शकुनीं
3. T त्यक्त्वान्यस्थितयः
4. $T_1$ झकांश्च । M तौल्यश्च
5. M पाठः । M चन्द्र
6. $T_1$ क्रियादिना
7. M द्विमूलेन्दु for द्विचित्राश्वि
8. M "मूलेन्द्व" इति लेखनस्थाने ... एवं रिक्तमस्ति ।
9. $T_1$ मखात्मभिः

---

A. अत्र वृत्तभङ्गः ।
B. अस्मिन् श्लोकार्धे अश्विपदं उभयत्र दृश्यते । एकत्र "अग्नि" इति भवेद्वा ।

[1]हस्ताप्याम्बुपपौष्ण[2]केशवमघामित्रोत्तरारोहिणी-
देवेड्येषु च शुक्रसौम्यशशभृद्वागीशवारांशके।
रि[3]क्ता(जे)न्द्रतिथिं विहाय वृषभे नक्रे कुलीरे घटे
मीने कूपतटाककर्म मुनयः शंसन्ति शुद्धेऽष्टमे ॥ 688 ॥

हस्तः [4]पुष्यं वासवं वारुणं च
मैत्र्यं पित्र्यं त्रीणि चैवोत्तराणि।
प्राजापत्यं चैव नक्षत्रमाहुः
कूपारम्भे श्रेष्ठमाद्या मुनीन्द्राः ॥ 689 ॥

पुष्टिं भूतिं पुत्रहानिं पुरन्ध्री-
नाशं मृत्युं सम्पदः शत्रुबाधाम्।
किञ्चित्सौख्यं दिक्षु शर्वादि कुर्यात्
[5]कूपो गेहे मध्यमेऽर्थक्षयं च ॥ 690 ॥

[6]अष्टमीविष्टिसंयोगे रेवत्यां गुलिकोदये।
जले कूपतटाकानां मलं हन्यात्सुनिर्मलम् ॥ 691 ॥

विश्वप्रदोषास्तमयसप्तके वा शनेर्दिने।
तत्पुत्रस्योदये [7]वापी सप्ताहं प्रदहेच्च तत् ॥ 692 ॥

[इति] कूपविधिः ॥

---

**दिक्षु शर्वादीति** - दिक्षु कृतकूपः क्रमेण [8]पु(ष्ट्या)दीन् कुर्यात्। कुत [9]आर(भ्य) इत्यत्राह - [10]शर्वा(दी)ति ऐशन्यादिष्वि[11]त्य(र्थः)। पुरन्ध्रीनाशः स्त्रीनाशः। गेहे मध्यमे गेहे मध्ये मध्ये गेहमर्थक्षयं चेति पाठः। गेहमिति वास्तु, अथवा गेहमध्ये गृहसूत्रे कृतमर्थक्षयं कुर्यादिति। जले मलं शैवलादि। तत्पुत्रः शनेः पुत्रो [12]गुलिकः। प्रदहेच्च तत्सप्तविश्वप्रदोषास्तमयेषु तच्छैवलादि बहिस्त्यक्तं प्रदहेच्च।

---

1. M पाठः। हस्ताप्ल्यम्बु
2. M पाठः। T केशिव
3. T रिक्तजिद्रतिथिं। M रिक्ताजिन्द्र
4. M पाठः। T पुष्यो
5. $T_1$ कूपं मध्ये गेहमर्थक्षयं च
6. M अष्टमे
7. $T_1$ तथा M पापी
8. T पुष्यादीन्
9. T आरभ्ये
10. T शर्वादिति
11. T त्ययः
12. $T_1$ गुलिकाः

## अथौषधशस्त्रकर्मादिविधिः ॥

[1]मा(र्त)ण्डाश्विसमीरमित्रवरुणादित्योत्तरारेवती-
चित्राविष्णुशशाङ्कतिष्यवसुषु [2]प्राजेषभे भेषजम् ।
कुर्यादर्कबुधार्यशुक्रशशभृद्वारोदये मङ्गले
रिक्तायां चरभेऽङ्गनासमुदये शुद्धेऽरिदाराष्टमे ॥ 693 ॥

[3]रौद्रेन्द्रोरगमूलभेषु दिनकृत् पुत्रारवारोदये
रिक्तायां क्रियकर्कितौलिवनितालग्ने विशुद्धेऽष्टमे ।
क्रूरेषु प्रबलेषु कर्तुरनुकूले च काले द्विजैः
कृत्वाशीर्विदधीत शस्त्रहुतभूक्[4]क्षारादियोगं बुधः ॥ 694 ॥

पापवारोडु तत्र्यंशे पापराश्युदये नृणाम् ।
पापदृष्टे क्रियाः कुर्यादौषधीः कुष्ठरोगिणाम् ॥ 695 ॥

[A]चित्रा[5]शतभिषगार्द्राद्युंक्षैरक्षोगणं यथा ।
रामोदि[6]ग्भवनधूमरेणुः शूलमशेषं विनाशयति ॥ 696 ॥

---

अथ औषधशस्त्रकर्मादिविधिः - [7]मा(र्त)ण्डेति । भेषजं कुर्यात् भेषजयोगं चूर्णक्षारादिसम्पादनं कुर्यादित्यर्थः । मङ्गले विष्ट्यादिरहिते काले । शस्त्र[8]हुतभु(क्)क्षारादियोगं शस्त्रहुत[9]भु(क्)क्षारादि प्रयोगम् । आदिशब्देन श्रृङ्गस्थापनादि गृहीतम् । उडुनः पापत्वमुग्रसंज्ञया कल्प्यम् । औषधीः क्रियाः औषधक्रियाः । औषधैरितिवा । चित्रेति चित्रादितः क्रमात्, शतभिषगादितः उत्क्रमात्, आर्द्रादितः क्रमादित्येवम् । सेवमानो [10]दिग्भवन धूमरेणुर्दशभ्यो ग्रहेभ्यो गृहीतः । [11]शूलमशेषं विनाशयति यथा रक्षोगणं रामः ।

---

1. T मार्ताण्डा
2. $T_1$ प्राञ्चेश भे
3. $T_1$ रौन्द्रेन्द्रोरग
4. $T_1$ क्षराय
5. M पाठः । T शतभिङ्गार्द्रा
6. M, $T_1$ दि भवनधूमरेणुः
7. T मार्ताण्ड
8. T हुतभुक्षारा द्र.मू.
9. T हुतभुक्षारा द्र.मू.
10. $T_1$ दिग्भवधूमरेणुर्दशलो
11. $T_1$ शूलशेषं

---

A. अत्र ''चित्राशतभिषगार्द्राद्यर्क्षै रक्षोगणं यथा'' इति भवेद्वा ।

निष्कपादं [1]तद(र्धं) च पादोनं च क्रमोत्क्रमात् ।
दग्धयोगोद्भूतश्चासौ निहन्ता कुष्ठशूलयोः ॥ 697 ॥

साधारणाख्यनक्षत्रे [2]वक्रग्रहनिरीक्षिते ।
[3]विष्टिवर्ज्ये तिथौ कुर्यात् सक्रियां राजयक्ष्मणः ॥ 698 ॥

अपस्मारादिरोगाणामेव शोभनता भवेत् ।
मन्त्रौषधिचणैः कार्याः प्रोक्तकालेष्वमूः क्रियाः ॥ 699 ॥

विपरीताख्यविष्ट्यां तु [4]कर्तव्याः शुभमिच्छता ।
औषधं नाडिकायां वा [5]त्वमृता(ख्ये) विषा[त्] परे ॥ 700 ॥

सुधायोगेषु वा कुर्यात् येषूदिता पुराक्रिया ।
क्षिप्रोग्रचरभे वारे सौम्ये रिक्तासु (मे)[6]हिनाम् ॥ 701 ॥

अष्टादशसु मेहेषु कर्तव्यं चौषधक्रिया ।
[7]दर्शे चातिशुभा ज्ञेया गुह्यरोगप्रतिक्रिया ॥ 702 ॥

[8A]मित्राद्व्रध्यजपुष्यार्द्राशतेन्दुहरयः शुभाः ।
आरार्कबुधजीवानां वाराश्चौषधसेवने ॥ 703 ॥

चरान्त्याष्टमवीणाश्च शस्ताः पूर्णात्र निन्दिताः ।
नेष्टा षष्ठाष्टमे पापाः दुष्टयोगोऽत्र शोभनः ॥ 704 ॥

---

क्रमोत्क्रमेणमानक्रममाह - [9]निष्कपादमिति । द्वितीय चकारेण निष्कमभिहितम् । [B]चित्रादिगंगारुरुशादिरोरुरङ्गाः शिवादिखररूढि यथाक्रमेण'' इत्यनेन त्रिष्वपि नक्षत्रविभागो वेद्यः । द्रव्यस्य संस्कारो जलद्रव्यं च गुरुमुखाद्वेद्यः । मन्त्रौषधिचणैस्तद्विद्भिरित्यर्थः । अमृताख्ये विषात्परे काले निष्पन्नायां नाड्यामिति योज्यम् ।

---

1. T तदर्थं च
2. M वक्रिग्रह
3. M पाठः । T वृष्टिवर्ज्ये
4. $T_1$ पाठः । T कर्तव्यं
5. त्वमृताख्यो
6. T मोहिनाम्
7. $T_1$ दर्शो
8. M ''मित्राद्व्रध्यजपुष्यार्द्रा'' इत्यारभ्य ततश्चतुर्थपङ्क्तिगत ''शोभनः'' इत्यन्तं मातृकायां नास्ति ।
9. $T_1$ निष्कदमिति for मिष्कपादमिति

---

A. अत्र ''मित्राद्व्यश्वयजपुष्यार्द्रा'' वा मित्राद्व्यग्न्यजपुष्यार्द्रा इति वा भवेद्वा ।
B. अस्य वाक्यस्य अर्थावगमनं दुष्करम् । तस्मात् शोधनमपि न कृतम् ।

पुष्टिदौषधसेवायामौषधग्रहणेऽपि च।
[1]जलधीकालः शुभदस्ततोऽन्येषु परः शुभः ॥ 705 ॥

[2]इन्दोवरि भार्गवे च ध्रुवेषु
सर्पादित्यस्वातियुक्तेषु भेषु।
पित्र्ये चान्त्ये चैव कुर्यात्कदाचित्
न्नैव स्नानं रोगनिर्मुक्तजन्तोः ॥ 706 ॥

स्नातुर्जनस्य दशमी तनयांस्त्रयोद-
श्यर्थान्निहन्त्युभयमेतदपि द्वितीया।
[3]सप्तम्यंनिन्दुनवमीषु च [4]सम्पदिच्छुः
स्नायात् [5]कदाचिदपि [6]नामलकै[7]र्मनुष्यः ॥ 707 ॥

## [इति] औषधविधिः ॥ अथ नैऋज्यविधिः ॥

मघायमाग्निचित्रा[8](त्रि)मूलाश्चैकाङ्घ्रिविष्णुषु।
सर्पार्द्रयोश्च तारासु सर्पदष्टो न जीवति ॥ 708 ॥

अष्टमी पञ्चमी षष्ठी रिक्ता बहुलपक्षगाः।
दग्धयोगाश्च मन्दारवारौ [9](द)ष्टस्य मृत्युदौ ॥ 709 ॥

दक्षवामविभागेन भागे यत्र [10]सुधोदि(ते)।
तिथीनां पञ्चदशके तत्र दंशो न भीतिदः ॥ 710 ॥

---

सर्पदंशफलं मघेति। दक्षवामविभागेन तिथीनां पञ्चदशके [11][कल]पिता सुधा अमृत[12]कला। यत्र शरीरभागे तत्र दंशश्चेन भीतिदः। [13]स्त्रीनोर्वामदक्षादित्वमुपदेशः।

---

1. M जलवृद्धिः शुभा प्रोक्तास्ततो
2. M "इन्दोवरि" इति श्लोकस्थाने - "आदित्यधातृभ मघोत्तरवायुपौष्ण-सर्पान् विहाय शशिशुर्क्रदिनर्क्ष लग्ने। रिक्ता भुजङ्गदशमीषु च रोगमुक्तः स्नानं वदन्ति मुनयः सुशुभे मुहूर्ते ॥" इति दृश्यते।
3. $T_1$, M सप्तम्यागिन्दु
4. M पाठः। M संवदिच्छुः
5. $T_1$ तदाचिदपि
6. $T_1$ नामलतै
7. M पाठः। T मनुष्याः
8. T स्त्री for त्रि
9. T नषअटस्य। M दृष्टस्य
10. T सुधोदिताः
11. T तत्पिता
12. $T_1$ काला
13. $T_1$ स्त्रीन्रोर्वा

उपदेशात्तु तत्स्थानं वेद्यं तत्सप्तमे [1]वि(षम्) ।
तत्र दंशः क्षणान्मृत्युं दद्यादिति सतां स्थितिः ॥ 711 ॥

अङ्गुष्ठेऽङ्घ्राविति श्लोकवशाद्वेद्या सुधाकला ।
अङ्गुष्ठेऽङ्घ्रौ [2]सन्धिजानुगुह्यनाभिषु हृत्कुचे ॥ 712 ॥

कण्ठनासाक्षिकर्णभ्रूमध्ये शङ्खेषु मूर्ध्नि च ।
तत्स्थानेऽमृत[3]बीजस्य [4]स्मृत्या सम्मर्दयेद्विषी ॥ 713 ॥

[5]चन्द्रेण युतनक्षत्रं [6]सु(धा)स्थाने प्रतिष्ठितम् ।
सप्तमर्क्षं विषस्थाने क्रमेणाङ्गेषु योजयेत् ॥ 714 ॥

शत्रोर्वैनाशिकदिनं क्ष्वेलस्थाने प्रतिष्ठितम् ।
तदा तं पुत्तलीकाङ्गे वेधयेत् [7]कण(टका)दिभिः ॥ 715 ॥

[A]शत्रोर्मरणमादेश्यं स्पर्शनेन मृतिं वदेत्
[8]आयुरारोग्यमैश्वर्यं ................ ॥ 716 ॥

---

तत्सप्तमे अमृतभागात्सप्तमे । शुक्लकृष्णयोरुध्वार्धगतीःस्तः । विषी विषरोगी । क्रमेणाङ्गेषु योजयेत्, [9]भा(नी)ति शेषः । प्रतिष्ठितं यदोति शेषः । पुत्तलीका प्रतिकृतिः । कण्टकादिभिर्वेधो मारणकर्मणि । तत्फलं मरणम् । स्पर्शनेनेति पुत्तलीप्रयोगशेषतया अथवा स्पर्शनं कण्टकस्पर्शनम् । केचित्तु तस्यां तस्यां तिथौ तत्तत्स्थानादारभ्य घटिकाद्वयेन सर्वावयवे चरत्यमृतमिति् वदन्ति ।

---

1. T विषमे
2. M पाठः । T सद्विजानु
3. M बीजन्तु
4. M स्मृत्वा
5. M "चन्द्रेण" इत्यारभ्य ततश्चतुर्थपङ्क्तिगत "कण्टकादिभिः" पर्यन्तं मातृकाया नास्ति ।
6. T सुधां
7. T कण्ठतादिभिः द्र.व्या.
8. T, तथा M मातृकायां इयं पङ्क्तिर्नास्ति ।
9. T भानिति

---

A. तिसृषु मातृकास्वपि श्लोकोऽयं अपूण दृश्यते ।

मृतिं वदेद्भास्करगोचरे भे
तिथ्योश्च तस्मान्नवमर्क्षयोश्च ।
व्याधिक्षयं वृक्षपरत्रिके च
रोगार्ति[1](म)न्येष्वपि रोगभाजाम् ॥ 717 ॥

पूर्वार्द्रावायुसर्पेन्द्रे व्याध्यारम्भो मृतिप्रदः ।
शतयाम्यहरित्वाष्ट्र [2]भेषु जीवेत् कराहतः ॥ 718 ॥

बुध्नितिष्यार्यमाम्बाजे सप्तरात्रेण जीवति ।
दस्राग्निमूले नवभि[3]र्मैत्रे पौष्णे च मासतः ॥ 719 ॥

[4]विश्वहस्तेन्दुवसुभे विशाखासु च पक्षतः ।
मघायां वासरे विंशे व्याधितस्तु सुखी भवेत् ॥ 720 ॥

क्रूरवारेण संयुक्ते विपत्प्रत्यरनैधने ।
चन्द्राष्टमे च संयुक्ते [5]उत्कटं [6]त्वशुभं भवेत् ॥ 721 ॥

## [इति] नैऋज्यविधिः ॥ अथ मातृपूजा ॥

आषाढे कार्तिके [7]मा[घे] मातृपूजनमुत्तमम् ।
षष्ठे चाश्वयुजे मार्गशीर्षे चाप्यधमं स्मृतम् ॥ 722 ॥

सेन्दुवारः कुहूः कृष्णसप्तमी रविवारगा ।
चतुर्दशी सारवारा कृष्णा [8]मात्रर्चने शुभा ॥ 723 ॥

---

रोगारम्भफलमाह - मृतिं वदेदिति । तिथ्योरिति वचनमूर्ध्वाधोविधिसिध्यर्थम् । [9](वृक्ष)परत्रिकं पञ्चमादिकं, क्षपरत्रिकंमेकादशादिकम् । क्षकारोऽत्र दशसंख्यावाचकः । तस्मादर्कारूढ़ [10]भा(त्) ऊर्ध्वमधश्च गणना कार्या । जीवति सुखी भवतीत्यर्थः । उत्कटमधिकम् । मातृपूजेति । मातृदेवतानां पूजा, सा काम्यक्रिया । मातरः सप्त । तासामेकैकश्च सप्त सप्त भवन्ति ।

---

1. M पाठः । T मान्ये
2. M पाठः । T मैत्रे जीवे तदा हतः ।
3. M मित्रपूष्णोस्तु कृछ्रतः
4. M पक्षः शूर्पार्कवसुषु वैश्वे सौम्ये क्रमासतः ।
5. M पाठः । T उत्कदं द्र.व्या.
6. M च शुभं for त्वशुभं
7. T माके । M माद्ये
8. M मात्रार्चने
9. T प्रपरत्रिकं
10. T भाक्

पूर्वं षड्दिनमभ्यर्च्य तदा [1]पूजा समाप्यताम् ।
[2]लाकेऽस्मिन् मङ्गलं नास्ति मातृपूजनतोऽ[3]धिकम् ॥ 724 ॥

## [इति] मातृपूजा ॥ अथ पवित्रारोहणम्

त्रिष्वाषाढादिमासेषु पवित्रा[4]रोहणं मतम् ।
शिवस्य शस्तमष्टम्यां पक्षयोरुभयोरपि ॥ 725 ॥

त्रयोदश्यां चतुर्दश्यां पञ्चदश्यामथापि वा ।
एकादश्यां मुकुन्दस्य पञ्चदश्यामथापि वा ॥ 726 ॥

[5]देव्या [6]नव(म्यां) दुर्गायाश्चतुर्थ्यां तु गणेशितुः ।
अन्येषामपि देवानां तिथिषु स्वासु शस्यते ॥ 727 ॥
राश्याद्यत्र न [7]वाञ्छन्ति पवित्रारोहणे बुधाः ।

## इति पवित्रारोहणम् ॥ अथाभिचारकयोगाः

ऋक्षे बिलेऽथवा शत्रुजन्मर्क्षे वा कुहूयुते ।
कुर्याद्विषघटीष्वेव शत्रूणामाभि[8]चारकम् ॥ 728 ॥

भरण्यां संयुते क्रूरवारे [9]पू(र्वा)त्रयेण वा ।
गुलिके विष्टियामे च प्रयुज्यादाभिचारकम् ॥ 729 ॥

[10]मागधी नवनिष्का स्यादूषणं [11]पलसम्मितम् ।
[12]दिक्पलं वह्निरखिलं तदर्धं सूरणं [13]द्विकम् ॥ 730 ॥

---

पवित्रारोहणमिति देवपूजाविशेषः । ऋक्षे [14](बि)ले इत्या[15](भि)चारकविधिः । अष्टविषाख्यं चूर्णयोगमाह - मागधी नवेति । मागधी पिप्पली । ऊषणं मारिचम् । वह्निश्चित्रकम् । अखिलं विश्वभेषजम् ।

---

1. $T_1$ पूज
2. M पाठः । T योगे
3. M पाठः । T
4. M रोपणं
5. $T_1$ देव्यौ
6. T नवम्या
7. $T_1$ वाज्जन्ति
8. M चारकः
9. T पूर्व
10. T मगधि द्र.व्या.
11. $T_1$ फल
12. $T_1$ दिक्फलं
13. M द्वितम्
14. T विले द्र.मू.
15. T इत्यादिचार

**पलत्रयं [1]हेम लोणं [2]पलं षड्ग्रहकन्यका।**
**एतच्चूर्णं दारुणानां कर्मणामास्पदं परम् ॥ 731 ॥**
**द्विकेति [3]द्विपलस्योक्तिर्योगोऽयं स्याद्गराष्टके।**
**इत्याभिचारकयोगः ॥**

**सावित्र्य[4]श्रवणविशाखयाम्यपैत्र्ये**
**[5]पादेऽन्त्ये नवमकुलीरवृश्चिकेषु।**
**गृह्णीयात्प[6]लमथवा मृदं तदीयं**
**[7]प्रत्य(र्थी) न विवदेद्विवादभूमौ ॥ 732 ॥**

**स्वातीमघाप्रोष्ठपदानुराधा-**
**[8]त्रिरोहिणीष्विन्दुसितोदये वा।**
**[9]मृद्भक्षयित्वा [10]प्रति(वा)द[11]भूमौ**
**[12]विष्णोर्बलं स्याद्भुवनत्रयं च ॥ 733 ॥**

**[13]तिष्याहिर्बुध्निमैत्राणामारांशे युग्मचापयोः।**
**[14]खने(न्नि)र्गुण्डिकीले [15]द्वे ग्राह्यो वा [16]मृत्पले भवः ॥ 734 ॥**

---

सूरणं वनसूरणम्। हेम धुर्द्धूरं सुवर्णमत्ताख्यो वा। लोणं लवणम्। ग्रहकन्यका धूमरेणुः। अथ विवादभूमिं स्वकीयां कर्तुं [17]मृ(द्ग्र)हणादिप्रयोगकालमाह **सावित्र्येति**। प्रयोगेषु सर्वेषु मन्त्रयन्त्रादय उपदेशाद्वेद्याः। **स्वातीति**। मृद्भक्षयित्वा विवादभूमेः स्वामी स्यात्। यथा विष्णोर्बलं भुवनत्रयं स्ववशमकरोत्तथास्य प्रयोगस्य बलमपि इति योज्यम्। निर्गुण्डिः कृष्णनिर्गुण्डिः। कीलद्वये यत्र लेखनं च।

---

1. $T_1$ नेम द्र.व्या.
2. $T_1$ फलं
3. M पाठः। T द्विपद
4. M श्रवणभशूर्पयाम्य
5. $T_1$ पादोऽन्त्ये
6. T फल
7. T प्रत्यथी
8. M पाठः। T त्रिरोहिणी जन्द्रसितो
9. M मृद्भक्षणाद्वा
10. T प्रतिपाद
11. M भूमि
12. M विष्णोस्त्रिलोकी बलिना ह्रतेव।
13. M पाठः। T तिष्यादिर्बुध्नि
14. T खनेर्निर्गुण्डि
    M खनेर्लिगुण्डि
15. M द्वो for द्वे
16. $T_1$ दृक्फले
17. T मृद्गुह

ऐन्द्राग्निकृत्तिकाश्लेषा[1]शाक्रप्रथमवैष्णवे।
आहिर्बुध्न्ये च तल्लग्ने मुष्टिमात्रं हरेत्पलम् ॥ 735 ॥
सस्यं क्षुरिकया लूनं जिह्वां वारयते रिपोः।
दुर्दान्तान्वृषहस्त्यादीनस्मिन्नेव नियोजयेत् ॥ 736 ॥
[2]सूक्ष्मदान्ता भवन्त्येते योगमाहात्म्यतः स्फुटम्।
वितस्तिमात्रं [3]धनुरग्निमन्थं
निर्गुण्डिबाणं खरवारयोगम्।
मन्दोदये केन्द्रगते च जीवे
न्यसेच्च [4]भूमौ रिपुनाशनार्थम् ॥ 737 ॥
[5]अ(श्विद्रुमू)लरुट्क्षुत्वं [6]तत(प)ञ्चाङ्गं च सर्षपम्।
लशुनं हिङ्गुपथ्यां च चूर्णितं कौर्चकेसरे ॥ 738 ॥
कपाले न्यस्य [7](पि)शितं कपालान्तरयोगतः।
कृत्वा वामं परिक्रम्य कार्तवीर्यमनुं जपन् ॥ 739 ॥
त्रिशः सकृद्वा [8]भूमध्यं प्रविश्य स्थानकल्पनम्।
कृत्वाथ [9](पो)त्रिणां तत्र प्रवेशं च [10]प्रकल्प्य च ॥ 740 ॥

---

क्षुरिकया लूनं शस्त्रेण छिन्नम्। दुर्दान्तान् अवशं गतान्। अत्रापि [11]मन्त्रादिवेद्यम्। वितस्तिर्द्वादशाङ्गुलः। धनुरग्निमन्थाख्येन द्रुमेण दशमूलाख्यद्रव्ये पठितेन कृतं बाणं निर्गुण्डीकृतं खरस्य वालेनास्य जीवायोगः ऊर्ध्वाग्रं। अश्विद्रुः कारस्करः। तन्मूलसम्भवं [12]क्षुत्वं छात्रकाख्यमौद्भिदद्रव्यम्। पञ्चाङ्गं। कौर्चकेसरे नालिकेरकपाले पिशितं विधानं कृतत्वेति। प्रतिपत्ति[13]भेदो वा। पोत्रिणां वराहाणाम्। तत्र कल्पितस्थाने। एतत्कर्म वराहबाधाहरम्।

---

1. M शक्र, $T_1$ शार्क
2. M सुष्ठुदान्ता for सूक्ष्मदान्ता
3. M त धनुरादिमस्थं द्र.व्या.
4. $T_1$ भूमो
5. T अश्वीन्द्रमूल द्र.व्या.
6. T तत्वं चाङ्गं च सर्षपम् द्र.व्या.
7. T विशितं M विहितं द्र.व्या.
8. M भ्रूमध्यं
9. T पौत्रिणां द्र.व्या.
10. $T_1$ प्रकल्प
11. $T_1$ मन्त्रा वेद्यम्
12. $T_1$ क्षुत्कं
13. $T_1$ भेदे वा

निखनेन्मेदिनीमध्ये तच्चूर्णमथ [1]पञ्चशे ।
दिने गते तु चूर्णं तदुद्धृत्यान्यत्र निक्षिपेत् ॥ 741 ॥

अन्यथा तद्गतं [2]व(स्तु) सर्वं तिक्तरसं भवेत् ।
कोलोपेते [3]भुवि च निखनेत् कृष्णमुद्गस्य चूर्णं
मूर्तीकृत्वा विषतरुदलैः सप्तभिः [4]तत्समानम् ।
[5](छि)न्नं भूयश्च[6A]टुकल(ता) किंशुकानां दलैश्च
कुर्यादेतत् कुजदिनभवे [7]बौधवारे च विष्ट्याम् ॥ 742 ॥

[8]मनुष्याकृति वाप्यत्र मूर्तिशब्दः स्मृतो बुधैः ।
चटुकानां किंशुकानां सप्तसंख्याप्तमीप्सितम् ॥ 743 ॥

मन्दचन्द्रौ यदैकांशे रक्तपाषाण[9]सम्भवात् ।
तदेष्टिकां तु निर्माय विवादभुवि तां खनेत् ॥ 744 ॥

[10]संवदेत्सह[11] चेदेवं [12]मृत्तिकां भक्षयेत्तदा ।
[13]यत्ताराशशनिस्तस्यास्ताराया उदये सति ॥ 745 ॥

---

[14]पञ्च(शे)दिने पञ्चदिने षड्दिने वा गते उद्धरणं तिक्ततापरिहारार्थम् । कोलोपेते वराहबाधायुते । मूर्तिर्वराहस्य रूपम् । विषतरुः कारस्करः । तत्समानं कोलसमानम् । पटुकलता अलाबुलता । सा [15]वनोद्भवा, तिक्तरसा च । तत्पत्रैरित्यर्थः । किंशुकः प्रसिद्धः कण्डकिवृक्षः ।

---

1. $T_1$ पञ्चमे
2. T वस्तुं
3. M क्षितिषु for भुवि च
4. M तत्प्रमाणैः
5. M पाठः । T जन्नं
6. T चटुकल for चटुकलता
7. $T_1$ बोधवारे
8. "मनुष्याकृति" इत्यारभ्य "सप्तसंख्याप्तमीप्सितम्" पर्यन्तं M पाठः । T तथा $T_1$ मातृकयोः अयं श्लोकं नास्ति ।
9. M पाठः । T सम्भवाः
10. M पाठः । T सम्भवाः
11. M न चेदेव for ह चेदेवं
12. M कृत्तिकां
13. M पाठः । T यत्तारास्यर्गनिस्तस्य
14. T पञ्चमे द्र.मू.
15. $T_1$ सावनोद्धा for सावनोद्भवा

---

A. अत्र मूले "चटुकलता" तथा व्याख्याने पटुकलता इति च दृश्यते । उभयोर्मध्ये को वा शुद्धः पाठ इति चिन्त्यम् ।

अश्मकिट्टं [1]चक्रजप्तं निधायाच्छादयेदथ।
आगच्छेदनवेक्ष्यैव प्रत्यर्थी नैव बाधते॥ 746॥

[2]बाधते चेद्व्रातरोगी तत्क्षेत्रेऽ[3]प्यर्पणात् स्फुटम्।
अष्टम्यां शुक्लपक्षे मृगपतिधनुषी मेषमाश्रित्यनाथे
[4]कुर्वत्यह्नां दिनेशे गतवति वियतो मध्यमाशामुदीचीम्।
[5]पश्येत् क्षेत्रे निरुद्धे दशपलममलं शुक्ल[6]मश्मानमेकं
कुर्याच्छन्नं निखातं रजनिकृदुदये [7]यद्यरातेर्ज्वरः स्यात्॥ 747॥

सिंहस्य पञ्चमांशस्थे सूर्येऽर्धोदयसंयुते।
गृहीत्वा पञ्चपालाशात् कीलान्मध्ये गृहस्य च॥ 748॥

[8]प्राच्यां दक्षे प्रतीच्यां च निखनेन्दोश्च भागके।?
यथा क्रमं विनिर्गच्छेद्वाग्यतो भीर्न कापि च॥ 749॥

---

[9]अ(श्म)किट्टं कृष्णलोहमलम्। तच्च दशबलादधिकमानम्। चक्रजप्तं चक्रमन्त्रजप्तम्। आच्छादयेत् पञ्चगव्यपद्म[10]पत्राभ्यां मद्भिश्च। तत्क्षेत्रेऽपि शत्रोः क्षेत्रे [11]निखातमेव वा अन्यद्वा स्थाप्यं किल। अष्टम्यामिति। [12]अ(ह्नां)नाथे यथोक्तराशिमाश्रित्यं चारं कुर्वति सति शुक्लपक्षेऽ[13]ष्ट(म्यां) (वि)यतो मध्यं गतवति दिनेशे इति योज्यम्। अरातेः विवादं कुर्वतः। शेषं सुगमम्। पञ्चपालाशात् [14](की)लात्। एतस्य तरोः दिक्चतुष्टयगतैर्बहिर्भागैः चतुर्भिश्चत्वारः। मध्यभोगेनैकः। इति पञ्च।

---

1. $T_1$ चार्कजप्तं
2. $T_1$ बाधन्ते
3. M त्यर्पणात् द्र.व्या.
4. $T_1$ कुर्वत्यन्नां
5. $T_1$ पाठः। T पश्यत्
6. $T_1$ मश्मन
7. M यद्यरात्रे
8. प्राच्यां दक्षे इत्यारभ्य ततश्चतुर्थपङ्क्तिगात "विधूदये" पर्यन्तं $T_1$ मातृकायां अस्पष्टं, अपूर्णं च अधोनिर्दिष्टरुपेण दृश्यते। "प्राच्यां दये सर्वरक्षणं बुध्नौ। रक्षोटजं कुर्याद्विधुवारे विधूदये"
9. T अश्वकिट्टं द्र.मू.
10. $T_1$ पत्राख्या
11. $T_1$ शिखातमेव
12. T अन्नानाथे द्र.मू.
13. T अष्टम्यापि यतो मध्यं द्र.मू.
14. T किलात् द्र.मू.

**चापमीनस्थितस्येन्दोरुदये सर्वरक्षणम् ।**
**वुध्नौ [1]रक्षोटजं कुर्याद्विधुवारे विधूदये ॥ 750 ॥**

**अर्केण सहिते भौमे बुधे वा लग्नमागते ।**
**[2]प्रत्यर्थिना सुसम्भाष्यं मित्रं कुर्याद्विचक्षणः ॥ 751 ॥**

**गुरुर्लग्नेऽ[3]स्तगो रक्तः [4]शुक्रो लग्नेऽस्तगः शशी ।**
**[5]सितो लग्ने [6]रि(पौ)मन्दे मित्रयोगास्त्रयः स्मृताः ॥ 752 ॥**

**मैत्रद्वितीयांशकसम्प्र[7]युक्ते**
**चन्द्रोदये मैत्रमुहूर्तयोगे ।**
**स्वल्पप्रदानादृणकोटि[8]नाशं**
**शत्रुं च मित्रं कु ो क्षणेन ॥ 753 ॥**

**धनुर्मीनाजसंस्थार्कलग्ने बन्धुगते गुरौ ।**
**जप्त्वा प्राचेतसं बीजं यं वा स्पृशति येन वा ॥ 754 ॥**

**सह सम्भाषणं कुर्यादरातिश्च [9]वशे भवेत् ।**
**शूर्पे सितदिने तस्य लग्ने दृष्टो यथा रिपुः ॥ 755 ॥**

**जीवे लग्ने सुखे चन्द्रशुक्रयोः शत्रुणा सह ।**
**यदि सम्भाषणं कुर्यान्मित्रं भवति स ध्रुवम् ॥ 756 ॥**

---

द्भागे तत्तत्स्थाने प्राग्वदवस्थानं स्थापयेत् । यन्त्रं च कार्यम् । वाग्यतः
ाषमाणस्य । रक्षार्थं कृतं [10](गृहं) रक्षोटजमित्युच्यते । रक्तः कुजः ।

---

$T_1$ पाठः । T रक्षोभयं द्र.व्या.
प्रत्यर्थी नासु सम्भाव्य
M पाठः । T तरो रक्तः
M पाठः । T शुक्रे
M सिते

6. T रिपो
7. M पाठः । T युक्त
8. M पाठः । T नाशः
9. M वशगो for वशे
10. T ग्रहः

लक्ष्मी राज्यशमी जनाबलिखुर[1]ब्राह्मीस भाख्या घटी
तत्कालेष्वनलादिसिंहकरणेष्वैन्द्रादि [2]दिक्षु क्रमात् ।

[3]स्मृत्वोदुम्बरबिल्वविष्टिककुभावैकङ्कतारम्भिका
वंशं वा [4]नलिनं खनेन्मृगपशुद्रोहावहत्यैक्षणात् ।। 757 ।।

व्याघ्रा भोगी जटारम्भा राज्यकामो वने शशी ।
पूर्वपक्षे द्वीतीयाद्या व्याघ्रस्य करणोदयाः ।। 758 ।।

ज्ञायात् क्रमेण याम्यादि दिक्षुसंस्थाः [5]क्रमाद्गताः ।
सूर्यार्किकुजवारेषु युक्ताश्चैव विशेषतः ।। 759 ।।

अम्बष्ठ[6]शाल्मलीनागजम्बीरखदिरार्जुनाः ।
व्याघातमवितानं च व्याघ्रवृक्षाः प्रकीर्तिताः ।। 760 ।।

तेषामेकतमे काले तद्वृक्षं स्थापितं दिशि ।
क्षेत्रमध्ये गृहे वापि तथा मूलफलेषु च ।। 761 ।।

---

[A]प्रतिपत्पञ्चम्यादिषु स्थि[7]तसिंहकरणस्योकालौ उदयकालभाजिताम-क्षरद्वये राज्यशमी इत्यादिभिः । तत्कालेष्विति तत्प्रयोगमाह । विष्टिवेद्धिककुभनिर्गम वा नलिनं तामख्याघ्रस्योदयकालमाह । [8]व्याघ्रा इति द्वितीयाद्या यथोक्तनाडिकामानपरिमिता द्वितीयापञ्चम्यादयो व्याघ्रकरणोदयाः स्युः । क्रमाद्गताः तिथिषु क्रमाद्गताः । सूर्यादिवारेषु युक्ताः गताः विशेषतः फलदा इति शेषः । नागं नाकम्बी ([B9]चोनकहारङ्गा) । अर्जुनं नीरमरुतव्याघातम् । अवितानं (वीपजम्बीरम्) चोनकनारकं

---

1. M पाठः । T ब्रह्मी
2. $T_1$ भिक्षु for दिक्षु
3. M स्मर्त्वा
4. M तलकं द्र.व्या.
5. M क्रमोद्गताः द्र.व्या.
6. M पाठः । T शान्मली
7. "स्थित" इत्यारभ्य ततः चतुर्थपङ्क्तिगतं कालमाह । पर्यन्तं $T_1$ मातृकायां नास्ति ।
8. $T_1$ व्याघ्राकृति for व्याघ्रा इति
9. $T_1$ चोनकनारङ्गा

---

A. अत्र व्याख्यानं अस्पष्टं बह्वशुद्धं चास्ति । ग्रन्थान्तरेषु प्रसिद्धेषु विषयस्यास्य कथनाभावात् अत्र शोधनं दुष्करं वर्तते । "लक्ष्मी राज्यशमी" इत्यस्य श्लोकस्य व्याख्यानवत् भाति ।

B. अत्र कंसमध्ये दत्तानि पदानि ग्रन्थकर्तुः स्वभाषागतानि भवेयुः ।

राजचोरमृगादिभ्यः सर्वरक्षा भविष्यति ।
यस्य यस्य [1](श)कृच्छेषं व्याघ्रहस्तेन तत्कृतम् ॥ 762 ॥

मृदंशकृच्च तस्यैव विशालफलमध्यमे ।
संयुक्ते करणे तस्य तत्काले गुलिकेऽपि वा ॥ 763 ॥

तत्कालेऽपि धा योगे तस्य मार्गे गृहेऽपि वा ।
निरवनेच्च ततस्तेन बाध्यन्तेऽ[2]हर्नि(शं) तथा ॥ 764 ॥

कुजवारे तु निखनेत्त[3]द्रा(ष्ट्रं) व्याघ्र[4]पी(डि)तम् ।
व्याघ्रयोगे कृतं यत्तु तत्सर्वं च विनश्यति ॥ 765 ॥

**अथ मृद्ग्रहयोगाः ॥**

सपञ्चगव्यरक्ताब्जनिधानाद्ग्रहणे खेः ।
नागयोगे सिताब्जस्य सगव्यस्य समर्पणात् ॥ 766 ॥

स च सार्पैर्मुहूर्तर्क्षकरणैः सह सङ्गमः ।
स्वे शुक्रेऽङ्गाम्बुगे चन्द्रे लग्नेऽङ्गिरसि मृद्ग्रहात् ॥ 767 ॥

श्रोणाशूर्पमघान्त्येऽलिकर्किलग्ने धनग्रहात् ।
[5]मध्याह्ने पञ्चमी स्वाती शनिवारेषु मृद्ग्रहात् ॥ 768 ॥

---

यस्य यस्य शकृदित्यादिकस्य सार्धस्य श्लोक[6]त्रयस्या(र्थो) गुरुपरम्परातोऽस्माभिर्न लब्धः । तथापि ग्रन्थतः प्रतीतं प्रदर्शयामः । यस्य वराहादेर्मृगस्य शकृत् व्याघ्रस्य हस्तेन शेषं कृतः, व्याघ्रस्य सञ्चारकाले व्याघ्रहस्तेन स्पृष्टमिति यावत्तच्छकृच्छेषम् । तस्य [7]मृदंशकृत् स्थानगतं मृदं च । विशालफलमध्यमे इन्द्रवारुणीसंज्ञितलतायाः फलस्यान्तः संस्थाप्य यथोक्तकाले तस्य वराहादेर्मार्गे, [8]गृहे सस्यस्थाने वा निखनेदिति योजना । तदा तेन व्याघ्रेण ते मृगा अहर्निशं बाध्यन्ते इति च योज्यम् । एवं ग्रन्थतः प्रतीतम् । सपञ्चगव्येत्यादिभिर्द्वाविंशतियोगा उक्ताः । स चेति नागयेगः । सङ्गमः प्राप्तिः । स च कालस्य । श्रोणाशूर्पमखान्त्ये इति श्लोकार्धेन त्रयो योगाः ।

---

1. T सकृच्छेषं द्र.व्या.
2. T र्निशां द्र.व्या.
3. T तद्राष्ट्रं
4. T पीठितम्
5. $T_1$ "मध्याहने" इत्यारभ्य ततः पञ्चमपङ्क्तिगात "मृद्ग्रहात्" पर्यन्तं मातृकायां न दृश्यते ।
6. T त्रयस्यार्थो
7. T मृदङ्गकृत् । $T_1$ पाठः ।
8. $T_1$ शहे for गृहे

घटे घटांशके मन्दे तद्वारे चेष्टतार्पणात् ।
यत्नाबन्धुमतस्थेषु [1]शुक्रे(न्द्वा)र्किषु मृद्ग्रहात् ॥ 769 ॥

[A]रोहिण्यां सेन्दुजीवेंऽशे तन्मृतस्वर्भेर्पणात् ।
लग्नबन्धुमतस्थेषु [2]शुक्रे(न्द्वा)र्किषु मृद्ग्रहात् ॥ 770 ॥

चन्द्रोदये तु रोहिण्यां विवादभुविकर्षणात् ।
सकुजेहि बुधे वार्के लग्नसंस्थे विवादतः ॥ 771 ॥

जन्मन्यष्टमभे वारे चुल्या [3]न्यासेन तन्मृदः ।
न्यासात्तन्मृ[4]त्कृतस्या(रेः) हस्ते चन्द्रोदयेऽवटे ॥ 772 ॥

मघान्त्यपादगेऽङ्गस्थे चन्द्रे चुल्यां मृदर्पणात् ।
शशिन्येकाङ्घ्रिगान्त्यांशगतेऽङ्गस्थे च मृद्ग्रहात् ॥ 773 ॥

अजाजैकपदस्थस्य ग्रहणेऽर्कस्य मृद्ग्रहात् ।
षष्ठेऽर्के लाभगे [5](पा)पे बुधे [6]त्रिस्थे विवादतः ॥ 774 ॥

शनौ [7]विक्रमगे राहौ लाभगे मृत्तिकाशनात् ।
ग्रहेषु दिग्बलस्थेषु [8]मृद्ग्रहाद्राहुरार्किवत् ॥ 775 ॥

---

[B]इष्टिकाकलशकारमृदाकृता वृत्ता रक्तीकृता सयन्त्रा च । तन्मृदः विवादभूमृदः । विवादतः विवादकर्मणा । तन्मृत्कृतस्यारेः विवादभूमृदानिर्मितस्य शत्रुप्रतिरूपस्य न्यासात् । अवटे खाते । [9]रा(हुरार्कि)वत् । सप्तमे [10]राहोर्दिग्बलमित्यर्थः ।

---

1. T शुक्रेन्दुचार्किषु
2. T शुक्रेन्यार्किषु
3. $T_1$ तथा M न्यायेन
4. T कृतस्यारौ द्र.व्या.
5. $T_1$ पाठः । T वापे
6. $T_1$ त्रिस्थेऽपि वादतः
7. $T_1$ विक्रमग्रे राहो
8. $T_1$ ग्रहा for मृद्ग्रहा
9. T राउरातिवत् द्र.मू.
10. $T_1$ राहादिबलं

---

A. अत्र छन्दोभङ्ग दृश्यते ।
B. व्याख्यागतमिदं वाक्यं मूले नान्वेति । अस्य मूलं नष्टं वा ।

शुक्रेन्द्वार्यार्कसौम्यार्किकुजानां क्रमशो दिने।
करणेषु [1]ब(वा)दीनां स्वोदये मृद्ग्रहाः शुभाः ॥ 776 ॥
योगा द्वाविंशतिः शस्ताः स्वकीयां कुर्वते भुवम्।

[इति] मृद्ग्रहयोगाः ॥ अथ करणविषयः ॥

स्वकालः करणं वारो नक्षत्रतिथयो ग्रहाः।
[2]राशयो योगताराश्च क्रमादेतेऽष्ट दुर्बलाः ॥ 777 ॥

इन्द्रो ब्रह्मा च [3]मित्रश्च [4]अर्यमा(भू)स्त थेन्दिरा।
मृत्युः [A]सिंहादिवस्तिष्य उक्षा सर्पस्तथानिलः ॥ 778 ॥

[5]भूतान्ता(द)र्धतिथिपाः सिंहे स्यात् पौष्टिकं स्थिरम्।
व्याघ्रे द्विजहितं कर्म कोले मित्रहिता क्रिया ॥ 779 ॥

[6]खरे सौभाग्यजननं गजे बल्यं च कर्षणम्।
गवि स्थिरं क्रियदिश्च शुनि पापां विषादि च ॥ 780 ॥

मन्त्रौषधानि शकुनौ च सपौष्टिकानि
गोविप्रराज्यपितृकर्म चतुष्पदे तु।
सौभाग्यदारुणहृदि ध्रुवकर्म नागे
[7]किंस्तुघ्ननाम्नि शुभपौष्टिकमङ्गलानि ॥ 781 ॥

---

[8]शुक्रेन्द्रार्येति श्लोकेन चैकः। एवं द्वाविंशतित्वं कल्प्यम्। स्वकालः इत्यष्टाङ्गबलक्रमः। तद्विवरणमुपरिष्टात् करिष्यति। करणदेवतां तत्कार्यं चाह - इन्द्र इत्यादिना। [9]अ(र्ध)तिथिर्करणम्।

---

1. T बबादीनां
2. $T_1$ ईशयो
3. $T_1$ मित्रा च
4. T अर्यमाहूस्त
5. T भूतान्ताद्यर्घ
6. $T_1$ खड्ग
7. $T_1$ किस्तुघ्न
8. $T_1$ शुक्लेन्द्वार्येति द्र.मू.
9. T अर्थतिथि, $T_1$ अन्धतिथि

---

A. अत्र शकुनिचतुष्पदकरणयोः वाचकपदे चिन्त्ये। अत्र तु "सिंहादिवस्तिष्य उक्षा इति अस्पष्टं विद्यते।

## अथ तिथिविषयः ॥

हुतभूगजधनेशविघ्नलक्ष्मी-
शरवणजन्मारवीश्वरास्तु दुर्गा ।
शतमखयमविष्णुकामरुद्राः
सहिमकरास्तिथिदेवताः क्रमेण ॥ 782 ॥

अग्निर्दस्रावुमाविघ्नो नागः स्कन्दो दिवाकरः ।
मातृदुर्गादिशोऽर्येशो विष्णुर्वैवस्वतः शिवः ॥ 783 ॥

पितरश्च क्रमादेते बहुले तिथिदेवताः ।
नन्दा भद्रा जया रिक्ता पूर्णा [1]चैवानलात् क्रमात् ॥ 784 ॥

वास्तु चित्रसवं [2][नृ]त्तं [3]नन्दायां शोभनं भवेत् ।
भद्रासु [4][भू]षा शकटमुद्वाहा पौष्टिकी क्रिया ॥ 785 ॥

सेनोद्योगं जयासु स्याद्बलाधानं च तत्र च ।
रिक्तासु शत्रुनाशः [5]स्याद्रेर्काक्ष्वेलाग्निकर्म च ?॥ 786 ॥

पूर्णासु यात्रा माङ्गल्यं शान्तिपुष्टिकरी क्रिया ।
पितृ[6]क(र्म) [7]विहाया(न्यत्र) दर्शे कर्म शोभनम् ॥ 787 ॥

[A]रल्लः [8]कृष्णेऽ(पि) नो मेने [9]दोष(दा)त्रीं त्रयोदशीम् ।
द्वादशे द्वितये चापि स्वर्गेप्सुर्नचरेत्ति[10]ला(न्) ॥ 788 ॥

---

तिथिदेवं तत्संज्ञां तत्कर्म चाह - हुतभुगित्यादिना । शरवणजन्मा षण्मुखः । रल्पः इत्येकः आचार्यः । स तु कृष्णपक्षे त्रयोदशी[11]म(पि) दोषदातृत्वान्न [12]शुभां मेने ।

---

1. T चैव नलात्
2. T वृत्तं
3. $T_1$ नन्दायात्
4. T पूषा
5. $T_1$ स्याभ्रेर्का
6. T कर्मा
7. T विहायान्या न
8. T कृष्णे विनो मेने
9. T दोषतात्रीं
10. T लां for लान्
11. T मविदेषा
12. $T_1$ शभां

---

A. अत्र मूले "रल्लः" इति तथा व्याख्याने "रल्पः" इति च दृश्यते । उभयो र्मध्ये काः पाठः साधु इति निर्णयः दुष्करः । अथवा प्रसिद्धः लल्लाचार्यो वा ।

[1]एकान्त(रा) दिनकरे तिथयो द्वितीया-
पूर्वा धनुःशफरयोर्वृषकुम्भयोश्च।
कर्क्याजयोश्च मिथुनाबलयोर्मृगेन्द्र-
[2]कोर्प्यो[3]स्तुलामकरयोश्च भवन्ति दग्धाः ॥ 789 ॥

अथ वारविषयः ॥

सूर्यादितः शिवगु[4](हौ) शिववष्णुकेन्द्र-
कालाः क्रमेण पतयः कथिता ग्रहाणाम्।
बहन्यम्बुभूमिहरि[5](श)क्रशशी[6]विरि(ञ्च्य)-
[7]स्तेषां पुनर्मुनिवरैः प्रतिदेवताश्च ॥ 790 ॥

राजाभिषेकोत्सवयानसेवा-
गोवह्निमन्त्रौषधशस्तकर्म।
सुवर्णताम्रोर्मिकचर्मकाष्ठ-
सङ्ग्रामवह्न्यादि खौ विदध्यात् ॥ 791 ॥

शाखाब्जमुक्तारजतेक्षु भोज्य-
स्त्रीवृष्यकृष्यम्बुविभूषणाद्यम्।
गीतक्रतुक्षीरविकारश्रृङ्गि-
[A]पुष्याम्ब[8]रारम्भणमिन्दुवारे ॥ 792 ॥

---

एकान्तराः समसंख्या इत्यर्थः। दिनकरे [9]धनुःशफरादिराशिद्वन्द्वेषु स्थिते। वारदेवतां तत्कर्म चाह- सूर्यादित इति। को ब्रह्मा। ग्रहाणां [10]वारत्मकानाम्। ऊर्मिकमङ्गुलीयकम्।

---

1. T एकान्तरो
2. $T_1$ कार्प्यो
3. $T_1$ तुलारकरयोश्च T तुलामकयोश्च
4. गुहा
5. T शुक्र
6. T विरिञ्चा
7. $T_1$ हि तेषां
8. $T_1$ णारम्भण
9. $T_1$ यनुः
10. $T_1$ वागात्मकानम्

---

A. अत्र ''पुष्ट्याम्बारारम्भण'' इति भवेद्वा।

भेदानृतस्तेयविषाग्निशस्त्र-
[1]बन्धा(भि)घाताहव[2]शा(ठ्य)डम्भाः ।
सेनानिवेशाकरधातुहेम-
प्रवालकार्यादि कुजे च कुर्यात् ॥ 793 ॥
नैपुण्यपण्याध्ययनं [3]कलाश्च
[4]शिल्पादिसेवालिपिलेखनानि ।
धातुक्रियाकाञ्चनयुक्तिसन्धि-
व्यायामवादांश्च बुधे निदध्यात् ॥ 794 ॥
धर्मक्रियापौष्टिकयज्ञविद्या-
[5](मा)ङ्गल्यहोमाम्बरवेश्मयात्राः ।
[6]रथाश्च भैषज्यविभूषणादि-
[7]का(र्यं) (वि)दध्यात्सुरमन्त्रिवारे ॥ 795 ॥
स्त्रीगीतशय्यामणिरत्नगन्ध
वस्त्रोत्सवालङ्करणादिकर्म ।
भूपण्यगोकेश[8](कृ)षि[9]क्रियाश्च
सिध्यन्ति शुक्रस्य दिने समस्ताः ॥ 796 ॥
[9a]लोहाश्म[10]सी(स)त्रपु[A]रास्रदास-
[11]पा(पा)नृतक्रूरविषासवाद्यम् ।
गृहप्रवेशद्विपबन्धुदीक्षा-
स्थिरं च कर्मार्किदिने च कुर्यात् ॥ 797 ॥

---

आकरं द्रव्याणामुत्पत्तिस्थानम् । धातुर्मनःशिलादि । युक्तिः द्रव्ययोगः । सन्धिरेकमतित्वम् । अथवा लाक्षिकादियुक्तिद्रव्यं युक्तिः । सीसं लोहभेदः । तथा त्रपु च ।

---

1. T बन्धादिघात
2. T शाढ्यडम्भाः
3. $T_1$ कलश्च
4. $T_1$ पाठः । T शित्वा
5. T मङ्गल्य
6. $T_1$ स्थाश्च for रथाश्च
7. T कार्याद्विदध्या
8. T क्रिषि
9. $T_1$ कृया
9a. $T_1$ लोश्मसीत
10. T सीत द्र.व्या.
11. T पापनृत

---

A. अत्र "शस्त्र" इति भवेद्वा ।

वारप्रवृत्तिर्मुनयो वदन्ति
[1]सूर्योद(याद्रा)वणराजधान्याम् ।
ऊर्ध्वं [2]तथाधोऽप्यपरत्र तस्मा-
त्परार्धदेशान्तरनाडिकाभिः ॥ 798 ॥

वारग्रहस्थोपचयोगगस्य
[3]कार्यं यथोद्दिष्टमुपैति सिद्धिम् ।
भवेत्तदैवापचयप्रदस्य
प्रयत्नतो निर्मितमप्यसाध्यम् ॥ 799 ॥

सोमसौम्यगुरुशुक्रवासराः
सर्वकर्मसु भवन्ति शोभनाः ।
भानुभौमशनिवासरेषु तु
प्रोक्तमेव खलु कर्म सिध्यति ॥ 800 ॥

शस्तो हि लाक्षारसरञ्जनेऽर्को
माञ्जिष्ठकौसुम्भकरागयोश्च ।
महीसुतः काञ्चन[4]भूष(णे)षु
पतङ्गसूनुः पणलोहकृत्यौ ॥ 801 ॥

नृपदृष्टौ सर्वकर्मण्याहवे शास्त्रबोधने ।
विवाहे च प्रयाणे च दीक्षायां च क्रमेण तु ॥ 802 ॥

ख्यादीनां बलं चिन्त्यं बलिष्ठेष्वेषु तद्दिने ।
तल्लग्ने चोपचयगैस्तैर्वा विच्छेदवर्जितम् ॥ 803 ॥

## अथ नक्षत्रविषयः ॥

दिनेष्वष्टसु तत्तत् स्यात् कर्मसिद्धिप्रदं स्फुटम् ।
[5]द(स्रौ) यमोऽनलो धाता शशी रुद्रोऽदितिर्गुरुः ॥ 804 ॥

---

प्रवृत्तिरारम्भः । ऊर्ध्वं अधोऽपीति लग्नोदयकालसिध्यर्थमेव । पापवारे प्रोक्तमेवेति वचनादुक्तशेषं दर्शयति शस्त इति । नक्षत्रदेवतामाह – **दस्रतविति** ।

---

1. T सूर्योदयोर्द्रावण
2. $T_1$ तथाडोप्य M तथा धोव्य
3. $T_1$ कार्याः
4. T भूषभेषु
5. T दस्रो द्र.व्या.

[1]स(र्पः) पितरोऽर्यमा च भगः शीतेतरद्युतिः ।
त्वष्टामरुत इन्द्राग्नी [2A]मित्रे(न्द्रौ) निर्ऋतिर्जलम् ॥ 805 ॥

विश्वेदेवा हृषीकेशो वसवः सरितां पतिः ।
अजैकपादहिर्बुध्निः पूषा च दिनदेवताः ॥ 806 ॥

भगार्यम्णोस्तु व्यत्यासमन्ये [3]ब्रह्मा(धि)देवता ।
[4]ऋक्ष(स्या)भिजितस्त्वेषः विश्वश्राणान्तरालगः ॥ 807 ॥

क्षिप्रमुग्रं चरं चैव ध्रुवं साधारणं मृदु ।
अष्टधा प्रोच्यते [5]तारास्तीक्ष्णान्यपि लघूनि च ॥ 808 ॥

तिष्याश्विहस्तभं क्षिप्रं त्रिपूर्वयमपित्र्यभम् ।
उग्रा हरित्रीवाय्वम्बाश्चरास्त्र्युत्तरधातृभम् ॥ 809 ॥

ध्रुवं मित्रेन्दुचित्रान्त्या [6]मृद्वार्द्रामूलसार्पभम् ।
शाक्रं च तीक्ष्णं शूर्पाग्नी गदिते मृदुतीक्ष्णभे ॥ 810 ॥

---

अन्ये आचार्याः [7]भगार्यम्णोः व्यत्यासमच्छन्ति । पूर्वायाः भगः । उत्तराया अर्यमा इति । अभिजित ऋक्षस्य ब्रह्मा अधिदेवता । ताराणां संज्ञामाह - क्षिप्रमिति । क्षिप्रादिभिरष्टभिः संज्ञाभिः ताराः [8]कथ्यन्ते । तत्र तारास्तु सप्तविधा [9]एव स्युः । संज्ञानामष्टसंख्यात्वं तु तिष्याश्विहस्तभानां संज्ञाद्वयान्वितत्वात् । अत्र [10]हि तेषां क्षिप्रसंज्ञा प्रदर्शिता । तथा माधवीये च "क्षिप्रास्तीक्ष्णकराश्विनेयगुरव" इति । बार्हस्पत्ये तु तेषां लघुसंज्ञोक्ता । "हस्ताश्विपुष्याणि लघूनि चैषु कुर्याद्रतिज्ञानविभूषणादि ।" इति । साधारणसंत्रा तु शूर्पाग्न्योः भवति । तयोः कदाचित् [11]मृदुत्वात् कदाचित् तीक्ष्णत्वाच्च ।

---

1. T सर्पा
2. T मित्रेन्दौ
3. T ब्राह्मादिदेवता
4. T ऋक्षस्थाभिजितः द्र.व्या.
5. $T_1$ तत्तारां for तारा
6. $T_1$, M मृद्वद्रा
7. $T_1$ पाठः । T भागार्यम्णोः
8. $T_1$ कथ्यने
9. $T_1$ एवास्यः
10. $T_1$ पाठः । T एतेषां for हि तेषां
11. $T_1$ युदुत्वात्

---

A. अत्र ज्येष्ठानक्षत्रस्य इन्द्रः इति लोके प्रसिद्धत्वात् शोधितम् ।

पापवारयुते तीक्ष्णे मृदुनी शुभवारगे।
मृदुतीक्ष्णात्म[1]कत्वेन मिश्र[2]तोक्तान(यो)र्बुधैः ॥ 811 ॥

रविः स्थिरः शीतकरश्चरश्च
महीज उग्रः शशिजश्च [3]मिश्रः।
लघुः सुरेड्यो भृगुजो मृदुश्च
शनिस्तु तीक्ष्णः कथितो मुनीन्द्रैः ॥ 812 ॥

चरं चलं क्रूरमुशन्ति चोग्रं
ध्रुवं स्थिरं दारुणभं च तीक्ष्णम्।
क्षिप्रं लघूक्तं मृदुमैत्रसंज्ञं
साधारणे मिश्रमिति ब्रुवन्ति ॥ 813 ॥

निर्दयं दारुणं क्रूरं विवेकरहितं मतम्।
[4]प(ण्य)भूषाज्ञानशिल्पभेषज्यगमनं लघौ ॥ 814 ॥

बीजहर्म्यप्रतिष्ठादि शान्तिकं च [5][ध्रु]वे हितम्।
रतिभूषा मित्रकार्यं मृदुभे मङ्गलान्यपि ॥ 815 ॥

तीक्ष्णे तु वधबन्धादि भूतमन्त्रप्रसाधनम्।
[6]ह(स्त्या)दिवाहगमनमारामश्च चरे हितम् ॥ 816 ॥

[7]शा(ठ्यो)त्सादविषाघातशस्त्रदाहेषु तूग्रभम्।
साधारणदिने वापि स्वातौ वा तीक्ष्णसंज्ञके ॥ 817 ॥

---

मिश्रता साधारणता। तेषां ग्रहसम्बन्धमाह - रविः स्थिर इति। सप्तानां संज्ञानां पर्यायान्तरमाह - चरं चलमिति। अनेन च लघुक्षिप्रयोरेकार्थता सिद्धा। [8](दा)रुणक्रूरयोर्गुण भेदमाह निर्दयमिति। क्षिप्रादिषु कार्यमाह - **पण्येति**। वितननं वितानम्।

---

1. $T_1$ तत्वेन
2. T तोक्ता नयैर्बुधैः
3. $T_1$ मित्रः
4. T पञ्च द्र.व्या.
5. T क्रवे हितम्
6. T हरत्यादि
7. T शाढ्योत्साद
8. T भारुण द्र.मू.

मुक्तयुक्तं न लक्ष्येत तस्मादेष्यर्थमत्यजेत् । ?
एषु भेषु तथा मुक्तं नष्टं [1]वा न्यस्तमेव वा ।। 818 ।।

दत्तं वाथ प्रयुक्तं वा नायाति पुनरञ्जसा ।
चित्रास्वात्येकपात्सप्तज्येष्ठार्द्रा ऋणघातकाः ।। 819 ।।

वसुभस्योत्तरदले वारुणे चैकपाद्यपि ।
[2]याम्य(दि)ग्गमनं गेहे गोपनं प्रेतधारणम् ।। 820 ।।

शय्यावितननं काष्ठं तृणग्राहश्च वर्जितः ।
यथा विश्वप्रदोषस्थो रवेरस्तादिसङ्गमः ।। 821 ।।

## अथ राशिप्रकरणम् ।।

ब्रह्मा रुद्रश्च [त]र्षश्च जलं विष्णुः शशी वसुः ।
यमः शास्ताग्निपुत्रश्च असुरो धनदस्तथा ।। 822 ।।

मेषादीनां तु राशीनां विज्ञेया देवताः क्रमात् ।
[3]अधि(पा) रश्म(य)श्चापि पूर्वमत्रैव कीर्तिताः ।। 823 ।।

क्रूरः सौम्यः पुमां[4]स्त्री च चरश्चैव स्थिरो द्विभम् ।
क्रमान्मेषादयस्तद्वत् दिग्भिः प्रागादिभिर्युताः ।। 824 ।।

ऊर्ध्वमुखो रविमुक्तो राशिर्युक्तस्त्वधोमुखो ज्ञेयः ।
अभिलषितस्तिर्यक् स्यात्तेषां केन्द्राश्च तत्संज्ञाः ।। 825 ।।

[A]गोऽजाश्विकर्किमिथुनाः समृगा निशाख्याः
पृष्ठोदया विमिथुनाः कथितास्त एव ।
शीर्षोदया दिनबलाश्च भवन्ति शेषाः
लग्नं समेत्युभयतः पृथुरोमयुग्मम् ।। 826 ।।

---

राशिदेवतामाह - ब्रह्मेति । क्रूरसौम्यौ तथा पुंस्त्रियौ तथा चरस्थिरोभयाश्च । क्रमात् पुनः पुन[5]र्मे(षा)दयो भवन्ति । दिक्सम्बन्धश्च त्रिपरिवृत्या ।

---

1. T त्वा for वा
2. T याम्यतिगमनं
3. T अधिवा
4. $T_1$ स्त्रीश्च
5. T मेंषदयो

---

A. बृहज्जातकस्थितश्लोकस्तथैव ग्रन्थकारेण उद्धृतः । प्रथमाध्याये दशमश्लोकः ।

[A]अजवृषभमृगाङ्गनाकुलीराः
झषवणिजौ [1]च दिवाकरादि तुङ्गाः ।
दशशिख्विमनुयुक्तिथीन्द्रियांशै-
स्त्रि[2](न)वकविंशतिभिश्च तेऽस्तनीचाः ।। 827 ।।

श्राद्धं [3]कुर्विति श्लोकाभ्यांमुक्तं कर्म शुभाशुभम् ।
मेषादिराशिगं पूर्वं कालस्यात्राग्रता पुनः ।। 828 ।।

अकृतत्वाभिघातेन चाकाले कृत[4]कर्मणः ।
काले कर्म ह्युपादेयं न कालः कर्मणीष्यते ।। 829 ।।

वारस्य करणस्यापि कृष्यादौ यत्र शेषता ।
सूक्ष्मत्वात्तत्र करणप्राधान्यार्थं पुरा तिथेः ।। 830 ।।

करणोक्तिर्यत्र चौलमौञ्जीकरणपूर्वके ।
वैदिके गृह्य[5]का(रै)स्तु तत्र नक्षत्रशब्दतः ।। 831 ।।

---

कालस्यात्राग्रयतेति । पूर्वोक्तस्य स्वकालकरणमित्यस्य विवरणं अग्रया प्रथमोक्त्या सिद्धम् । बलाधिक्यमित्यर्थः । कालानन्तरं वा[र] रणयोः प्राबल्यकथनम् । कृष्यादौ कृष्यादिविषये यत्र शेषता यत्र कर्मणि वार[क]रणयोः प्रधानत्वेनाङ्गीकारः कृषीवलादिभिः क्रियते तद्विषयमित्यर्थः । करणस्य [6]वारात् [7]प्राथम्यं च कृष्यादिविषयम् । करणस्य तिथ्यधीनत्वात् तिथेः [8]प्राधान्यमाशङ्क्य करणप्राधान्ये हेतुमाह - सूक्ष्म[9]त्वादिति । स्थूलात् सूक्ष्मो बलवानिति हि न्यायः । वैदिके गृह्यकारैः द्योतितम् नक्षत्रस्य प्राधान्यं प्रदर्शयतियत्र [10]चौलेति । कल्याणे नक्षत्रे चौलकर्मोपनयनगोदानविवाहाः इत्यत्र नक्षत्रशब्देन तिथिर्लक्षितेत्यर्थः ।

---

1. $T_1$ "च" इति नास्ति
2. T णवक
3. M पाठः । T करेति । $T_1$ करोति
4. M कर्मणाम्
5. T काब्दैस्तु द्र.व्या.
6. T वारणात्
7. $T_1$ प्रथम्यं
8. $T_1$ प्रधान्य
9. $T_1$ त्वादि for त्वादिति
10. $T_1$ चैत्तेति

---

A. बृहज्जातके प्रथमाध्यायस्य त्रयोदशतमश्लोकः तथैवोद्धृतः ।

तिथेर्लक्षणया तस्य प्राधान्यं द्योतितं खलु ।
[1]अ(त)स्तारान्य थात्वे स्यात् क्रियावृत्तिः स्फुटा तिथेः ॥ 832 ॥

अन्यथात्वे तु दोषाय स्वल्पोऽनर्थस्य सूचनम् ।
कर्तुः पश्चात्तिथेरुक्तिराशेरुक्तिस्तिथेः परम् ।
[2]राश्यन्यथात्व आवृत्ते[3]र्विक(ल्प) इति सिद्धये ॥ 833 ॥

राशयस्तिथयस्तारा मुहूर्तमिति कथ्यते ।
यदन्यदाह तत्सर्वं तस्य दोषगुणान्तरम् ॥ 834 ॥

इति श्लोकस्य कालस्य तारादित्रितयस्य च ।
अन्यथात्वे पुनश्चापि कर्मणः कृतिसिद्धये ॥ 835 ॥

---

नक्षत्रशब्देन तिथेर्लक्षितत्वात् तस्य प्राधान्यं द्योतितम् । वाक्यालङ्कारे खलु । अत्रैव योज्यं यत्र नक्षत्रं विहितं तत्र नक्षत्रशब्दत इति । अतोऽस्मात् गृह्यकारवचनात् । तारान्यथात्वे निषिद्धताराग्रहणे । क्रियाया आवृत्तिः । [4]स्फु(टा)निश्चिता । [5](ति)थेरन्यथात्वे दोषस्य नक्षत्रदोषात् स्वल्पोनत्वं स्यात् । सूचनं कर्तुं नक्षत्रान्तरं तिथेरुक्तिः राशेरुक्ति[6](स्ति)थेश्च परमित्यत्र तिथेः प्राथम्यमेवाङ्गीकृतं न त्वानन्तर्यम् । राश्यन्यथात्वे आवृत्तेर्विकल्प इति सिद्धये पश्चाद्राशेरुक्तिः । अनेन तिथेरन्यथात्वे [7]आवृ(त्तिः) कार्यैवेति च सूचितम् । राशय इति मतान्तरम् । तत्रापि कालोऽङ्गीकृतः इति कल्प्यम् । अन्यथा प्रधानदोषः स्यात् । अतोऽन्यदित्यनेन [8]क(र)ण[9]वारग्रहे योगा एवोक्ताः । कालस्तु दिनमासाब्दपक्षायनत्वादि । लाटवैधृतग्रहणकालः कालदोष एव । तस्मात्तेषामपवादहीनता शास्त्रेषु प्रदर्शिता । उष्णविषौ नक्षत्रदोषौ । तयोश्च नापवादः । एवमादि चात्र चिन्त्यम् ।

---

1. T अधस्तारा द्र.व्या.
2. T₁ राश्यथात्व
3. T विकल्प्य द्र.व्या
4. T स्फुटं द्र.मू.
5. T तथेरन्य द्र.मू.
6. T स्थिते च
7. T आवृत्तिं द्र.मू.
8. T करुण
9. T₁ वारग्रयोगाः

करणोक्तिर्लौकिकमारिष्टं साधारणाश्रयम् ।
[1]यामार्धे वाथ यामे वा तारायोगफलं स्फुटम् ॥ 836 ॥

यामहोरा मुहूर्तेन्दुवेला चेष्टाः क्रमात्पराः ।
तथैव [2]राशि(तो)द्वित्रिनवास्त्रिंशत्तदंशकाः ॥ 837 ॥

विभागैः पञ्चभिर्युक्ता क्रमादर्धघटीमितैः ।
या कालहोरा सात्रोक्ता होरावारसमाफले ॥ 838 ॥

नवांशकस्य सूक्ष्मेभ्यो बलन्तु वचनात् स्मृतम् ।
[A]त्रिदशत्रिकोणचतुरश्र-
सप्तमा[3]न्यवलोकयन्ति चरणाभिवृद्धितः ।
रविजामरेज्यरुधिराः परे च ये
क्रमशो भवन्ति किल वीक्षणेऽधिकाः ॥ 839 ॥

उच्चत्रिकोणस्वसुहृच्छत्रुनीचगृहार्कगैः ।
शुभं सम्पूर्णपादोनदलपादाल्पनिष्फलम् ॥ 840 ॥

[4]सिंहो वृषश्च मेषश्च कन्याचापस्तुलाधरः ।
कुम्भश्चेति क्रमाद्वेद्यं सूर्यान्मूलत्रिकोणभम् ॥ 841 ॥

---

लौकिकगः कृष्यादि[5]विष(यः) । साधारणाश्रयं सामान्यविषयम् । राशेः प्राग्ग्रहोक्तौ हेतुश्चिन्त्यम् । फलदानाधिक्यादिति कल्प्यः । यामभागैः पञ्चभिः घटिकार्धमानैः पञ्चभिरित्यर्थः । त्रिदशेति । त्रिदशौ त्रिकोणौ चतुरश्रौ सप्तमं इति स्थानचतुष्कं सर्वे चरणाभिवृद्ध्या पश्यन्ति । मन्दो गुरुः कुजः । शेषग्रहाश्च स्थानचतुष्कदर्शने क्रमादधिकाश्च भवन्ति । समग्र[6]दर्शिनः इत्यर्थः ।

---

1. $T_1$ वामोर्धे
2. T राशितद्वि
3. $T_1$ पाठः । T मानवलो
4. $T_1$ हिंसो
5. T विषया
6. $T_1$ दशीनः

---

A. बृहज्जातकस्य श्लोकः तथैव ग्रन्थकर्त्रा उद्धृतः । द्वितीयाध्याये पञ्चमः श्लोकः ।

गुरुर्गुरुज्ञौ शुक्रज्ञौ व्यर्का [1](व्या)राश्च वीन्द्विनाः ।
[2]व्यर्केन्द्व[व]निजाः सूर्यात् [3]सुहृदो रि(प)वोऽन्यथा ॥ 842 ॥

मूलत्रिकोणभवनाच्चतुर्थपञ्चमधनव्ययाष्टगाः ।
स्वोच्चे धर्मे च गता ग्रहास्तु [4]ता[त्]कालिकाः सुहृदः ॥ 843 ॥

अथ ग्रहाणां बलानि ॥

[A]स्वोच्चसुहृत्स्वदृगाण[5]नवां(शैः)
स्थानवलं स्वगृहोपगतैश्च ।
दिक्षु बुधाङ्गिरसौ रविभौमौ
[6]सूर्यसुतः सितशीतकरौ च ॥ 844 ॥

[B]उदगयने रविशीतमयूखौ
वक्रसमा[7]गमगाः परिशेषाः ।
विपुलकरा [8](युधि) चोत्तरसंस्था -
श्चेष्टितवीर्ययुताः परिकल्प्याः ॥ 845 ॥

[C]निशि शशिकुजसौराः [9]सर्व(दा) ज्ञोऽह्नि चान्ये
बहुलसितगताः स्युः क्रूरसौम्याः क्रमेण ।
[10][द्व्ययन]दिवसहोरामासगैः कालवीर्यं
शकुबुगुशु[11]चसाद्या वृद्धितो वीर्यवन्तः ॥ 846 ॥

---

दिक्षु उदयदशमसप्तमचतुर्थेषु । समागमश्चन्द्रयोगः । शकुबुगुशुचसाद्याः शनिरुधिरबुधगुरुशुक्रचन्द्रसवितारः क्रमाद्वीर्यवन्तः । वृद्धितः मण्डलाधिक्यात् ।

---

1. T वाराश्च
2. T व्यर्केन्द्वघनिजाः
3. T सुहृदोऽरिववो
4. T तान्कालिकाः
5. T नवांशे
6. $T_1$ सूर्यसिताः
7. $T_1$ गमनाः
8. T यदि
9. T सर्वदो
10. T स्वदिवस
11. $T_1$ पसाद्याः for चसाद्याः

---

A. बृहज्जातके द्वितीयाध्याये 19 तमश्लोकः ।
B. बृ. जा. द्वि. अ. 20.
C. बृ. जा. द्वि. अ. 21.

## अथाष्टकवर्गविधिः ॥

[A]स्वादर्कः प्रथमाय[1]बन्धुनिधन[2]द्व्याज्ञातपोद्यूनगो
[3](वक्रात्) स्वादिव [4]तद्वदेव [5](र)विजाच्छुक्रा(त्)स्मरान्त्यादिषु।
जीवाद्धर्मसुतायशत्रुषु दशत्र्यायारिगः [6]शीत(गोः)
तेष्वेवान्त्यतपःसुतेषु च बुधाल्लग्नात् सबन्ध्वन्त्यगः ॥ 847 ॥

लग्ना[B]त्षट्त्रिदशायगः सधनधीधर्मेषु चाराच्छशी
स्वात्सास्तादिषु [7]सा(ष्ट)सप्तसु रवेः षट्त्र्यायधीस्थो यमात्।
धी[8](त्र्या)याष्टमकण्टकेषु च बुधाज्जीवाद्धनायाष्टगः
केन्द्रस्थश्च सितात्तु धर्म[9]सुख(धी)त्र्यायास्पदा(न)ङ्गगः ॥ 848 ॥

[10C]व(क्रस्तू)पचयेष्विनात्सतनयेष्वाद्याधिकेषूदयात्
[11]चन्द्रा(द्दिग्वि)फलेषु केन्द्रनिधनप्राप्त्यर्थगः स्वाच्छुभः।
धर्मायाष्टमकेन्द्रगोऽर्कतनयाद्ज्ञा[त्]षष्ठधीलाभगः
शुक्रात्ष[12](ड्व्य)यलाभमृत्युषु गुरोः कर्मान्त्यला[13]भा(रि)षु ॥ 849 ॥

---

अथाष्टकवर्गविधिः - स्वादर्क इति। जन्मकाले ग्रहसप्तकावस्थितात् स्थानसप्तका-दुदयलग्नाच्चैवसस्य चारकाले शुभप्रदानि स्थानान्यत्र पठ्यन्ते। अनुक्तानि स्थाना-न्युशुभ[14]प्रदानीति च वेद्यानि। तेष्वेव पूर्वोक्तस्थानेषु। सबन्ध्वन्त्यगः बन्ध्वन्त्ययुतेषु। तेष्विति तच्छब्दोदितेषु। एवं सर्वत्र सहार्थे पूर्वादिकमधिकृतं स्थानं वेद्यम्।

---

1. $T_1$ बुद्धि
2. $T_1$ ह्याश
3. T पक्रमात् for वक्रात्
4. $T_1$ तद्वदेशि
5. T रिविजा
6. T शीतने
7. T साप्तषट्सप्तसु
8. T धीत्रीयायाष्टम
9. T सुखदी
10. T वक्रं तूपचये
11. T चन्द्राग्नित्रिफ
12. T षड्याप
13. T लाभादिषु
14. T प्रदानिति

---

A. बृ.जा. अष्टवर्गाध्याये प्रथमः श्लोकः।
B. बृ.जा. अष्टवर्गाध्याये द्वितीयः श्लोकः।
C. बृ.जा. अष्टवर्गाध्याये तृतीयः श्लोकः।

[A]द्व्याद्यायाष्टतपस्सुखेषु भृगुजात् [1]सत्र्यात्मजेष्विन्दुजः
साज्ञास्तेषु यमारयोर्व्ययरिपुप्राप्त्यष्टगो वाक्पतेः ।
धर्मायारिसुतव्ययेषु सवितुः [2]स्वात्साद्यकर्मत्रिगः
षट्स्वायाष्टसुखास्पदेषु हिमगोः साद्येषु लग्नाच्छुभः ॥ **850** ॥

[B]दिक्स्वाद्याष्टमदायबन्धुषु कुजात् स्वात्सत्रि[3](गे)ष्वङ्गिराः
सूर्यात्सत्रितपस्सु धीस्वनव[4]दिग्लाभारिगो भार्गवात् ।
जायायार्थनवात्मजेषु हिमगोर्मन्दा[त्]त्रिषड्धीव्यये
दिक्[5](धी)षट्स्वसुखायपूर्वनवगो [6]ज्ञा[त्स]स्मरश्चोदयात् ॥ **851** ॥

[C]लग्नादासुतलाभरन्ध्रनवगः सान्त्यः शशाङ्कात् सितः
[7]स्वा[त्] स्वाज्ञेषु सुखत्रिधीनवदशछिद्राप्ति[गः] सूर्यजात् ।
[8]रन्ध्रा[य]व्ययगो [9]रवेर्नवद[श]प्राप्त्य[ष्ट]धीस्थो गुरोः
ज्ञाद्धीत्र्याय[10]नवारिगस्त्रिनवषट्पुत्रायसान्त्यः कुजात् ॥ **852** ॥

[D]मन्दः स्वा[त्]त्रिसुताप्तिशत्रुषु शुभः साज्ञान्त्यगो भूमिजात्
केन्द्रायाष्टधनेष्विनादुपचयेष्वाद्ये [11]सु(खे) चोदयात् ।
धर्मायारिदशान्त्यमृत्युषु बुधाच्चन्द्रात्त्रिषड्[12][लाभ]गः
षष्ठान्त्यायगतः [13]सिता[त्] सुरगुरोः [14]प्राप्त्य(न्त्य) धीशत्रुगः ॥**853**॥

---

आसुतं प्रथमद्वितीयचतुर्थपञ्चमानि । उक्तेषु शुभस्थानेषु शुक्लाक्षाणि स्थाप्यानि ।

---

1. $T_1$ सत्यातम
2. T स्वात्यसाद्य
3. T के for गे
4. T धिग्लाभ $T_1$ धिकूलाभ
5. T दिक्धिषट्
6. T ज्ञार्कस्मरश्चोदयात्
7. T स्वान्
8. T रन्ध्राख्यव्ययगो
9. $T_1$ खोर्नव
10. $T_1$ नमारि
11. T सुखो
12. T भागगः
13. T भातान्
14. T प्राप्त्यन्त्य

---

A. बृ.जा. अष्टवर्गाध्याये चतुर्थः श्लोकः ।
B. बृ.जा. अष्टवर्गाध्याये पञ्चमः श्लोकः ।
C. बृ.जा. अष्टवर्गाध्याये षष्ठः श्लोकः ।
D. बृ.जा. अष्टवर्गाध्याये सप्तमः श्लोकः ।

[A]इति निगादितमिष्टं नेष्टमन्यद्विशेषा-
दधिकफलविभागं जन्मभात् तत्र दद्युः ।
उपचयगृहमित्रस्वोच्चगैः पुष्टमिष्टं
त्वपचयगृहनीचारातिगैः नेष्टसम्पत् ॥ 854 ॥

[1]तिर्यग्वि(श्वोर्ध्व)नन्दं गिरिगिरिश[2](प)दं न्यस्य चक्रं चदूर्ध्वे
लग्नाद्या राशयः स्युर्ग्रहगणसहिताः शिष्टमिष्टस्य सद्म ।
तस्याधः सौरिमुख्यं ग्रह[ग]णमुदयं चापि कक्ष्याक्रमेण
प्रस्तार्य [3]स्वीयचक्रे स्वपदसहित भादष्टके बिन्दुरेखाः ॥ 855 ॥
इत्यष्टवर्गः ॥

---

[4]अनु(क्ते)ष्वशुभस्थानेषु [5]कृ(ष्णा)क्षाणि स्थाप्यानि । एवमेकैकराशौ शुभाशुभयोगा अष्टौ भवन्ति । तत्र विशेषात् शुभाशुभफलयोर्विश्लेष[6]मानत्वात् सम्पूर्णं वा न्यूनं वा शुभाशुभं च [7](ग्र)हाः दद्युः । शिष्टस्य शुभत्वे शुभं, अशुभत्वे अशुभं, तत्फलं स्वचारकाले दद्युः । तिर्यगिति प्रस्तारविधिः । तिर्यग्गतत्रयोदशखण्डं ऊर्ध्वगतनवखण्डं चक्रं गिरिगिरिशपदमित्युच्यते । तस्मिन्नूर्ध्वपङ्क्तौ लग्नाद्या द्वादशराशयो [8]वामत आरभ्य लिखि[9]तव्याः । शिष्टेऽन्त्यखण्डे इष्टग्रहं लिखेत् । अधः खण्डाष्टके कक्ष्याक्रमेण मन्दादिग्रहसप्तकमुदयं च क्रमाल्लिखेत् । एवं कृते शिष्टं राशिचक्राष्टकं भवति । पुनः स्वीयचक्रे ग्रहे सप्तकस्य लग्नस्य च [10]प(ङ्क्तौ) स्वपदसहितभात् स्वावस्थितराशिसमानराशेरारभ्य बिन्दुरेखाः कार्याः । अशुभस्थानेषु बिन्दवः शुभस्थानेषु दीर्घरेखाश्च कार्या इत्यर्थः । अष्टके एवं पङ्क्त्यष्टकेऽपि कार्यमित्यर्थः । कक्ष्याक्रमस्तु "भानामधः शनैश्चरसुरगुरु भौमार्कशुक्र[11]बुधचन्द्राः" इत्यनेन वेद्यः ।

---

1. T तिर्यग्विन्दोर्द्धनन्द
   $T_1$ तिर्यगद्विष्ठर्धनन्द द्र.व्या.
2. T वदं द्र.व्या.
3. T श्वीय
4. T अनुकेषु
5. T कृष्णक्षाणि $T_1$ कृष्टक्षणानि
6. $T_1$ माणनवशात्
7. T गृहाः
8. $T_1$ मतः for वामतः
9. $T_1$ तव्यः
10. T पङ्क्ते
11. T बुधबुधचन्द्राः

---

A. बृ.जा. अष्टवर्गाधअयाये अष्टमः श्लोकः ।

## अथ ग्रहाणां वेधविधिः ॥

लाभविक्रमरवशत्रुषु स्थितः
शोभनो निगदितो दिवाकरः ।
खेचरैः सुततपो[1]जला(न्त्यगैः)
व्यार्किभिर्यदि विध्यते तदा ॥ 856 ॥

[2]अस्तजन्मरिपुलाभखत्रिगै-
श्चन्द्रमाः शुभफलप्रदस्तदा ।
स्वात्मजान्त्यमृतिबन्धुधर्मगै-
र्विध्यते हि विबुधैर्यदिग्रहैः ॥ 857 ॥

विक्रमायरिपुगः शुभः कुजः
[3]स्यात्तथान्त्यसुतधर्मगैः खगैः ।
चेन्न विद्ध इनसूनुरप्यसौ
किन्तु [4](घ)र्मघृणिता न विध्यते ॥ 858 ॥

स्वाम्बुशत्रुमृतिरवाय[गः] शुभो
ज्ञस्तदा न खलु विध्यते यदि ।
आत्मजत्रिनवमाद्यनैधन-
प्रान्त्यगैर्विविधुभिर्नभश्चरैः ॥ 859 ॥

---

अथ ग्रहाणां चारकाले जन्मराशितः शुभस्थानानि, तेषां शुभस्थानानां ग्रहणे विद्धत्वे शुभफलाभावाज्जन्मादितो वेधकस्थानानि च वेधकग्रहांश्च प्रदर्शयति-लाभविक्रमेति। दिवाकरो जन्मर्क्षाल्लाभस्थानगतः शुभफलं करोति। तत्र स्वेर्के यदा जन्मर्क्षात्पश्चिमे [5]मन्दं विहाय कश्चिद्ग्रहो भवति तदा सोऽर्को [6]विद्धो भवति। विद्धत्वाल्लाभगतोऽपि सोऽर्कः शुभफलं न करोति। एवं शिष्टेषु स्थानेषु शिष्टेषु ग्रहेषु च वेद्यम्। कुजगुरुशुक्राः सर्वैर्ग्रहैर्विध्यन्ते। [7]इनसूनुर(प्य)सौ कुजवन्मन्दस्य स्थानमित्यर्थः।

---

1. T जलात्यगौ
2. $T_1$ तथा M मातृकायां च "अस्तजन्म" इत्यारभ्य ततः पञ्चमपङ्क्तिगत "शुभः कुजः" पर्यन्तं नास्ति।
3. M स्यात्तदान्त्य
4. T धर्मधृणिना
5. $T_1$ मन्दमपि हाय
6. $T_1$ विद्यो
7. T इनसूनुख्यसौ

**स्वायधर्मतनयास्तसंस्थितो**
**[1]नाकनायकपुरोहितः शुभः ।**
**रिःफंरन्ध्ररवजलत्रिगैर्यदा**
**विध्यते गगनचारिभिर्न हि ।। 860 ।।**

**आसुताष्टम[2]तपोव्ययायगो**
**विद्ध आस्फुजिदशोभनः स्मृतः ।**
**नैधनास्ततनुकर्मधर्मधी-**
**लाभवैरि[3A]सहजस्थखेचरैः ।। 861 ।।**

**एवमत्र खचरा व्ययान्विताः**
**सत्फलं न [4]दिशन्ति गोचरे ।**
**अवामवेधविधिनात्वशोभनाः**
**अप्यमी शुभफलं दिशन्त्यलम् ।। 862 ।।**

---

स्वायधर्मतनयास्तसंस्थित इति गुरोः पठ्यते । वामवेधेति । वामवेधो विपरीतवेधः । पञ्चमगतस्यार्कस्य लग्नगतेन ग्रहेण विपरीतवेधो भवति । तदा पञ्चमस्थोऽर्कः पापफलप्रदोऽपि वामवेधयुतत्वात् शुभफलमेव करोतीत्यर्थः । एवं वामवेधः प्रोक्तविधिव्यत्ययेन वेद्यः । अत्र ग्रन्थान्तरपठितो ग्रहगोचरवेधश्च लिख्यते । गोचरगदितफलानां परिवृत्ते हेतुभूतौ द्वौ वेधविपरीत[5]वेधावुच्येते । शास्त्रनिर्दिष्टौ [6] भ्रातृशुभावृत्व(न्त्यौ) खाब्धिलाभात्मजौ च जन्मर्क्षात् [7]अर्कस्य वेध्यवेधकराशिद्वन्दानि कथितानि । जन्मसुतौ भ्रातृशुभौ रिपुव्यभौ सप्तमकुसुमभौ दशमाब्धि, भवमृत्यु इत्यादि शीतांशोः । भ्रात्रन्त्यौ, षष्ठगुरुभवात्मजौ भौममन्दयोः कथितौ । स्वसुतौ, बन्धुतृतीयौ, रिपुधर्मावष्टमात्मानौ, आज्ञामृती, भवात्त्यौ प्राग्वद्द्वन्द्वावानि सोम्यस्य । स्वान्त्यौ, सुतसुहृदौ, गुरुदशमौ, मदसहजौ, भवाष्टमौ च गुरोः । आद्यायुषी, स्वकामौ, त्र्याद्यौ, बन्ध्वास्पदौ, तनयधर्मौ, रन्ध्रसुतौ, धर्मायौ, भवत्रिकौ व्ययरिपू भृगुसुतस्य । [8]फणिकेत्वोरपि [9]विद्याद्वेधत्रितयं, शनैश्चखत् ।

---

1. $T_1$ नाखनायक
2. $T_1$ तञ्चोव्ययगो M तपोव्यवायगो
3. T सहजलस्थखेचरैः
4. $T_1$ मिशन्ति
5. T वेधावुच्यते
6. T भ्रातृशुभावृत्वन्या
7. $T_1$ अर्कस्य इत्यारभ्य ततस्तृतीयपङ्क्तिगत "शीतांशोः" पर्यन्तं मातृकायां नास्ति ।
8. $T_1$ फणिकेत्वारेपि
9. $T_1$ विद्यद्वेशत्रितयं

---

A. अत्र "सहजलस्थ" इत्यत्र लकरः अधिकः इति त्यक्तः ।

[1]असत्फल: सौम्यनिरीक्षितो यः
शुभप्रदश्चाप्यशुभेक्षितश्च।
तौ निष्फलौ द्वावपि खेचरेन्द्रौ
यः शत्रुणा स्वेन विलोकितश्च ।। 863 ।।

अकालचर्यां मृगयां च साहसं
सुदूरयानं गजवाजिवाहनम्।
गृहे परेषां गामनं च [2]वर्जये-
(द्ग्रहेषु) राजा विषमस्थितेषु ।। 864 ।।

**अथ ग्रहशान्तिविधिः ।**

धार्यं तुष्ट्यै विद्रुमं भौमभान्वोः
रौप्यं शुक्रेन्द्वोश्च [3](हे)मेन्दुजस्य।
मुक्ता सूरेर्लोहमर्कात्मजस्य
[4](ला)जावर्तं कीर्तितं शेषयोश्च ।। 865 ।।

[5]माणिक्यं तरणेः [6]सुजा(त्य)ममलं मुक्ताफलं शीतगोः
माहेयस्य च विद्रुमं मरकतं सौम्यस्य गारुत्मकम्।
देवेड्यस्य च पुष्यरागमसुराचार्यस्य वज्रं शनेः
नीलं [7]नि(र्मल)मन्ययोश्च गदिते गोमेदवैडूर्यके ।। 866 ।।

---

वसिष्ठोक्तिः -

"अशुभेक्षितः शुभफलोऽशुभदः शुभनिरीक्षितश्चापि।
द्वावप्यफलौ स्यातां रिपुणा च विलोकितो विफलः ।।
नीचास्तेऽरिगृहे वापि वृथा सर्वं प्रकीर्तितम्।
पुरोऽस्येव कामिन्याः सकटाक्षनिरीक्षणम् ।। इति।

विष्मस्थेषु ग्रहेषु वर्ज्यमाह - **अकाल**चर्यामिति । अकालचरणंसुदूरबाहनादिसर्वविषयम्। ग्रहशान्त्यर्थं धार्यद्रव्यमाह **धार्यमिति**।

---

1. T असफलः
   M असत्पलः
2. T वर्जयेद्गृहेषो
3. T नेमेन्दुजस्य
4. T राजावर्त
5. $T_1$ मनिक्यं
6. T सुजान्यममलं
7. T निर्मित

अर्काद्ब्रह्ममहीरुहात् खदिरतोऽपामार्गतः पिप्पला-
-दाद्रोदुम्बरशाखिनोऽप्यथ शमी दूर्वा कुशेभ्यः क्रमात् ।
सूर्यादिग्रहमण्डलेभ्यः समिधो होमाय कार्या बुधैः ।
[1]सुस्निग्धा [2]निचिताश्चलाश्च सरलाः [3](प्रा)देशमात्राश्च ताः ॥867॥

धेनुः शङ्खोरुणरुचिवृषः काञ्चनं पीतवस्त्रं
श्वेतश्चाश्वः सुरभिरसिता कृष्णलोहं महाजः ।
सूर्यादीनां मुनिभिरुदिता दक्षिणास्तु ग्रहाणां
[4](स्ना)नैर्दानैर्हवनबलिभिस्तेऽत्र तुष्यन्ति यस्मात् ॥ 868 ॥

देवब्राह्मणवन्दनाद्गुरु[5A]वचःसम्पादनात् प्रत्यहं
साधूनामभिभाषणात् [6]श्रुतिरवः श्रेयःकथाकर्णनात् ।
होमादध्वरदर्शनाच्छुचिमनो भावाज्जपाद्[7](ध्या)नतो
नो कुर्वन्ति कदाचिदेव पुरुषस्येवं [8]ग्र(हाः) पीडनाम् ॥ 869 ॥

---

होमादिसाधनान्याह - अर्कादिति । आर्द्रमित्यशुष्कम् । उदुम्बरशाखी उदुम्बरवृक्षः । सरला ऋजवः । तथा च केशवस्वामी "सरलः पूतिकाह्वये द्रुमे पुमान् [9]विद्गधे तु नृस्याहजौ च प्रियवादिनि"? इति । [10]स्ना(नं) ग्रहोदितैर्द्रव्यैःस्नानम् । तत्तु शास्त्रान्तरादवगन्तव्यम् । तथा च श्रीपतिः -

"मनःशिलैलासुरदारुकुङ्कुमैरुशीरयष्टिर्मधुपद्मकान्वितैः ।
सताम्रपुष्पैर्विषमस्थिते खौ शुभावहं स्नानमुदाहृतं बुधैः ॥ इति ।

हवनं होमः । श्रुतिरवः वेदध्वनिः । श्रेयःकथा महाभारतादि । शुचिमनोभावात् शुद्धमनस्कत्वात् ।

---

1. $T_1$ सुस्मिन्धा M सुसन्ध्या
2. M निचिंताश्चलाश्च
3. T प्रग्देशमात्राश्च
4. T स्थानैर्दानै
5. T वचनात् for वचः
6. $T_1$ श्रुतिरपः
7. T भानतो
8. T ग्रहात
9. $T_1$ विदग्धेषु for विदग्धे तु
10. T स्नाहं

---

A. अत्र वृत्तरक्षणार्थं वचः सम्पादनात् इति शोधनं कृतम् ।

आकृष्णेनेति सूर्यस्य त्वाप्यायस्व विधोर्भवेत् ।
अग्निर्मूर्धेति [1]भूजस्य उद्बुध्यध्वं बुधस्य तु ॥ 870 ॥

बृहस्पते अतीन्द्रेड्ये शुक्रं ते भार्गवस्य तु ।
शन्नो देवी शनैश्चारे कयानः सिंहिकासुते ॥ 871 ॥

केतुं कृण्वन्निति केतोर्होममन्त्राः इमे मताः ।
[2]जप्तव्या वा गणानंत्वापूर्वका मनवस्त्विमे ॥ 872 ॥

प्रातर्दिनैस्तर्पणं वा तत्तन्नामोक्तिपूर्वकम् ।
चतुर्थ्यां तर्पयाम्यन्तैः कुर्यादेषां तु सादरम् ॥ 873 ॥

[इति] ग्रहशान्तिविधिः ॥

इति मुहूर्तरत्ने ग्रहशान्तिकर्मपर्यन्तविधायको

द्वितीयोऽध्यायः ॥

---

होमादौ मन्त्रानाह आकृष्णेनेति। भुवनानि पश्यन् आदित्याय तर्पयामि'' इत्यादि ।

इति गोविन्दशिष्यपौत्रेण परमेश्वरेण कृते मुहूर्तरत्नव्याख्याने
ग्रहशान्तिकर्मपर्यन्तकर्मविधायको

द्वितीयोऽध्यायः ।

---

1. $T_1$ कुजस्य M भुजस्य
2. $T_1$ जप्तव्यं

## ।। अथ तृतीयोऽध्यायः ।

### अथ रव्याद्यंशकग्रहफलम् ।।

एकांशकगता योगा रव्याद्यंशकजास्तथा ।
नाना[1]योगा भोदयाश्च कथ्यन्तेऽथप्रकीर्णके ।। 1 ।।

एकांश[2]कस्थौ सूर्येन्दू मित्रभे धान्यसङ्ग्रहः ।
सूर्यारौ तुङ्गगौ जीवदृष्टौ [3]चेद्वीहिसङ्ग्रहः ।। 2 ।।

रविज्ञौ मित्रतुङ्गस्थौ [4]बीजनिर्वापशोभनौ ।
स्वर्क्षतुङ्गत्रिकोणेषु खीड्यौ हाटकग्रहः ।। 3 ।।

शुक्रार्कौ स्वत्रिकोणे [5]चेद्रजतग्रहणं शुभम् ।
सहस्थौ [6]सूर्यमन्दौ चेत् [7]कृष्णलोहपरिग्रहः ।। 4 ।।

विनोपरागात्सूर्यागू सहोच्चे भूग्रहः शुभः ।
रविकेतू मन्ददृष्टौ सहस्थौ चेन्महीग्रहः ।। 5 ।।

---

अथ प्रकीर्णाध्या[8](यः) प्रदर्श्यते । यत्र नानाविधा अर्थास्तत्प्रकीर्णकम् । तस्मिन् प्रकीर्णाध्याये वाच्यमाह - **एकांशकेति** । एकराशावेकांशके स्थितयोर्द्वयोर्ग्रहयोरुदयकाले एकांशकयोगः स्यात् । तत्फलमत्र कथ्यते । तथा भौमादीनामंशकगतसूर्यादी[9]नामुदये फलं च । तथा नानायोगादीनां फलं च । तथा भानामश्विन्यादीनामुदये [10]फलं च । रव्याद्यंशकजा इति । रव्यादिकेतुपर्यन्तानां ग्रहाणामंशकसम्बन्धाज्जाता योगा इत्यर्थः । **एकांशकस्थाविति** । मित्रभमर्कस्य सर्वत्र मित्रोच्चकादिकमनुस्यूतस्येति हि वक्ष्यति । धान्यसङ्ग्रह इति । तत्काले धान्य-सङ्ग्रहाद्धान्य[11]वृ(द्धि र्भ)वतीत्यर्थः । एवं तत्तत्कर्मणः फलसिद्धिर्वेद्या । अगुः पातः ।

---

1. $T_1$ सागा
2. M कस्थे
3. $T_1$ चेद्दृष्टि
4. $T_1$ बीजरिर्वाप
5. $T_1$ चेद्रजग्रहणं
6. M पाठः ।T सूर्यामन्दा
7. M पाठः । T कृष्णलोह
8. T यं for यः
9. $T_1$ नादुदये
10. $T_1$ पलं च
11. T वृद्धी भवती

स्ववर्गे चन्द्रभौमौ चेदायुधग्रहणाज्जयः ।
शुभवर्गे चन्द्रबुधौ परस्त्रीग्रहणं [1]वरम् ॥ 6 ॥

चन्द्रार्यौ सह [2]चेद्वैद्यं विवादं च फलिष्यतः ।
शुक्रेन्दुयोगे रजतं [3]वस्त्रं धान्यं च गृह्यताम् ॥ 7 ॥

सहितेन्द्वार्किसद्भावे धान्यग्राहः समृद्धिदः ।
यमदृष्टौ [4]सहाहिन्दू रक्षेद्धान्यं वृषान्नभीः ॥ 8 ॥

केत्विन्दू सह चेद्वाररक्षा निर्गुण्डिकीलकैः ।
कुजज्ञौ सह चेद्विप्रस्यास्यं पश्येदसौ वशः ॥ 9 ॥

कुजजीवौ सहस्थौ चेद्विज भूषास्य[5]दर्शनम् ।
भौ[6](मा)च्छौ सह चेद्विप्रक्ष[7]त्रस्वं दर्शनात् स्वकम् ॥ 10 ॥

लोहग्रहस्तु भूजार्क्यौ [8]सीसग्राहोऽर्हिभूजयोः ।
भौमकेतू सहस्थौ [9]चेद्रोगणीरिप्रतिक्रिया ॥ 11 ॥

गुरुज्ञौ सह चेत् क्षेत्रं विष्ट्वाश्नातु मृदं [10]स्वसात् ।
सौम्याच्छौ सह चेत्क्षेत्रग्राहो भूरिफलप्रदः ॥ 12 ॥

सौम्यार्की सह चेत् क्षेत्रात् हलग्राहोऽब्दतः स्वसात् ।
ज्ञागू चेत् सहितौ क्षेत्र स्यादग्रमध्यात् फलं ह्यर्के ॥ 13 ॥

जीवार्किदृष्टौ केतुज्ञौ दृष्टो राजा फलप्रदः ।
[11]गुरु भार्गवयोर्योगे कुर्या(द्)द्रव्यव्ययं बुधः ॥ 14 ॥

---

सहितेन्द्वार्किसद्भावे इति । उदये सहितयो[12]रिन्द्वार्क्योः सद्भावे इति योज्यम् । वशः वशगतः । [13]वि(ष्ट्वा) प्रविश्य । स्व[14](सा)त् स्वं भवति ।

---

1. M पाठः । T परम्
2. M चेवद्यं
3. M पाठः । T वसूं
4. M पाठः । T सनाहीन्दू
5. M पाठः । T दर्शितम्
6. $T_1$ भौमच्छौ
7. M क्षेत्रस्वं
8. M पाठः । T सिसग्राहो
9. M पाठः । T चेद्रोगार्णीरि
10. M स्वसाम
11. $T_1$ गुरुर्भार्गव
12. $T_1$ रिन्द्वार्किकयोः
13. T विष्टाः द्र.मू.
14. T स्वसत् द्र.मू.

गुरुमन्दौ सहस्थौ चेदन्त्य[1]जातिपरिग्रहः ।
गुरुराहू सहस्थौ चेन्नृपं [2]दृष्ट्वा श्रियं लभेत् ॥ 15 ॥

गुरुकेतू सहस्थौ [3]चेद्वशगोऽरिश्च दर्शनात् ।
शुक्रमन्दौ (सहस्थौ) चेद्व्रीहिरुप्यं च गृह्यताम् ॥ 16 ॥

शुक्रराहू सहस्थौ चेद्व्राह्या [4]दासाः समृद्धये ।
सितकेतू सहस्थौ [5]चेद्रोगणार्रिप्रतिक्रिया ॥ 17 ॥

शनिकेतू सहस्थौ चेच्चण्डालादिपरिग्रहः ।
[6]एकर्क्षैकांशकस्थानां लग्ने योगास्त्वमी मताः ॥ 18 ॥

अनुस्यूतस्य ख्यादे[7]र्मित्रोच्चक्षादिसम्मतः ।
[A]एकांशकफलं चाभोर्द्विजे नृपे चेक्षत्यकुजद्विजसृष्टिः ? ॥ 19 ॥

द्विजास्यदृष्टिर्द्विजगृहगतिनृपगृहे तथा ।
शत्रुनाशश्च भौमांश[8]ग(त)सूर्यादिजं फलम् ॥ 20 ॥

---

**एकर्क्षेति** - एकराशावेकांशकगतानां ग्रहाणां लग्ने अमी योगा उक्ताः । यत्र मित्रभे तुङ्गस्थावित्याद्युक्तं तत्र येन ग्रहेणान्येषां योगादत्र योग उच्यते, [9]तस्यानुसूतस्य मित्रभतुङ्गर्क्षादि विवक्षितम् । अत्र द्वयोर्द्वयोरेव ग्रहयोर्योगफलमुक्तम् । शास्त्रान्तरे त्रिप्रभृतीनां ग्रहाणामपि योगफलमुक्तम् । अथ भौमादीनांमंशके स्थितानां सूर्यादीनां केतुपर्यन्तानामुदये कर्मविशेषानाह - चाट इति । अत्रैवं पठितव्यं - "चाटो द्विजे नृपे पेक्षा द्विजस्पृष्टि[10]र्द्विजालपः" इति । तथा च बार्हस्पत्ये -"सौम्ये भौमांशके लग्ने नीचारातिगृहैर्विना । स्पृष्टाङ्गो ब्राह्मणो वश्यः स्पर्शी तु मरणादिकम् ॥ जीवे भौमांशके लग्ने नीचारातिगृहैर्विना । भाषणात् ब्राह्मणेनात्र [11](व)श्यः स्याद्ब्राह्मणः स्वयम् ॥" इत्यादि ।

---

1. $T_1$ जातिं परिग्रहा
2. M दृष्ट्वाप्नुयात्धुभम्
3. $T_1$ चेद्वशशो
4. M दासः
5. $T_1$ चेद्रोगार्णादि
6. $T_1$ एकत्सैमांश
7. $T_1$ र्मित्राच्च
8. T गद
9. $T_1$ कस्या
10. $T_1$ र्द्विजालापाः
11. T पश्यः

---

A. अस्याः पङ्क्तेरन्वयाभावात् व्याख्यात्रा एवं पठितव्यमिति विलिख्य "चाटो द्विजे नृपे चेक्षा द्विजस्पृष्टिर्द्विजालपाः" इति लिखितम् ।

नृपाननेक्षा [1]भूपेन सम्भाषाथ च तत्स्पृशिः ।
पुनश्चाथ [2]नृपस्यास्य दृष्टिस्तत्सन्निधौ गमः ।। 21 ।।

सर्वसन्निधियानं च पुनश्च ज्ञांशजं फलम् ।
मांसं नृपगृहे यानं नृपाभाषा विशो मुखे ।। 22 ।।

दृष्टिस्तेन सहालापस्वर्णभूषानृपस्त्रियः ।
मुखदृष्टिः स्थावराणां स्थापनं वैश्यवेश्मनि ।। 23 ।।

[3]गमनं शूद्रगेहे च गमनं शूद्रभागजम् ।
वैश्यसद्मगतिर्वैश्यस्पृशी शूद्राननेक्षणम् ।। 24 ।।

शूद्रस्पृष्टिः [4]शू(द्र)गेहगतिः [5]शूद्राङ्गसंस्पृशिः ।
[6]द्वार्देशे गुण्डिकीलस्य स्थापनं [7]क्षत्रजे पुनः ।। 25 ।।

---

अथ चेति-चकरेण कुजेऽपि । भूपेन सम्भाषा कार्येत्युक्तम् । तत्स्पृशिः [A]भूस्पृशिः पुनश्च जीवेऽपि भूस्पृशिः । पुनश्च केतावपि । सर्वसन्निधियानम् [8]रा(हौ) तु राजानं याचयेदिति बृहस्पतिः । मांसमिति जीवांशजम् । मांसं नृपगृहे यानं रवौ । नृपस्त्रियोर्मुरवदृष्टिः शुक्रे । [9](वै)श्येति शुक्रां(श)जम् । द्वार्देशे गृहद्वारे । निर्गुण्डिकीलस्य स्थापनं रक्षार्थम् । एतत्फलं मन्दे । राहौ क्षेत्रनिर्गुण्डिकीलस्य स्थापनमिति एतद्धान्यरक्षार्थम् ।

---

1. M भूपोन द्र.व्या.
2. $T_1$ नृपास्यास्य
3. $T_1$ गमनाः
4. T शूर्द
5. M पाठः । T शूद्रांशुगसंस्पृशिः
6. $T_1$ द्वादशे
7. $T_1$ क्षत्रके
8. T राहो
9. T वेश्येति शुक्रांराजम्

---

A. अत्र भूपस्पृशिः इति भवेद्वा । मूलगत "नृपाननेक्षा भूपेन" इत्यादि संदर्भवशात् अयमर्थ युज्यते ।

ततः [1]खदिरकीलस्य स्थापनं धान्यवृद्धये।
भृग्वंशकं फलमिदमथारात्याभिचारकम् ॥ 26 ॥
ऋण[2]रोगशमौ चन्द्रे सूर्ये [3]वश्योग्रकर्मणि।
कुजेऽरिनिग्रहो राहौ गजशालाद्युपक्रमः ॥ 27 ॥
बुधोऽश्वादिगृहारम्भः शुक्रे धान्यादिसङ्ग्रहः।
केतौ [4]मन्दांशके न्यसेत् पञ्चगव्यं गजालये ॥ 28 ॥
[5]कीला(न्) पलाशखदिरविषपादपवेणुजान्।
[A]अश्वेभाश्वालयेक्षेत्रे [6]चतुर्ष्विन्द्रादिषु क्रमात् ॥ 29 ॥
विधुवारे धनुर्लग्ने सर्पमाखुबिले क्षिपेत्।
तच्चान्यैर्बधकं कीलं सप्ताङ्गुल[7]मधोमुखम् ॥ 30 ॥

[इति] रव्याद्यंशकग्रहफलम् ॥

---

केतौ खादिरकीलस्य स्थापनम्। अथारात्याभिचारकमिति मंदांशकं फलम्। तत्र फलस्य बहुत्वात् पृथगुक्तिः कृता। केषांञ्चिद्ग्रहाणामनङ्गीकारसूचनार्थं क्रमभङ्गः कृतः। तदनङ्गीकारे [8]कस्यचिद्ग्रन्थकर्तुरन्थैव हेतुः। [8a]प(ला)शादि कीलचतुष्टयस्य स्थापनं [9]चन्द्रादिषु चतुर्ष्विति प्रदर्शनार्थं चन्द्रस्य प्राथम्यं कृतम्। [10]अरात्या(भि)चारकं ऋणरोग[11]शमौ च चन्द्रे। चन्द्रे पालाशं कील[12]म(श्वा)लये स्थाप्यम्। कुजे खादिरकीलं गजालये। बुधे विषपादपजं कारस्करजंमश्वालये। जीवे वेणुजं कीलं [13]क्षेत्रे स्थाप्यम्। एवमस्माभिर्गुरुपरंपरासिद्धं कीलानां स्थापनमिह व्याख्यातम्। बार्हस्पत्ये अपि तथैव विहितम्। मन्दांशकप्रकरणाद्धनुषि च यथाकथञ्चिद्ग्राह्यः। बाधकमरुष्करवृक्षजं कीलम्।

---

1. $T_1$ खदिर
2. $T_1$ रोगाशमौ
3. T वश्येग्रकर्मणि M पश्योग्रकर्मणि
4. M पाठः। T मंदाशकं
5. T कीलाम्बलाश M कीलात्पलाश
6. M चतुष्वीन्द्रा तथा $T_1$
7. $T_1$ तथो मुखम्
8. $T_1$ कस्यचिग्र
8a. T पलांशादि
9. $T_1$ चन्द्रषु
10. T अरात्यादिचा
11. $T_1$ शमा
12. T मत्वालये
13. $T_1$ क्षत्रस्याप्यम्

---

A. अत्र "पश्वेभेश्वालयेक्षेत्रे" इति भवेद्वा। नो चेदश्वपदस्य द्विरुक्तिर्भवति।

## अथ नानायोगाः ॥

याम्ये कृष्णचतुर्दश्या[1]मष्टम्या(मा)रवारगे ।
क्रूरग्रहोदये मन्त्रीपिशाचादीन् विसर्जयेत् ॥ 31 ॥

कालाष्टम्यामथवा भूततिथौ कुजबुधांशकाभ्युदये ॥
रौद्रर्क्षे मतिमद्भिः शिलाप्रभेदो विधातव्यः ॥ 32 ॥

भास्करदिने तदुदये कुजस्य मन्दस्य [2]वां(श)काभ्युदये ।
कुर्वीत पौष्णयोगे कस्यचिदपि बन्धनं मतिमान् ॥ 33 ॥

प्रथमांशे [3]वाथ फणिनस्तुर्यांशेऽवस्थिते सुरेन्द्रगुरौ ।
कार्याणि विना विघ्नानि प्रारब्धानि प्रसिध्यन्ति ॥ 34 ॥

[4]हस्तोपगते चन्द्रे गुरुलग्ने श्मश्रुकर्मेष्टम् ।
अर्थं क्षिपेद्धरायामार्क्युदये तद्दिने धनिष्ठायाम् ॥ 35 ॥

आदीयते च दीक्षा मन्ददिने तदुदये श्रवणे ।
गुरुशुक्रयुतश्चन्द्रो [5]यदा स्वराशौ विलग्नमायाति ॥ 36 ॥

न भवति चानलभीतिस्तत्काल[6]स्थापितस्य गेहस्य ।
कृष्णचतुर्दश्यां रेवत्यां शकटसंयुतिर्भवति ॥ 37 ॥

भवनार्थमाहृतानां दारुणां नैव [7]घुणबाधा ।
मकारान्तं च नक्षत्र[8]मम्यन्तश्च तिथि[9]र्विधौ ।
बाल[10]भावांश्च सन्त्यज्य द्रुमच्छेदे [11]घुणान्नभीः ॥ 38 ॥

भृगुजेऽजद्वितीयांशे [12][त]टाकादि [13]खनेद्बुधः ।
[14]कूपवाप्यादि स्यात् तत्र प्रभूतमुदकं भवेत् ॥ 39 ॥

---

अथ नाना योगाः । याम्ये इति पौष्णयोगः, पौष्णमुहूर्तयोगः ।

---

1. T मष्टम्याम्बारवारगे M मष्टम्याम्वारवारगे
2. T वांशुका
3. M वाथ इति ग्रथपातः
4. M हस्तेरपगते
5. M पाठः । T दया for यदा
6. M स्यापि गेहस्य
7. M पाठः । T गुणबाधा
8. M पाठः । T मभ्यन्तंश्च
9. M विधोः
10. M भावं च
11. $T_1$ घुणान्नभी
12. T कटाकादि
13. $T_1$ रवनोद्बुधः
14. $T_1$ कूपावाप्यादि

भृगुतनये [1]कूपादीनजद्वितीयांशकस्थिते निखनेत् ।
स्वादुशुचिसलिलमुद्यति धारोद्भवप्रचुरम् ॥ 40 ॥

सूर्येवारेऽथ शौक्रे वा जलर्क्षे भास्करोदये ।
तटाके कीलकं कुर्यात् सदा पूर्णजलं भवेत् ॥ 41 ॥

हरौ सप्तमभागस्थे गुरौ [2]कुल्याम्बहुनिर्गमे ।
[3]तटाकस्य क्षिपेत् कीलं सस्यदृध्यै विषवृक्षजम् ॥ 42 ॥

जीवेऽङ्गस्थे रवगे भानौ चन्द्रे सुखकलत्रगे ।
द्रव्यस्वीकरणं शस्तं सर्वसम्पद्विवृद्धये ॥ 43 ॥

घृतमिन्दु[4]सुतस्य दिने गृह्णीयात्प्रथमांशके विशाखायाम् ।
विलयनमपि चार्यमर्क्षे हरिलग्ने गुरुदिने कार्यम् ॥ 44 ॥

[5]नैशाकरे मृगाङ्के लग्नस्थे [6]मन्थनं दध्नः ।
मृगशिरसीन्दावुद्यति खननीयो मन्थनस्तम्भः ॥ 45 ॥

[7]प्राकारवृतिः कुर्याद्यमोदये कुजदिने जलभे ।
पुष्ये बृहस्पतिदिने वृषोदये कारये[8]द्र(वां नि)लयम् ॥ 46 ॥

व्यपयन्ति चोराद्युपद्रवा योगमाहात्म्यात् ।
[9]चन्द्रेऽहिर्बुध्निगते कर्किविलग्ने दिनेऽमरेन्द्रगुरौ ।
जलपुष्पबीजवपनं प्रधानमित्याहुराचार्याः ॥ 47 ॥

अगृहीत[10]कर्णिकागृष्टे संस्थापयेत्पुरो वत्सम् ।
[11]गृह्णीया(च्छी)तरश्मौ स्थितवति तिष्ये तृतीयांशे ॥ 48 ॥

---

विलयनं द्रवीकरणं, वह्निना । बहिः प्राकारस्य वृतिसंज्ञा । कर्णिका वत्साः । गृष्टिः सकृत्प्रसूता । जपादिप्रयोगश्च कार्यः ।

---

1. M कूपादीस्ताबुरुवर्गोत्तमांशगे
2. $T_1$ काल्याम्बु
3. $T_1$ तष्टाकस्य
4. $T_1$ सुखस्य
5. M पाठः । T निशाकरे, $T_1$ नैशकरे
6. $T_1$ मन्धनं
7. M इयं पङ्क्तिर्मातृकायां नास्ति ।
8. T द्रवानिलयम्
9. M "चन्द्रे" इत्यारथ्य पङ्क्तिद्वयं नास्ति
10. M तक्रिकायागृष्टे
11. T गृह्णयात्यशीत

गुरुपुष्यदिने प्राह्णे करणे [1]सुशुभान्विते।
गुरुलग्ने गवां शालां कारयेत्तन्निवेशयेत् ॥ 49 ॥

तन्निवेशितगोवत्साः प्रेतचोरमृगादिभिः।
न बाध्यन्ते गवां वृन्दं लभ्यते वत्सरान्तरात् ॥ 50 ॥

[2]कुम्भान्त्यगे देव[3]पूज्ये विलग्ने
पूषार्कभे वा [4]गुरुः सौम्यवारे।
योगे पशूनां ग्रहणं च कुर्यात्
वर्षान्तरे गोमहिषाः प्रभूताः ॥ 51 ॥

[5]भिक्षा दानक्रिया सेन्दौ श्रोणे श्रोणोदये शुभा।
सौम्यर्क्षे गुरुवारे च करणे सुशुभान्विते ॥ 52 ॥

वृषलग्ने गवां मध्ये निखने[6]च्चित्रिकां शिलाम्।
गवां कण्डूयनार्थं च [7]स्तम्भं वा खदिरस्य च ॥ 53 ॥

व्याघ्रचोरमृगादिभ्यः सर्वरक्षा भविष्यति।
मन्दाहे [8]वणिजे युक्ते शुभर्क्षे वृषमीनयोः ॥ 54 ॥

गवालयं तदा कुर्याद्गवां सिद्धि[9]मभीप्सता।
महिषाणां भृगोर्वारमंशकादि विवर्जयेत् ॥ 55 ॥

पशूनां भौमवारं तु मन्दवारं तु वाजिनाम्।
हस्तिनामर्कवारं च सिंहस्य करणं तथा ॥ 56 ॥

पशूनां व्याघ्रकरणं दूरतः परिवर्जयेत्।
सायाह्ने पूर्वरात्रे च [10]गोकामैर्न प्रदीयताम् ॥ 57 ॥

---

तन्निवेशयेदित्येतच्च। सेन्दौ श्रोणे श्रोणातारासमीपगे चन्द्रे। चित्रिका अष्टाश्रा। वणि
वृषभकरणे।

---

1. M पाठः। T गुरुशुभान्विते
2. $T_1$ भान्त्यगे for कुम्भान्त्यगे
3. M पूज्येऽपि लग्ने
4. M गुरुसौम्यवारे
5. M पङ्क्तिरियं मातृकायां नास्ति
6. T चित्रितां। M पाठः। द्र.व्या.
7. M स्तम्भे
8. M वणिजायुक्ते
9. $T_1$ मभीप्सिता
10. M गोकामोर्न

क्षीरं दधि घृतं तद्वद्भौमवारे तथैव च।
मकरस्य पञ्चमांशे स्थितवत्यहिमद्युतौ ॥ 58 ॥

[A]गृहं कृत्वा [1]साम्प्रतमेव प्रविशेद्योगोऽयं स्वकुलवृद्धिकरः।
मण्यादिबन्धनमुपदिष्टं गोधनस्य चाहिमगौ ॥ 59 ॥

मकराद्यपादसंस्थे चोराद्युपपातविजयाय।
[2]कुम्भाद्यपाद(गे)ऽर्के [3]दारुनाहृत्य विरचिते गोष्ठे ॥ 60 ॥

विनिविष्टगोधनानां वृद्धिर्निरुपद्रवा भवति।
मकराद्यंशगे भानौ दामबन्धो गवां [4]हितः ॥ 61 ॥

सिंहः सितो देवगुरुर्वराहो
व्याघ्रः शशी सोमसुतश्च हस्ती।
सूर्यः खरः सूर्यसुतो वृषाख्यः
चां भूसुतः स्वीकरणेषु योज्यम्? ॥ 62 ॥

ज्याघ्रर्क्षौ वसुवैष्णवौ [5]निगदितौ चित्राद्वयं कीट भौ
[6]प्राजेशानलभौ गवां निगदितौ [7]पूषार्क भूमाहिषौ।
याम्यर्क्षं करिणोऽश्विनी च हरिभं वागीश्वरीं चैव तत्
[8]मूलर्क्षौ मृगपैतृभौ च सकलं तत्रानुकूल्यं फलम् ॥ 63 ॥

प्राकारवृती कुर्याद्यमोदये कुजदिने जलभे।
[9]अदिति[10]चतुर्थांशगते बृहस्पतौ निक्षिपेच्च [11]मूलधनम् ॥ 64 ॥

---

दामः बन्धनपाशः।

---

1. $T_1$ सत्पतमेव
2. M कुम्भान्त्यपादेऽर्के
   T कुम्भाद्यपादकेऽर्के
3. M दारुण्यादाय
4. M हितम्
5. M निगदितं
6. $T_1$ व्राजेशा
7. $T_1$ भूषार्क
8. $T_1$ मूलर्क्षौ इति ग्रन्थपातः
9. $T_1$ दिति for अदिति
10. $T_1$ तथा M चतुर्थ्यांश
11. $T_1$ मौलधनं

---

A. अत्र छन्दो भङ्गः दृश्यते।

अस्मिन्नेव च योगे क्षिपेच्च [1]धान्यानि धान्यगृहे ।
सह शुक्रेण [2]मृगाङ्को यदाभ्युदेति स्वकीयहोरायाम् ।। 65 ।।

धान्यानि तदा स्वगृहे विनिक्षिपेद्वृद्धिमुपयान्ति ।
शुक्रोदये विशाखायां बद्धः सेतुः स्थिरो भवेत् ।

शुक्रवारेऽश्वयुग्युक्ते वृषे वस्त्रं नवं लभेत् ।। 66 ।।
[3]चन्द्रेऽन्तर्जलगे पात्रे नववस्त्रं निधीयताम् ।

आश्लेषार्केन्दुभे लग्ने न्यसेत्सर्पाकृतिं [4]बिले ।
गृहे क्षेत्रेऽथवा तत्र मूषिकादि [5]विनश्यति ।। 67 ।।

आर्द्रेन्द्रमध्यमांशस्थे चन्द्रे चन्द्रोदये सति ।
मृगभीतिकरः स्थाणुः स्थापितो मृगनाशनः ।। 68 ।।

[6]परिवेषे रवेर्दृष्टे कीलं लोहमयं क्षिपेत् ।
स्वसीमान्ते गृहाराम[7]सीमादीनां न गोभयम् ।। 69 ।।

चन्द्रस्य परिवेषे तु शिला [8](स्था)प्या स्वसीमनि ।
[9]गृहादीनां न गोलमूषिकादि भयं भवेत् ।। 70 ।।

कृष्णाष्टमीचतुर्दश्यो[10]श्चान्द्रे चन्द्रोदये सति ।
श्रीपर्ण्या [11]निहितो यूपो धान्यवृद्धिकरो भवेत् ।। 71 ।।

[12]तीक्ष्णांशावतिनीचस्थे अत्युच्चस्थे निशाकरे ।
[13]भौमस्तु नभसो मध्ये हिबुके भार्गवस्तथा ।। 72 ।।

---

अन्तर्जलगे पातालस्थे ।

---

1. M धान्यं निधान्य
2. M शशाङ्को
3. M चन्द्रे तज्जलगे
4. $T_1$ तथा M विले
5. $T_1$ विनिश्यति
6. M पाठः । T परिवेषो
7. $T_1$ सीमाद्रीनां
8. T स्थिण्या
9. $T_1$ गृहादिना
10. M पाठः । T चन्द्रे
11. M पाठः । T निहतो
12. M पाठः । T तीक्ष्णाङ्गावति
13. M भौमस्थस्तु

[1]एषः पातालयोगोऽस्य विपरीतस्तु [2]पार्वतः ।
भौमे स्वर्क्षगतेऽ[3]ङ्गस्थे लग्ने चन्द्रेऽम्बुगे भृगौ ।
पातालयोगोऽयमपि विपरीतस्तु [4]पार्वतः ॥ 73 ॥

पुष्ये प्रोष्ठपदे वापि शु[क्ला]ष्टम्या समन्विते ।
गुरुः शुक्रांशकेऽ[5]ङ्गस्थे मन्त्रसाधनमुत्तमम् ॥ 74 ॥

सौम्यवासवहस्तेषु चतुर्दश्यां च पर्वसु ।
कुजवारे हरौ लग्ने रक्षा[6]कार्या (वि)चक्षणैः ॥ 75 ॥

वारुणे ज्ञदिने रक्षा कार्या चापे बुधोदये ।
त्वाष्ट्रस्यैन्द्रस्य चोर्ध्वार्धे दम्यो वीणोदये वृषः ॥ 76 ॥

चन्द्रे कीटोदये शूर्पमखाजान्त्यांशसंश्रिते ।
व्यवहारं [7]नरः कुर्याद्विजयेत न संशयः ॥ 77 ॥

स्वांशगे चन्द्रजेऽश्विन्यां व्यवहर्ता जयेन्नरः ।
यमविष्णुविशाखानां पश्चाद्भागेऽलि[8]कर्किभे ॥ 78 ॥

[9]व्यवहारपदा दघा(द्)द्रव्यं स्वस्य स्थिरं भवेत् ।
आर्यादितिचतुर्थांशे स्थाप्यान्युपवनानि च ॥ 79 ॥

शुक्रेज्ञौ केन्द्रगौ जीवे [10]लग्नांशस्थे च भूषयेत् ।
चन्द्रेऽङ्गे च [11]चरस्थेऽसृक्[12]जीवौ केन्द्रे च भेषजम् ॥ 80 ॥

स्वातौ [13]सेतुं निब ध्नीयान्मन्दवारे वृषोदये ।
तनये द्विदेवतायास्तृतीयपादस्थिते [14]क्षपाभर्तुः ।
व्यवहारादिषु विजयं प्रयोक्तुरपि निर्दिशेन्मतिमान् ॥ 81 ॥

---

पार्वतयोगविपरीतस्थानं तत्तत्सप्तमम् ।

---

1. M पाठः । T एषा
2. $T_1$ पर्वतः
3. M रवस्थे for ङ्गस्थे
4. $T_1$ पर्वतः
5. M पाठः । T शंस्थे
6. T कार्यापि च क्षणैः
7. M पाठः । T नरं
8. $T_1$ कार्किभे
9. M व्यवहारवदा
10. $T_1$ लग्नाङ्कस्थे
11. $T_1$ चरस्थो
12. $T_1$ जीवा केन्द्रा
13. $T_1$ सेतुर्निब
14. M क्ष चा भर्तुः

प्रवपेत्कलमप्रभृतीनग्रेः प्रथमांशकस्थिते चन्द्रे।
करितुरगदम्यदमनक्रिया च तत्रैव करणीया ॥ 82 ॥

गुरुरेकः केन्द्रगतः क्रमुकादिक्षेपणे हितकृत्।
विनिदध्यान्नाग[1]लताः कन्यानवमांशस्थिते जीवे ॥ 83 ॥

जीवे स्थिरकालस्थायित्वं यो गच्छति योगवित्तासाम्।
[2]तालतरुनालीकेरी [3]कालीक्रमुकादयश्च निक्षेप्याः ॥ 84 ॥

शुक्रेऽनिमि[4]षान्तस्थे स्थापिता यान्ति [5]चिरकालम्।
मृगशिरसि कलमभेदात् प्रवपेत् कर्किणि विलग्नमायाते ॥ 85 ॥

सोमदिने तल्लग्ने [A]भुजर्क्षे निवपेदिक्षून्।
सौम्ये तृतीयपादे बहुफलस्य प्रसूत्यर्थम् ॥ 86 ॥

[6B]वल्यः कूष्माण्डक्या निहितव्याः पटोललताः।
लाङ्गुली-त्रिफला-लोह-चित्रकैः समदानिगैः ॥ 87 ॥

त्रिगुण(त्रि)[7]वृतायार्धश्लक्ष्णपूर्णानि कारयेत्।
भृङ्गराजरसे पिष्टां गुलिकामक्षमात्रिकाम् ॥ 88 ॥

[8]त(क्रं) [9]प्रातः पिबेच्छूले कुष्ठे च परमौषधम्।
[10]तुलामास्यादिमेऽर्काह्नि गृहीतोत्तरदिग्भवा ॥ 89 ॥

---

लांङ्गली अवाक्पुष्पी। लोहं कृष्णलोहम्। चित्रकं वह्निः। प्रातरस्योपयोगः।

---

1. M लतां
2. M पाठः। T कालतरु
3. M लाली
4. M षान्तयस्थे
5. M चरकालम्
6. M बल्यः
7. T तृ for त्रि
8. T तक्रो
9. M पाठः। T व्रातः
10. M तुल्या

---

A. अत्र भूजगर्क्षे इति भवेद्वा।
B. अत्र श्लोके छन्दो भङ्गो दृश्यते।

मृत्योः [1]शिःफा यस्य हस्ते नैवास्य विषजं [2]भयम् ।
शाक्रे तदुद्गमे यद्वदुद्धृताः वेष्टिताः पुनः ॥ 90 ॥

रक्तसूत्रेण [3]शाक्रर्चा जप्ता घोरग्रहापहा ।
इन्द्र[4]श्रेष्ठ [5]त्र्यगैन्द्रस्य त्रिसाहस्रमितो जपः ॥ 91 ॥

[6]धवलतरबाणपुङ्खीमूलं [7]तिष्ये समूलमुद्धृत्य ।
आस्ये विन्यस्याजौ रुन्धन् बाणौघमाभाति ॥ 92 ॥

पुष्येणोद्धृत[8]पाठा या मूलेनास्य गतेन च ।
स्पृशन्नप्यङ्गमस्यापि [9]न च्छिनत्ति न संशयः ॥ 93 ॥

गुरुपुष्यदिने प्राह्णे उद्धृत्य [10]धयिते तदा ।
श्वेतरक्तं नवामूले वर्षेऽर्धे चाहिभिर्हरेत् ॥ 94 ॥

---

मृत्युस्नुक् चतुरश्राख्यः पत्रहीनश्च । [11]शार्क्र्यर्चा इत्यत्र मन्त्रचिन्तायां, शाक्र्या इति द्रव्यचिन्तायाम् । शार्की इति पदम् । तदुद्गमे [12]ज्येष्ठानक्षत्रे ज्येष्ठाख्यताराया उदये। द्रव्योऽयं दिक्प्रसूनपठितः। रक्तसूत्रशब्देन रक्तवर्णाः श्वेतवर्णाः कृष्णवर्णाश्च दुकूलंतव उक्ताः । ? लताकृतं वलयं सूत्रत्रयेण पृथग्वेष्टितमत्रजप्तं करे धार्यम् । वलयस्यैकैक भागमेकैकेन सूत्रेण वेष्टयेदिति सम्प्रदायः । समस्त भागमेकैकेन वेष्टयेदिति केचित् । तत्पक्षे मन्त्राश्च त्रयः स्युः । तत्पक्षे नम इन्द्रेण इति । तत्पक्षे प्रथमस्य संख्यायुतं, अन्ययोः शतं सहस्रं च । धारणे च स एव योगः । धवलधरः सितपुष्पयुतः । आजौ युद्धे । बाणौघं निवारयति । धयिते [13](पी)ते । नवामूले पुनर्नवयोर्मूले ।

---

1. M शिवा
2. M भवेत् for भयं
3. $T_1$ शर्क्यर्चा
4. $T_1$ ग्रेष्ठ
5. $T_1$ त्र्यन्द्यत्र
6. $T_1$ धवलधव
7. $T_1$ दिष्ये
8. $T_1$ पागा
9. $T_1$ नुष्पिनक्ति
10. $T_1$ दयिते
11. $T_1$ शर्क्यचा
12. $T_1$ ज्येष्ठौ
13. T वीते

सिंह[1]मास्यादिमेऽर्काग्नि [2]गृहीता विधि[3]वच्छुभा।
[4]आर्किशिफा [5][भा]ललिप्ता [6]भूपसंवननप्रदा ॥ 95 ॥

ज्येष्ठाम्बुपीता त्वेषैव सर्वमारीभयावहा।
गुरुपुष्यदिने प्राह्णे कूष्माण्डरस[7]पिष्टया ॥ 96 ॥

दर्व्याकृता गुली नेत्रे [8]समक्ता भूतभीहरा।
कर्णिकेऽनलभे सूर्ये विलग्ने दिक्[8a](प्र)सूनकैः ॥ 97 ॥

विहितं कज्जलं नेत्र [9]आत्तं सर्वनिरञ्जनम्।
सहादेवी च दूर्वा च मधुपो मुसली तथा ॥ 98 ॥

विष्णुक्रान्ता सदा भद्रा लक्ष्मीश्चेन्द्रलता तथा।
मोहिनी च [10]प्रसूसानि दशभिः कज्जलक्रिया ॥ 99 ॥

एकं धूर्जटिनयनं त्रयोदश द्वे च सप्तमनुरुद्राः।
फणि[11]रपि दिक्क्रमभागा[12]स्त्वेषां योगः सहादीनाम् ॥ 100 ॥

---

[13](आ)र्किशिफा अर्काख्यवृक्षस्य शिफा। ज्येष्ठाम्बु तण्डुलजलम्। विधिवत् बलिकर्मादिपूर्वकम्। सिकता श्वेतपुष्पभवा। कूष्माण्डरसस्तत्फलरसः। दार्विदारु रजनी। गुली गुलिका। दिक्प्रसूनकैः दशभिः पुष्पैः। आत्तमञ्जितम्। पुष्पाणि, तेषां मानानि चाह - **सहेति**। (सहपूर्व) )(कुरुन्तल) देवी (मुयच्येवी)। दूर्वा (करुक)। मधुपं कैयन्त्रि। मुसलि (निलष्पन)। विष्णुक्रान्ता (न्तदेव) सदाभद्रा [14](चेरुपू)। लक्ष्मी (श्रीतालि)। इन्द्रलता (उर्विञ्ञ) मोहिनी। मानं क्रमभागाः द्रव्यक्रमेण भागा उक्ता इत्यर्थः। एवं सहादीनां योगः।

---

1. $T_1$ मास्यमिमे
2. M विहिता
3. M पाठः। T वत्सिता
4. M आर्किग्निशिफा
5. T फाल
6. M भू च संवनन
7. M विष्टया
8. M समत्ता

8a. T पसूनकैः
9. M श्लिष्टे for आत्तं T उक्तं द्र.व्या.
10. M पाठः। T प्रसूनाः स्युः
11. M रवि
12. M स्तेषां
13. T अर्कि द्र.मू.
14. $T_1$ चेरपू

[1]मुनिवर्तिर्यथा तस्मिन्नेव काले यथाविधि ।
विहितं ते न खरे सेवीतं त्वग्दोषनाशकृत् ।। **101** ।।

प्रस्थं तौरवकं चूर्णं [2]द्विपलं हुतभुग्रजः ।
[3]पलं लागुलिकाकन्दं शिष्टास्त्वर्धपलान्विताः ।। **102** ।।

मनः शिला गन्धकं च [4]कोरवी सोमराजिका ।
शशाङ्करे[5]खा सविलङ्गधारा
सपिप्पलीका सहुताशमूला ।
सायोमला [6]सामलका सतैला
कुष्ठानि सर्वाणि निहन्ति सद्यः ।। **103** ।।

निशावह्निस्तुरु[7](व)कमयस्कान्तं च किट्टकम् ।
लोहं खदिरवन्दाकमेभिस्थान्मुनिवर्तिकाः ।। **104** ।।

आद्यास्त्रयोद्विगुणितप्रस्था [8]धातुस्तु [9]माक्षिकः ।
सोमराजी गन्धकं च वन्दाकं चिरि[10]बिल्वजम् ।। **105** ।।

---

मुनिवर्तिर्वक्ष्यमाणद्रव्य[11]सप्तकेन कृता गुलिका । तस्मिन्नेव काले कार्तिकमासे कृत्तिकायां सूर्यलग्ने । तौरवकं तुरवकतैलम् । तुरवकं [12](नीरुवेट्टि) । कोरवी कृष्णजीरकम् । सोमराजिका [13]पोकिलदिः । शशाङ्करेखा च । एवं शशाङ्करोखादिभिः सप्तभिरन्यो योगः । विलङ्ग[14]धारा विलङ्गबीजं । अयोमलं इरिम्पुकिट्टन् । निशादिभिरन्यः । किट्टकं लोहकिट्टं । लोहः कृष्णलोहम् । **आद्यास्त्रय** इति- निशावह्निस्तुरुवकमित्येते त्रयः । धातुस्तु माक्षिक इत्यादिभिश्चैतत्त्रयं सम्बध्यते । अन्यथा माक्षिकधात्वादीनां मानकल्पनमनर्थकम् । माक्षिकधातुः पुमार्किरक्कल्ल चिरिबि[15]ल्वजं वन्दाकं, आमिन्मेलि[16]त्तिन् ।

---

1. M "मुनिर्वर्ति" इत्यारभ्य ततः द्वितीय-पङ्क्तिगात "नाशकृत्" पर्यन्तं मातृकायां नास्ति ।
2. $T_1$ द्विफलं
3. $T_1$ पललाङ्गे लिका
4. M पाठः । T कौरवी द्र.व्या.
5. M धारा for रेखा
6. M सामका
7. T मक
8. M पाठः । T धातुं द्र.व्या.
9. $T_1$ माक्षिकम्
10. M बिलवकम् द्र.व्या.
11. $T_1$ सकेन
12. $T_1$ नीरुवेदि
13. $T_1$ पोललेरिः
14. $T_1$ धरा
15. $T_1$ बिल्वकर्मक for बिल्विजं
16. $T_1$ लिड for त्तिन्

[1]च(त्वा)रो दशनिष्काः स्युरेभिस्तु गुलिका कृता।
[2]भृङ्गराजरसे देव्या नरसिंह[3]मृदाह्वये ॥ 106 ॥

स्थाने स्थिताया अर्चां तु कृत्वा तस्याः [4]प्रसा(ध)नम्।
चतुः प्रस्थमितैः शुक्लैस्तण्डुलैः [5]पक्कपूगकैः ॥ 107 ॥

विंशसंख्यैरेकबन्धनागवल्लीदलैरपि।
दत्तैः सम्यग्विधायैतत् सेवेत तदनुज्ञया ॥ 108 ॥

राजानो स्नायान्ति मकरे तृतीयपादेऽभ्युद्यम्यारभ्य।
भूषणं कृत्वा तल्लग्ने च पुनर्वनितविभूषयोः ॥ 109 ॥

वृषभान्त्यपादसंस्थे शशाङ्कजे [6]कारयेच्च खड्गादीन्।
तस्मिन् स्वहस्तसंस्थे परहेतुभ्यो न युधि भीतिः ॥ 110 ॥

उपयान्ति मधुरफलतामाम्रायो च विनिक्षिप्ताः।
अदितिचतुर्थपादव्यवस्थिते च तारकाधीशे ॥ 111 ॥

चित्रान्त्यपादसंस्थं [7]पश्यन्ति ज्ञगुरुसिताश्चन्द्रम्।
तत्कालनिहितचूतः प्रविरहितफलोद्गमो न स्यात् ॥ 112 ॥

मेषे वृषांशसंस्थे [8]शुधामरीचौ प्रपूरयेद्धान्यैः।
कोष्ठागारं तस्मिन् खलु धान्यानां स्यान्न विच्छेदः ॥ 113 ॥

---

भृङ्गराजस्य रसे गुलिकाः कार्याः। अत्रोक्तमौषधं यतोक्तस्थानस्थिताया देव्या अनुज्ञया सेव्यमित्याह - [9]देव्या इति। शुक्लतण्डुलादिभिः रक्तैः तस्याः प्रसाधनं सम्यग्विधाय तदनुज्ञया सेवेत इति योजनासम्बन्धोऽत्र स्थानशब्देनैव कार्यः। तौरवतैलं भृङ्गराजसेचित[10]कंकतेन साधितं कृत्वा [11]तस्मिन्नु(त्वा) गुलिका सेवितव्या इति गुरुपरम्परा। शशाङ्करेखेति श्लोकेन योगषट्कंवा कथितम्।

---

1. T चत्वरो
2. M मृगराजरसे
3. $T_1$ मृदं द्वये
4. T प्रसादनम् द्र.व्या
5. $T_1$ पक्कचूचकैः
6. $T_1$ तारयेत
7. $T_1$ पश्यति
8. M सुमामरीचौ
9. $T_1$ देव्य इति
10. T कतरकेन for ककतेन
11. T तस्मिन्नुकखा

वृषभे वृषांशसंस्थे भौमे वृक्षं [1]निपात्य कुर्वीत।
सम्यगुलूखलवृद्धिमस्मिन् तण्डुलवृद्धिर्विनिर्दिष्टा ॥ 114 ॥

दिनकृद्द्वितीयपादस्थितेऽर्कजे निहिततालवृक्षाणम्।
पत्राणि [2]न ध्वनन्ति प्रवातसमयेऽपि चित्रमिदम् ॥ 115 ॥

तुलावर्गोत्तमस्थे ज्ञे क्षिप्तः पूगो न नश्यति।
अंशे तुलादिमध्यान्ते क्रमात् ज्ञार्येन्दुसंश्रिते ॥ 116 ॥

वपेत्पूगेक्षुनिष्पावा न तो [3]जीवन्ति ते चिरम्।
अंशे मीनादिमध्यान्ते सेन्दुशुक्रसिते क्रमात् ॥ 117 ॥

[A]कन्दं कूष्माण्डं [च] नालीकेरपूगादिकान् वपेत्।
अंशे कन्यादिमध्यान्ते बुधार्किगुरुसंश्रिते ॥ 118 ॥

गोष्ठारम्भो [4]नालिकेरवापो महिषसङ्ग्रहः।
कीटान्त्यगते जीवे पूग[5]वापः कुजे कृषिः ॥ 119 ॥

मन्दवारस्य मध्याह्ने कृष्णधान्यानि [6](वा)पयेत्।
[B]कृष्णधान्यं वपेन्मन्दवारे मध्यन्दिने स्थिते ॥ 120 ॥

सूर्यवारे वपेद्व्रीहीन् रक्तधान्यानि चोषसि।
चन्द्रादिपञ्चवारेषु तेषामेवोदये क्रमात् ॥ 121 ॥

पद्मानि कोद्रवान् पूगान् फलिनः पुष्पिणो वपेत् ॥
राहूदये भौमवारे कुल(त्था)नपि वापयेत् ॥ 122 ॥

सारिणं क्षीरिणं कण्टकिनं विफलसत्फलौ।
पुष्पितं दुर्भगं वृक्षं वपेदर्कादिषु क्रमात् ॥ 123 ॥

---

कृष्णधान्यं तिलादि।

---

1. $T_1$ निपीत्य
2. $T_1$ नङ्ध्वनन्ति
3. $T_1$ जीवन्ति चेरम्
4. $T_1$ लीलिकेर
5. $T_1$ पापः
6. T पापयेत्

---

A. अत्र छन्दसः रक्षणाय चकारः स्थापितः।
B. अत्र पूर्वोक्त "मन्दवारस्य" इत्यस्य श्लोकस्यास्य समानार्थकः श्लोकार्धः भवति।

वंशादिकः [1]कण्टकिनः [2]स्नु[ह्या]द्यादुभया स्मृताः ।
सारिणश्चन्दमुखा क्षीरिणोऽश्वत्थ[3]पूर्वकाः ।। 124 ।।
फलिनः पनसाद्यास्तु विफलाः पाटलादयः ।
मूलर्क्षे स्थापयेद्वृक्षान् यमवारे यमोदये ।। 125 ।।
आश्लेषे स्थापयेदिक्षून् बुधवारे बुधोदये ।
प्रवपेत् कर्कटे लग्ने कलमानिन्दुवारगे ।। 126 ।।
आरवारेऽदितौ मेषलग्ने [4]कङ्गून् वपेद्बुधः ।
यमवारे यमेऽङ्गस्थे वारुणे [5]क्रोद्रवान् वपेत् ।। 127 ।।
सबुध्नौ गुरुवारेऽम्बपुष्यकर्क्युदये वपेत् ।
वपेत् कुन्दं च [6]चू(तं च) सेन्दौ मन्दे विलग्नगे ।। 128 ।।
वपेत्सेन्दौ वृषाद्यंशे [7]व्रीहीनश्वांश्च शिक्षयेत् ।
वृषभाद्यंशगेऽङ्गस्थे बुधे चूतवनं वपेत् ।। 129 ।।
[A]चूतमादिन्यन्ते ज्ञे वृषभाशगेऽङ्गगे ।?
नानायोगा केचिदित्थमुक्त्वा च शुभोदयाः ।। 130 ।।

## अथ भोदयफलम् ।।

लग्ने शशिनि रोहिण्यां वपेद्वृक्षलतादिकम् ।
[8]चित्रामूलमघोत्तरात्रयवसु[9]श्री(पे)न्दुमित्रानिल-
प्राजापत्यविशाखहस्तवरुणेषूर्ध्वास्य[10]राश्यू(नभे) ।
कन्यासिंहकुलीरगोमृगधनुःकुम्भे च वीणोदये
मीने वा भुवि नालिकेरपनसान् रम्भेक्षुपूगान् क्षिपेत् ।। 131 ।।

---

अथ शुभोदया इति । तत्तन्नक्षत्रे तस्यास्तस्यास्ताराया उदये कर्म वक्ष्यते इत्यर्थः । चित्रामूलादिषु विहितं तु नक्षत्रस्योदयं विना नक्षत्रपलत्वमात्रेण भोदये अङ्गीकृतम् । अथवा भोदयशब्देन नक्षत्राणामश्विन्यादीनां प्रवृत्तिकालः उक्तः । तत्फलं भोदयफलम् ।

---

1. M पाठः । T कण्डकिनं
2. T स्नुगाद्या
3. M पाठः । T पूर्वकाम्
4. $T_1$ पाठः । T तङ्गून्
5. $T_1$ पाठः । T काद्रवान्
6. T चूतजं
7. M पाठः । T व्रीहिन
8. M अयं श्लोकः मातृकायां न दृश्यते ।
9. T श्रीवेन्दु
10. T राश्यून् नमे

---

A. प्राक्तश्लोकार्धे प्रतिपादितविषयः एव अस्मिन्नपि श्लोकार्धे पदपरिवर्तनेन दृश्यते । छन्दोभङ्गश्च दृश्यते ।

नागेक्षुबृहतीसंस्थं मूलादितियमाग्निभे ।
मूले कन्दं शालिर्मन्दे चन्द्रे जीवेऽथवाङ्गगे ॥ 132 ॥

दस्रे स्वभोदये पूगान् मुद्रं त्वाष्ट्रे स्वभोदये ।
सर्वं स्वभोदयेऽन्त्याश्वि[1]मित्राग्नित्र्यार्यवाय्विने ॥ 133 ॥

अश्विन्ये तल्लग्ने खातं कृत्वा पुनश्च तल्लग्ने ।
तस्यामेव निदध्यादिक्षूनपि नालिकेरीश्च ॥ 134 ॥

याम्यर्क्षे तदुदये त्रिःपरिवर्तैररण्यकृष्याप्तिम् ।
कुर्यात्क्रमेण सम्यक् फलन्ति सस्यानि निर्विघ्नम् ॥ 135 ॥

[2]यन्निगदितं भरण्यां तदेव कर्माशुशुक्षणौ कार्यम् ।
तद्योगः [3]क्रमवापितसस्यफलानां न परबाधा ॥ 136 ॥

रोहिण्यां तल्लग्ने दारु समादाय चैव गृहादीनाम् ।
तल्लग्ने तस्यां स्थापितव्यः [4](श)ङ्कुः स्थिरकार्याणम् ॥ 137 ॥

मृगशिरसि तद्विलग्ने मृदं समादाय धाम्नि विन्यस्य ।
पुनरपि तद्योगविधौ [5]कृष्टिं कुर्यादविघ्नार्थम् ॥ 138 ॥

शूलभृति तद्विलग्ने विद्यारम्भं प्रकुर्वीत ।
योगोऽयमंशुमानिव नलिनीं बुद्धिं विकासयति ॥ 139 ॥

अदितौ तदीयलग्ने नियुज्य [6]कृष्टिं पुनश्च तद्योगे ।
निक्षिप्तनालीकेरीक्रमुका बहुफलविशेषाः स्युः ॥ 140 ॥

---

त्रिपरिवृत्तैःतिसृषु भरणीषु निरन्तरं कृतैः कर्मभिः । वनच्छेद[7]दाहकर्षणादीनि कर्माणि । कृष्याप्तिं कृषिक्रियाम् । कुर्यादित्यर्थः । क्रमेण वनच्छेदादिक्रमेण । तद्योगक्रमवापितेति तिसृषु कृत्तिकासु तदुदये वनच्छेदादिक्रमेण वापितस्य फलानामित्यर्थः ।

---

1. $T_1$ मित्रानि
2. M यत्कथितं
3. $T_1$ क्रवापितसस्य
4. T शुङ्कुः
5. M पाठः । T तुष्टिं
6. M पाठः । T तुष्टिं
7. $T_1$ दान for दाह

पुष्यर्क्षे तल्लग्ने दारु समाहृत्य निलयनं कृत्वा ।
तद्योगलग्नसमये प्रविशेत् पुत्रादिवृद्ध्यर्थम् ॥ 141 ॥

फणिनि तदुदये कृष्टिं प्रारभ्य पुनस्तथैव तद्योगे ।
प्रवपेत् कलमप्रभृतीन् [1]व्यपे(द)विघ्नं फलन्त्येव ॥ 142 ॥

व्यवहारवति क्षेत्रे पितरि समुद्यति मृदं समादाय ।
चुल्यामर[2]ज्जु(के)ऽधो विनिक्षिपेत्तां प्रयत्नेन ॥ 143 ॥

पुनरपि तद्योगोदयकाले कृष्टिं नियुज्य तत्क्षेत्रे ।
तद्योगलग्न एव प्रवपेच्चेदात्मनो भवति [3]लवनम् ?॥ 144 ॥

तस्मिन् लग्ने सम्यक्कुर्यात् प्रयोगतत्वज्ञः ।
बहुफलति योगशक्त्या न भवेत् प्रत्यर्थिकृतबाधा ॥ 145 ॥

अयोभगे द्रवीकृत्य खड्गं कृत्वा तदावहेत् ।
लाङ्गलहरणं करणं कृष्टेर्व[4]पनं च कारयेत् क्रमशः ॥ 146 ॥

[5]अर्यम्णे तल्लग्ने रक्षा च भवत्यतीव तारायाम् ।
दार्वाहरणं [6A]शुल्बस्थापनमपि गोप्रवेशनं क्रमशः ॥ 147 ॥

---

[B]पुलिकः अग्निस्थानम् । अरज्जुरित्यशम पेषणी । अरज्जुकेऽधः [7]अशमन्यधः । अशमनोऽधः स्थापयेदित्यर्थः । अन्यथा पाठेऽ[8]प्यशमोऽध इत्येवार्थः । द्रवीकृत्य अग्निसम्पर्केण [9]दीर्घीकमुक्त्वादि कर्मयोग्यं कृत्वेत्यर्थः ? । [C]कारयोऽर्यमायन्तरक्ष्मातत्प्रयोगेन स्यात् ।? दार्वाहरणं गोगृहार्थं दारुसङ्ग्रहणम् ।

---

1. T व्यपेतविघ्नं
2. T रज्जुरेधो
3. $T_1$ लवन्नम्
4. M र्व्यापनं
5. $T_1$ अर्यम्ले
6. M गोष्ठस्थापनमपि
7. $T_1$ अशमायधः
8. $T_1$ ण्यश्मनो
9. $T_1$ "दीर्घीकमुकत्वादि" इत्यारभ्य ततः चतुर्थ-पङ्क्तिगात "समुपस्य" पर्यन्तं मातृकायां नास्ति ।

---

A. अत्र "शुल्ब" इति वा "कोष्ठ" इति वा पाठसन्देहः ।
B. अत्र व्याख्यानगतं "पुलिकं" शब्दः मूले न दृश्यते ।
C. अत्र "अर्यम्णे तल्लग्ने ....तारायाम्" इत्यस्य श्लोकार्धस्य विवरणमिव भाति । किन्तु अस्यार्थ अस्फुट एव ।

हस्ते तदीयलग्ने नियोजयेत् गोप्रसिध्यर्थम्।
चित्रायां तल्लग्ने नियुज्य कृष्टिं तथा स्वातौ।
तद्योग एव कुर्याद्वपनं सस्यप्रसिध्यर्थम् ॥ 148 ॥

[1]हेमादानं करणं विभूषणं चैव कारयेत् क्रमशः।
शक्राग्नौ तल्लग्ने भर्तृवती धनवती भवति ॥ 149 ॥

मित्रर्क्षे तल्लग्ने खातं कृत्वा पुनश्च तल्लग्ने।
निक्षिप्त[2]तालतरवश्चिरकालस्थायितां यान्ति ॥ 150 ॥

[3]मैत्रद्वितीयांशकसम्प्रयुक्त -
श्चन्द्रोदये मैत्रमुहूर्तयोगे।
स्वल्पप्रदानादृणकोटिनाशः
शत्रुं च मित्रं कुरुते क्षणेन ॥ 151 ॥

शतक्रतवे तदुदये [4]वि(त)त्य केदारकं वपेत्तस्मिन्।
तद्योगे तल्लग्ने वार्ताकप्रभृतिबीजानि ॥ 152 ॥

यानि प्ररोहसमये व्युत्पाद्य [5]पुनर्विरूढयोगानि।
तेषां योगोऽयं खलु बहुफलप्रसूत्यर्थमुपदिष्टम् ॥ 153 ॥

खननं [6]कौ(प)कमुचितं गोमयकाष्ठास्थिभिश्च तद्दहनम्।
[7]वल्लिक्षेपात् क्षिपन्ति क्षितिरुहमूले यथाक्रमशाः ॥ 154 ॥

---

ोगृहस्थापनं क्रमशः हस्ताश्रये। करणं हेम्ना भूषणकरणम्। वितत्य विस्तारीकृत्य। कर्षणेन स्थलं समं कृत्वेत्यर्थः। प्ररोहसमये व्युत्पाद्येति। यानि बीजानि प्ररोहायैकत्र वेन्यस्य पुनः प्ररोहेजाते तस्मादुद्धृत्य अन्यस्मिन् स्थाने निक्षिप्यन्ते, तेषांमित्यर्थः। वि(रु)ढ़योगानि श्वादितानि ? भूमौ क्षिप्तानीत्यर्थः। कौपकं रवननं कूपखननम्। ल्लिक्षेपाय गर्तमित्यर्थः। तद्दहनं गोमयादिभिर्दहनम्। क्षिपन्ति तद्विदः इति शेषः। क्रमशः त्रिषु मूलभेषु। [9]क्षिति(रुहो) वृक्षः।

---

1. $T_1$ हेमदानं
2. $T_1$ तावतरव
3. M अयं श्लोकः मातृकायां नास्ति।
4. T विधत्य द्र.व्या.
5. $T_1$ पुनर्वियोगगूढ़योगानि
M पुनर्विरुढमूलानि द्र.व्या.
6. T कौगवमुचितं, $T_1$ कौवकमुचितं
7. M वल्लिक्षपं कुर्यात् क्षिति
8. T विगूढ़ द्र.मू.
9. T क्षितिरहि द्र.मू.

खननं कूपादीनां जलभे तत्प्रोद्गमे समारभ्य ।
तद्योगलग्नकाले वरुणेऽम्बुस्रावणं कुर्यात् ॥ 155 ॥

वहुफलति सस्यजातं तत्सलिलप्लावितप्रदेशेषु ।
[1]क्रमुकाद(य)श्च तज्जनितजलप्रायिनो भूरिफलदाः स्युः ॥ 156 ॥

[2]विश्वर्क्षे तल्लग्ने कलभशि[3]रस्यंङ्कुशो निधातव्यः ।
तुरग[4]गजारूढविधिर्योगेऽस्मिन्नेव करणीया ॥ 157 ॥

श्रवणे तदुदयकाले [4a]नर(प)तिभवन[5]प्रवेशनं हितदम् ।
अभिषेकपट्टबन्धयोरपि विशिष्टस्त्वयं योगः ॥ 158 ॥

[A6]नी[डा]करणं [7]प्रवेशनं समरे ताम्रचूडविजयार्थी ।
क्रमशो नियोजये[8]द्वसुयोगे तस्योद्गमे तज्ज्ञः ॥ 159 ॥

यत्प्रोक्तं याम्यर्क्षे शतभिषजि तदेव कर्म कुर्वीत ।
धान्यहृतिरपि तस्मिन् योगे तज्ज्ञेन करणीयम् ॥ 160 ॥

अजपादे तल्लग्ने प्राकारनिबन्धनं प्रकुर्वीत ।
[9]तस्यैव योगलग्ने वास्त्वपि सम्यग्वि[10]धातव्यम् ॥ 161 ॥

पुनरपि तद्योगोदयकाले सेनां विनिर्दिशेद्दुर्गे ।
[11]तद्दुर्गं [12]शत्रु[13]सङ्घैरलङ्घनीयत्वमुपयाति ॥ 162 ॥

---

कलभो [14]बालगजः । [15]नी[डा]करणं पक्षिणामालयकरणं, प्रवेशनम् । ताम्रचूडस्य कुक्कुटाख्यविहगस्य समरे कुक्कुटयुद्धे द्वन्द्वयुद्धे । वरुणे वरुणस्यदिति ?। परीक्षार्थं जयपरीक्षार्थं कुक्कुटयोर्युद्धं प्रवर्तयन्ति हि योद्धारः ।

---

1. T क्रमुकादश्च
2. M पाठः । T विश्वामरसंस्थे कल
3. M शिरस्यङ्कुरो द्र.मू.
4. M गजारोहविधि
4a. T नरवित
5. $T_1$ प्रदेशनं
6. T नीलाकरणं
7. M प्रवेशनमपि समरे
8. M वसुभे तस्य समुद्गमे
9. M तत्रैव
10. M पाठः । T विधातव्यः
11. M तद्दुर्गे
12. M रिपु for शत्रु
13. $T_1$ संख्यैः
14. $T_1$ वान्यगजः
15. T नीलाकरणं

---

A. अत्र मूले व्याख्याने च नीलाकरणमित्येव दृश्यते । व्याख्याने "पक्षिणामालयकरणं" इत्युक्तत्वात् "नीडाकरणं" इति शोधितम् ।

[1]अहिर्बुध्नि [2]तदुद्गमसमये सम्यग्निधापयेदिक्षून् ।
नगरादीनां श्रेष्ठो वास्तुनिवेशस्य तद्योगः ॥ 163 ॥

सलिलसन्निधानं स्नपनं यानं वाहनं क्रमशः ।
रेवत्यां तल्लग्ने तत्कुर्याद्वाहनस्य वृद्ध्यर्थम् ॥ 164 ॥

## [इति] भोदयफलम् ॥ अथ ताराणां स्वरूपं फलञ्च ॥

दस्रेऽर्कयुक्त आनन्दः सितज्ञाभ्यां [3]सुधा भवेत् ।
कुजेन सिद्धयोगोऽह्नो मध्ये [4]रक्ताब्जदर्शने ॥ 165 ॥

पञ्चाहाद्वृद्धि[5]मर्घस्तु मध्यः सङ्कम[6]सम्भवे ।
ज्वरादिरोगसद्भावे शारे वारेऽह्नि वा [7]शमः ॥ 166 ॥

जानकीसंख्यसमिधामश्वत्थानां तु होमतः ।
गायत्र्यैकाहमथवा [8]षडहं वाथ शाम्यति ॥ 167 ॥

[9]अश्विनौ देवता तस्य ग्राह्योऽश्वः केरपूगयोः ।
पापः शुभो [10][न्यङ्]मुखोऽसौ ताराः पञ्चाब्धयोऽथवा ॥ 168 ॥

मुद्गान्नं प्राश्य गमनं पुमान् योनिस्तुरङ्गकः ।
राजली: [11]पक्षिरुदितस्त्वकाराकारवर्णकः ॥ 169 ॥

---

अथ ताराणां स्वरूपं फलं चाह - **दस्रेऽर्कयुक्त** इति। [12](दस्र)युते अर्कवारे आनन्दो नाम योगः । रक्ताब्जो रक्तवर्णो मेघः । तस्मिन् सङ्क्रान्तिः भवति [13]चेदर्घो मध्यो भवेत् । क्रयविक्रये पणादिद्रव्येण लब्धस्य [14]व्रीह्यादेः मानाधिक्यमर्घः । दस्रे रोग आरब्धश्चेत् पञ्चविंशे चतुर्विंशे वाह्निशमः । [15]जानकी अष्टोत्तरशतम् । केरो नालिकेरः । न्यङ्मुखः अधोमुखः ।

---

1. M अहिर्युद्धे
2. M तस्यैवोद्गमसमये
3. $T_1$ मुधा for सुधा
4. $T_1$ रक्ताब्द
5. $T_1$ मर्खस्तु
6. M सम्भवेत्
7. $T_1$ रामः for शमः
8. $T_1$ पाठः । T षडङ्गं
9. $T_1$ अश्विना
10. T ण्यं मुखो द्र.व्या.
11. M पक्षरुदित
12. T अर्क for दस्र
13. $T_1$ चेदर्के
14. $T_1$ व्रीह्याभे
15. $T_1$ जाजर्की

[1]बृहतीक्ष्वादिवापश्च भैषज्या[2]द्यपि शस्यते ।
चैत्रश्रावणयोः शून्यं नमोनाड्याः परं विषम् ॥ 170 ॥

याम्ये [3]च सप्तमीयुक्ते विनाशोऽर्कयुते पुनः ।
[4]कण्टको यमपूर्वोऽह्नोमध्ये रक्ताब्ददर्शने ॥ 171 ॥

[5]दशाहादथवाष्टाहाद्वृष्टिः सङ्क्रमसम्भवे ।
अपोर्धो ? व्याधि[6]सद्भावे पूर्ववद्धोमयोगतः ॥ 172 ॥

अष्टोत्तरशतं कृच्छ्रादायुःशेषं च जीवति ।
योनिर्गजः [7]पिङ्गलो(विः)स्त्रीतारा चापभृङ्ग्योः ॥ 173 ॥

कन्यायां चासृगंशस्य [8]सद्भावे धान्यसङ्ग्रहः ।
वृषलीस्त्रीषु भद्रां च नवमीं च विनोदये ॥ 174 ॥

कुजार्यचन्द्रपुत्राणामं[9]शकेषु दिनेषु च ।
भूमिप्रवेशः शस्तोऽत्र शून्यता मासि फाल्गुने ॥ 175 ॥

इ ई [10]इत्यक्षरं [11]दन्तीग्राहो [12]बृहतिकावपि ।
याम्योदये वनकृषिर्जिननाड्याः परं विषम् ॥ 176 ॥

यमोऽस्य देवतान्त्यांशे [13]दिनमृत्युरिहोदितः ।
षट्तारा कृत्तिका स्त्री च [14]न्यङ्क्षुखी दधिभोजनम् ॥ 177 ॥

याने [15]पतत्री राजालिर्नदेयं वस्वृणेतरत् ।
गृह्णीयात् [16]स्वं पशुर्ग्राह्यः पञ्चम्यर्कदिने विषम् ॥ 178 ॥

---

विः पक्षिः । कुजार्यचन्द्रपुत्राणामंशका[17] दिनांशकाः । याम्योदये भरण्युदये । बृहतिकौ बृहतिद्वयं निक्षेप्तव्यम् । वनकृषिश्च ।

---

1. $T_1$ बृहति
2. $T_1$ दि विशस्यते
3. $T_1$ ज्ञ for च
4. $T_1$ पाठः । T कण्डको
5. $T_1$ दशाहाद्वाथ
6. M सम्भावे
7. T पिङ्गलोऽपि द्र.व्या.
8. M सम्भावे
9. $T_1$ मांशकेषु
10. $T_1$ इत्याक्षरं
11. $T_1$ दन्ति
12. M बृहतिकां वपेत् द्र.व्या.
13. M पाठः । T दिनमित्यु
14. $T_1$ न्यन्दुखी
15. $T_1$ पतति
16. $T_1$ सम for स्वं
17. $T_1$ कादि नाशकाः

[1A]नागात्परा [2](वि)षघटी सुधायोगः [3]शशाङ्कजे।
शुक्रे [4]कलिर्यमाद्यस्तु [5]कण्टकः सूर्यवासरे ॥ 179 ॥

सनन्देऽर्के [6]वरो योगस्तरुणां स्थापनं शुभम्।
दध्यन्नेन घृतार्द्रैश्च बलिः स्याच्छालितण्डुलैः ॥ 180 ॥

[7]देवताग्निश्च पञ्चाहादष्टा[8]हात्पञ्चविंशतः।
दिनाच्च रोगमुक्तिः स्यान्मध्यमोऽर्घस्तु सङ्क्रमे ॥ 181 ॥

वैशाखे मासि शून्यत्वं योनिरत्राज इष्यते।
रोहिणी पञ्चतारा स्त्री [9]कदेवत्यो ध्र्वव[10](क्रि)का ॥ 182 ॥

ऋ ॠ लृ ॡ इत्यर्णास्तु सर्पो योनिः शिखी च विः।
यात्रायां कृसरं भोज्यं प्रतिष्ठाद्यत्र[11]शोभनम् ॥ 183 ॥

गुरुयोगे वियोगेऽच्छे मृत्युः सिद्धस्तु पङ्गुना।
अष्टम्यां मृत्युरार्कासृग्योगे धान्यस्य [12]सङ्ग्रहः ॥ 184 ॥

स्थिरकार्याणि योज्यानि ज्वरादावष्टवासरात्।
[13]एकादशाहतो वापि [B][शमः] पूर्वोक्तहोमतः ॥ 185 ॥

परं गन्धादिकैरप्यशुद्धान्नेन बलिं हरेत्।
निभद्विषं मध्यमोऽर्घः सङ्क्रमे भूकभं बगम् ? ॥ 186 ॥

---

1. $T_1$ नगात्
2. $T_1$ वृषघटी
3. $T_1$ शशाङ्कजे
4. M कवि
5. M कण्टकः सूर्यवासजे
6. M परो योग
7. $T_1$ देवतानिस्त
8. M पाठः। हात्वं च विंशतम्
9. M पाठः। T तदेवत्यो
10. T वत्रिका
11. M भोभनम्
12. $T_1$ सङ्ग्रहा
13. "एकादशाहतो वापि" इत्यारभ्य ततः पञ्चदशपङ्क्तिगात परं विषं" पर्यन्तं $T_1$ तथा M मातृकयोर्नास्ति।

---

A. अत्र "नागात्" पदेन त्रिंशत्संख्या विवक्षिता। अतः नगात् इति M पाठोऽपि साधुरेव।
B. अत्र छन्दोरक्षणार्थं प्रसङ्गवशाच्च "शमः" इति पदं मया स्थापितम्।

तल्लग्ने पाटितं वक्रगतं सर्ववशीकरम् ।
मृगशीर्षं पुमांस्तिर्यङ्मुखं तारात्रयात्मकम् ।। 187 ।।

राजालिर्विस्विक्षिकुविसर्पयोनिरेकारैकारवर्णकम् ?।
मृगमांसाशनाद्यत्र वयो नाड्याः परं विषम् ।। 188 ।।

शक्रचापेऽष्टदिवसाद्वृष्टिर्मासे तु कार्तिके ।
शून्यं गुरुदिने मृत्युः सोमे सिद्धं बुधे सुखम् ।। 189 ।।

सोमवारे वृषे लग्ने कुम्भस्य स्थापनाद्गृहे ।
वृद्धिरस्योदये क्षेत्रे मृद्ग्रहादात्मसाद्भवेत् ।। 190 ।।

ज्वरादौ पूर्ववद्गुण्यात् पायसेन विमिश्रितात् ।
होमं कृत्वा मृगमाषवलिना शर्कदिने गते ।। 191 ।।

सुखी भवति मृत्युर्वा नवमे वासरे भवेत् ।
अदृष्टे भेदवशतो जीवेदर्घ परं विषम् ।। 192 ।।

[A]वर्षमासे शून्यमृत्युरसृगदिने ------- ।
नन्दायुजीवरो योगः [1]कु(जे) सेतुर्वृषोदये ।। 193 ।।

मन्दाहयोगे मध्यस्था द्वितीया[2](ङ्घ्रौ)द्युमृत्युभाक् ।
कुलीरलग्ने सूर्यारवार औषधसेवनम् ।। 194 ।।

विद्यारम्भो [3]विलग्ने स्याद्वृषं च मधुपं तथा ।
[4]भद्रिकां नवमीं चापि हित्वा गुरुकुजोदये ।। 195 ।।

इन्दोश्च लग्ने सद्वारे नवांशे भूप्रवेशनम् ।।
ज्वरादौ क्षौद्रसंमिश्रैस्तिलै[5]रुक्तप्रकारतः ।। 196 ।।

---

1. T कुज
2. $T_1$ याघ्रौ
3. M विलग्नं
4. $T_1$ भद्रीका
5. M रक्त

---

A. इतः परं आर्द्रा नक्षत्रस्य स्वरूपं भवेद्वा। मृगशिरानक्षत्रस्य तथा पुनर्वसुनक्षत्रस्य च मध्ये वर्तमानत्वात्। व्याख्याने भूतनिम्बं कुन्दिरिक्क इत्यपि दृश्यते। लिङ्गपक्षिमुखादिविवरणस अदर्शनत्वाच्च मूले ग्रन्थपातः भवेद्वा। श्लोकोऽपि अपूर्णः।

होमं कृत्वा पायसेन [1]बलिः पञ्चाहतः सुखी ।
न चेत् शुभदिने मृत्युर्जीवनं वात्यदृष्टतः ॥ 197 ॥

अल्पोऽर्घःसङ्क्रमे नामकरणं तु विकल्पितम् ।
पुनर्वसुस्तु [2]षट्तारा पुमान् पक्ष्यण्डजः स्मृतः ॥ 198 ॥

मार्जारयोनिरोकारश्चौकारश्चाक्षरं मतम् ।
पटोलं प्राश्य [3]यात्रा च नगनाड्याः परं विषम् ॥ 199 ॥

ज्वरादौ तु घृताभ्यक्तैस्तण्डुलैर्जानकीसमम् ।
[4]हुत्वा माल्ययुता शुद्धक्रूरेण च बलिं हरेत् ॥ 200 ॥

अदितिर्देवता सप्तदिने वा विंशतोऽधिके ।
सद्दिने वा रोगमुक्तिर्बीजवापादि शस्यते ॥ 201 ॥

शून्यं कर्कटके मासि सुधायोगो गुरोर्दिने ।
सिद्धयोगोऽर्कवारे स्याद्विधौ नाशोऽर्घवर्धनः ॥ 202 ॥

सङ्क्रमे पुष्यभं त्वार्यदेवत्यं च [5]त्रितारकम् ।
पुमान् पक्षी मयूरस्तु वृक्षोऽश्वत्थोऽजयोनिकः ॥ 203 ॥

ऊर्ध्ववक्त्रश्च यात्रा च घृत [6]भुक्त्या नराद्विषम् ।
[7]गां स्त्रियं वृश्चिकं दुर्गां हित्वासृ[8]ग्ज्ञार्यचन्द्रभे ॥ 204 ॥

---

भूतनिम्बं [9]कुन्दिरिक्क । अण्डजो हंसः । शुद्धक्रूरेण केवलेन क्रूराख्येनांशेन, भूतक्रूरमिति प्रसिद्धम् । दुर्गा नवमी । [10]असृ(ग्ज्ञा)र्यचन्द्राणामंशकग्रहणे उदयग्रहणे च वृषभस्य प्राप्तिः ।

---

1. M बलिं
2. $T_1$ षं तारा
3. $T_1$ यात्रा for यात्रा च
4. M भुत्वा
5. $T_1$ तितारकम्
6. M भूक्त्या
7. M गाः
8. M पाठः । T ज्ञास्य द्र.व्या.
9. $T_1$ कुञ्चिरिक्क
10. T असृजार्य द्र.मू.

[1]तदंशके वा तल्लग्ने [2]भूप्रवेशस्तु सिद्धिदः ।
अशेषं कर्म [3]तत्रेष्टं वैशाखे मासि शून्यता ॥ 205 ॥

यम[3a]कण्टकता सूर्यसोमयोः शुक्रभे विषम् ।
गुरौ [4]सिद्धो ज्वरादौ तु [5]क्षीरा(त्तैः) श्यामतण्डुलैः ॥ 206 ॥

हुत्वा तु पूर्ववद्गन्धमाल्यैः शुद्धोदयेन तु ।
बलिं हरेत्त्रिदिनतः सप्ताहाद्वा सुखी भवेत् ॥ 207 ॥

मध्यमोऽर्घःसङ्क्रमे स्यादाश्लेषाद्रतु[6]तारका ।
न्यङ्मुखी स्त्री च करवगा वर्णा [7]भूरुट् तु पिप्पलः ॥ 208 ॥

[8]वेणुर्वा विस्तु राजालिर्योनिर्मार्जारकः पयः ।
पीत्वा यात्रा नगादूर्ध्वं [9]विष(मन्त्यां)शके मृतिः ॥ 209 ॥

दिनाख्या तु सुधा शुक्रे सनन्दाकुजयोर्वरम् ।
यम[10]कण्टकता सौम्ये सर्परन्ध्रे [11]स्थिरं भवम् ॥ 210 ॥

निरवनेद्वैरिबाधाया इक्षूप्तिः सोमवारगे ।
ज्वरादौ पूर्ववद्धुत्वा भिक्षान्नेन बलिं हरेत् ॥ 211 ॥

[12]अष्टाहान्म्रियते प्रायो बह्वदृष्टेन जीवति ।
अल्पोऽर्थः सङ्क्रमे सर्पो योनिः कर्मात्र दारुणम् ॥ 212 ॥

चतुस्तारा मघा स्त्री च न्यङ्वक्त्रा स्याद्वटस्तरुः ।
पनसो वा पिङ्गली [13]विर्मूषो योनिर्घङाक्षरम् ॥ 213 ॥

---

1. $T_1$ तदंशते
2. M भूप्रवेशे च
3. $T_1$ तत्रोष्टं
3a. M पाठः । T कण्डकता
4. M सिद्धौ
5. T क्षीरात्तैः
6. M तारिका
7. $T_1$ भूरु तु
8. M पाठः । T वेणुर्वाविस्तु
9. T विषमान्त्यंशके, M विषमाग्यांशके.
10. T कण्डकता । M पाठः ।
11. M स्थितं
12. अष्टाहाम्रियते
13. $T_1$ विमूर्षो

[1]प्रा(श्य) तैत्तिरं मांसं त्रिंशन्नाड्या परं विषम् ।
[A][2]वन्दाकं सित[3]मन्दारगतं संयोज्य निक्षिपेत् ॥ 214 ॥

धान्यपात्रे धान्यचयं ग्लौर्बीजजपसंस्कृतम् ।
श्राद्धं कृत्वा [4]भूप्रवेशे वित्तं [5]बहुविधं भवेत् ॥ 215 ॥

स्वं गृह्णीयान्न दद्याच्च गोग्रहोऽत्र सुशोभनः ।
[6]कार्तिके मासि शूयत्वं नाशः शुक्रदिने भवेत् ॥ 216 ॥

यमकण्टकता[7]र्कीन्दोर्मृत्यु[8]योगोऽर्कवासरे ।
सस्यारम्भो विलग्ने स्याद्वि[9]वादभुवि मृत्फले ॥ 217 ॥

गृहीते तु [10]चिराल्लाभो ज्वरादौ तिलमिश्रितैः ।
तण्डुलैः पूर्ववद्धुत्वा तिलान्नेन वलिं हरेत् ॥ 218 ॥

पितरो देवताष्टाहात् पञ्चाहाद्वा मृतिर्भवेत् ।
जीवेद्वा बह्वदृष्टेन [11]मध्यमोऽर्घस्तु सङ्क्रमे ॥ 219 ॥

द्वितारा फल्गुनी पूर्वा न्यङ्कुखी मूषयोनिका ।
भारण्डपक्षिका चार्णा यात्रा शाल्यन्नभोजिनः ॥ 220 ॥

नरात्परं विषं श्राद्धद्रव्यग्राहादि शस्यते ।
न दद्या[द्]द्रव्यममृतं शुक्रवारे तु शून्यता ॥ 221 ॥

मिथुने मासि सिंहे च मासयोरनयोः पुनः ।
परिधाविन्द्र[12]चापे च [13]नवाहाद्वर्षणं भवेत् ॥ 222 ॥

---

1. T प्राश्यं
2. $T_1$ कृन्दावं
3. $T_1$ पाठः । T वन्दार
4. $T_1$ भूप्रदेशे
5. M बहुविधं गुणं
6. M कृत्तिकामासि
7. $T_1$ कार्केन्द्वा
8. $T_1$ योगार्कवासरे
9. $T_1$ पाद भुवि
10. $T_1$ पाठः । T चिराल्लोभो
11. M मध्यमोऽर्कस्तु
12. $T_1$ वापेन for चापेन
13. $T_1$ पाठः । T नखाहा

---

A. अस्य वन्दाकपदस्य स्थाने व्याख्याने कृन्दावं इति विलिख्य अस्य अर्थः वन्दाक इति लिखितं वर्तते ।

ज्वरादौ फलिनीपुष्पसंयुक्तघृतहोमतः ।
गन्धमाल्यैश्च शुद्धान्नैर्बलिर्देवोऽत्र चार्यमाः ॥ 223 ॥

सप्तमासेन मृत्युः स्याज्जीवनं बह्वदृष्टतः ।
[1]सङ्क्रमो मध्यमोऽर्घःस्यात् द्वितारोत्तरफल्गुनी ॥ 224 ॥

[A][2]छजावर्णा [3]पण्डकाका पक्षी चोर्ध्वमुखी जयात् ।
परं विषं सूर्यविदो [4]सिद्धो नाशो गुरोर्दिने ॥ 225 ॥

परिधौ [5](श)क्रचापे [6]च सप्ताहाद्वर्षणं भवेत् ।
शस्यते बीजवापादि ज्वरादौ माषसंयुतैः ॥ 226 ॥

अक्षतैः पूर्ववद्धुत्वा तिलान्नेन बलिं हरेत् ।
भगश्च देवताष्टाहाद्विंशतेर्वा [7]द्विसंयुतात् ॥ 227 ॥

[8]सुखी भवेत् सङ्क्रमे तु [9]भवेदर्घस्य वर्धनम् ।
प्लक्षो वृक्षः शाकभुजो [10]यात्रा पञ्चोडुकः करः ॥ 228 ॥

[11]तिर्यङ्मुखो झञौ वर्णौ राजालिश्च विहङ्गमः ।
पुमान् महिषयोनिश्च [12]प्लक्षोऽम्बष्ठोऽथवा तरुः ॥ 229 ॥

पयोमिश्रापूपभुजो यात्रा द्रव्यग्रहः शुभः ।
न दानमिष्टं पालाश [13]कन्दावस्य [14]द्रुमुस्थितैः ॥ 230 ॥

---

कृन्दावमिति वन्दाकनाम । मृतिप्रदनक्षत्रे होमादिविधानात् मृत्योरनित्यत्वं प्रदर्शितम् । द्रुमस्थितैः पुरुषैरुपयोगा इति योज्यम् ।

---

1. $T_1$ पाठः । T सङ्कमो
2. $T_1$ छजोवर्णा
3. M वण्डकाका
4. $T_1$ पाठः । T सिद्धा
5. T चक्रचापे
6. M न for च
7. $T_1$ द्विसंयुगात्
8. M सखी
9. $T_1$ पाठः । T भवेदर्थस्य
10. $T_1$ याद्रा
11. $T_1$ त्रिर्यङ्मुखो
12. $T_1$ प्रक्षो
13. $T_1$ वन्दावस्य । तथा M
14. $T_1$ द्रुमस्वतैः

---

A. अत्र छजावर्णावण्डकाका इति वा ।

उपयोगः क्षीरमिश्रः प्रज्ञाया वृद्धिदः खलु ।
[A][1]गुरुनाड्याः परे क्ष्वेलं सविता चास्य देवता ॥ 231 ॥

आद्यपादे द्युमृत्युः स्यशान्मृत्युयोगः [2]श(ने)र्दिने ।
सिद्धोऽर्के ज्ञे सुखं तस्य लग्ने वस्त्रग्रहः शुभः ॥ 232 ॥

इन्द्रचापे धरदिने [3]वृष्टिर्जूत्यादिसम्भवे ।
पूर्ववद्दधिभक्तेन हुत्वाथो गन्धमाल्यकैः ॥ 233 ॥

बलिं हरेत् पञ्चदिनात् सदिनात् कुरुवासरात् ।?
[4]स्वास्थ्यं स्यात् सङ्क्रमेऽर्घस्य मध्यता विद्वदीरिता ॥ 234 ॥

[5]चित्रैकतारा योषिच्च योनिर्व्याघ्रोऽसिसंज्ञकः ।
[6]त्वष्टा दैवंणकाराणौं नारनाड्याः परं विषम् ॥ 235 ॥

[7]मुद्गवापो विलग्ने स्यात्तस्या एव तु शोभनम् ।
कुजवारे तु शून्यत्वं [8]परो नन्दार्कयोगतः ॥ 236 ॥

कण्टको यमपूर्वो ज्ञे [9]सिद्धो ज्ञार्येन्दुसङ्गमे ।
दिनमृत्युर्द्वितीयांशे वैशाखे [10]मासि शून्यता ॥ 237 ॥

इन्द्रचापे तु पूर्वाह्णे दशाहाद्वर्षणं भवेत् ।
वृषालिस्त्रीषु नवमीभद्रे हित्वा कुजार्ययोः ॥ 238 ॥

इन्द्रोश्च [11]वारवर्गादि लग्ने भूमिप्रवेशनम् ।
ज्वरादौ चित्रभक्तेन पूर्ववद्धो[12]मतः परम् ॥ 239 ॥

---

क्षीरमिश्रः क्षीरेण पानमुपयोगः । दधिभक्तेन दध्यन्नेन । असिसंज्ञक इति व्याघ्रविशेषणम् । दैवं देवता ।

---

1. M रुरुनाड्याः
2. T शनैर्दिने
3. $T_1$ वृष्टिर्ज्ञत्यादि
4. $T_1$ पाठः । T स्वार्थं
5. $T_1$ मित्रैकतारा
6. M त्वष्टादैवठकारा
7. $T_1$ मुत्पापोऽपि लग्ने
8. M परो
9. $T_1$ सिद्धा
10. M पाठः । T वापि for मासि
11. $T_1$ पार
12. $T_1$ मतं

---

A. ग्रन्थान्तरे एकविंशतिनाड्याः परं विषमिति लभ्यते । द्राविडलेखकेषु ककारस्य गकारः दृश्यते । अतः कुरुनाड्याः इति भवेद्वा ।

[1]अ(न्ने)न घृतमिश्रेण बलिः सप्ताहतः सुखी ।
एकविंशद्दिनाद्वापि [2]मध्यमोऽर्घस्तु सङ्क्मे ।। 240 ।।

यात्रा यायान्न[3]भुजः स्वाती त्वेकताराङ्गनात्मिका ।
विल्वोऽर्जुनो वा वृक्षः स्यान्महिषो योनिरिष्यते ।। 241 ।।

यात्रा [4]धात्री भुजो वन्द्य [5]नाडिका(तः) परं विषम् ।
बीजवापादि शुभदः शुक्रे तु यमकण्टकः ।। 242 ।।

सूर्ये मृत्युः सुधा मन्दे नन्दाभूमिजयोर्वरः ।
वैशाखे शून्यता द्रव्यं [6]गृह्णीया(न्नै)व दीयताम् ।। 243 ।।

मन्दे वृषोदये सेतुं [7]बध्नीयात् शुक्लपक्षके ।
पञ्चम्यामी[8](ड्य)दिवसे दुर्गा भद्राविवर्जिते ।। 244 ।।

क्रयविक्रयसिध्यर्थं यात्रा ज्ञारगुरुदये ।
इन्दूदयांशके [9]वैषा वारे वा भूप्रवेशनम् ।। 245 ।।

[10]हुत्वाज्येन ज्वरादौ तु गन्धमाल्यार्चनायुतम् ।
शुद्धान्नेन बलिं दद्यात् दशाहात्तिथिवासरात् ।। 246 ।।

सुखी स्यादथवा मासात् [11]सङ्क्रमेऽर्घस्तु मध्यमः ।
चतुस्ताराष्टतारा वा विशाखार्जुनवृक्षकः ।। 247 ।।

कपित्थवृक्षको वापि पुमानिन्द्राग्निदै[12]वयुत् ।
[13]पिङ्गलोऽ(वि)र्व्याघ्रयोनिः [14]ढणकाराक्षरो वटात् ।। 248 ।।

---

1. T अनेन
2. $T_1$ मध्यमोर्कस्तु
3. $T_1$ भुजे
4. $T_1$ गात्री for धात्री
5. T नाडिकातं
6. T गृह्णीयानैव
7. $T_1$ बद्धः शुक्ले तु पक्षके
8. T मीड्या
9. $T_1$ चैषां
10. M पाठः । T हुत्वाज्यौ
11. M पाठः । T सङ्क्रमेऽर्कस्तु
12. M देवता
13. T पिङ्गलोऽपि व्यार्घ्र
14. $T_1$ घणकारा

परं विषं तु [1]यात्रात्र पिष्टान्नेन भुजो भवेत् ।
ग्राह्यं द्रव्यं न दातव्यं वस्त्रभूषादि शोभनम् ॥ 249 ॥

मार्गशीर्षे शून्यतास्य ज्ञवारे यमकण्टकः ।
अर्के विषंद्वितीयांशे दिनमृत्युः [2]श(ने)र्दिने ॥ 250 ॥

तल्लग्ने धान्यसङ्गाहो भृगुवारे भृगूदये ।
शत्रुदृष्टो [3]वशेऽपि स्यात् ज्वरादौ दिनपञ्चकम् ॥ 251 ॥

गायत्र्या पूर्ववद्धुत्वा गन्धमाल्यै[4]र्बलिं हरेत् ।
धटाहाद्वा पुराहाद्वा शाम्येदैन्द्रे तु कार्मुके ॥ 252 ॥

वृष्टिरष्टाहतः कर्की चाप्य[5]कोर्प्युदये ग्रहः ।
धान्यस्य संक्रमेऽर्घवृद्धी [6]मै(त्रं) तिर्यङ्मुखं पुमान् ॥ 253 ॥

बकुलः खदिरो वा [7](द्रु)रण्डो विर्मित्रदैवतम् ।
योनिर्मृगी दकारार्णं नयनाड्याः परं विषम् ॥ 254 ॥

कुलस्त्थं प्राश्य यात्रा च विद्यारम्भादिकं शुभम् ।
विवादभूमौ मृद्ग्राहात् तत्काले [8]निर्व्यपावनिः ॥ 255 ॥

हयारिसूनसदृशे मेघे वर्षं त्रिवासरात् ।
ज्वरादौ तिलमिश्रान्नं हुत्वा तद्बलितः सुखी ॥ 256 ॥

पटाहतोऽथवाष्टाहात् पक्षाद्वार्घस्तु मध्यमः ।
त्रितारा तिर्यगास्यैन्द्री ज्येष्ठा [9]वि(श्च)रणायुधः ॥ 257 ॥

वृक्षः कपित्थो योनिस्तु मृगो धार्णस्तिलोदकम् ।
प्राश्य यात्रा [10]वटघटीमतीत्य विषनाडिका ॥ 258 ॥

---

द्रुः द्रुमः ।

---

1. M यात्रा तु
2. T शनैर्दिने
3. $T_1$ वशोऽपि
4. $T_1$ र्दिनं हरेत्
5. $T_1$ कोर्प्यदये
6. T मैत्रे
7. T द्ररण्डो द्र.व्या.
8. $T_1$ निर्व्यपापनिः
9. T विश्वचरणायुधः $T_1$ विश्वरणायुधः
10. M पटघटी

[1]सेनापत्याभिषेकादि [2]स्थिरकर्माणि साधयेत् ।
मासि चापे च मीने च शून्यं भौमस्य वासरे ।। 259 ।।

मत्स्यलग्ने खनेत्कूपं कारवीरप्रसूनकैः ।
[3]समे मेघे दशदिनाद्वृष्टिर्घृतविमिश्रितैः ।। 260 ।।

?कणैरुक्त[4]दिशा हुत्वा शुद्धानैर्गन्धमाल्यकैः ।
बलिं हरेत्पञ्चदिनात् सुखी स्याद्वह्व[5]दृष्टतः ।। 261 ।।

दशाहतोऽथवा मासात् जीवेदर्घस्तु मध्यमः ।
मूलं द्वितारं [6](न्य)ङ्ववक्त्रं पुल्लिङ्गं बकुलोऽथवा ।। 262 ।।

सर्जो वार्द्रुश्च योनिश्च [7]राजालिर्विस्तु नैर्ऋतम् ।
मूलं प्राश्य च यात्रा [8]स्यान्न(प)फार्णं नरात्परम् ।। 263 ।।

विषं दारुणकर्मात्र द्रव्यं ग्राह्यं न दीयताम् ।
स्थापयेन्नागवल्लीं च तल्लग्ने केवलेऽथवा ।। 264 ।।

मूलोत्तरार्कपञ्चेन्दुरुद्रे नन्दाजयान्विते ।
शुभवारेऽस्तगे शुक्रे [9]क्षिप्तो नागो न नश्यति ।। 265 ।।

इत्युक्तयोगसद्भावे तद्योगे वाथवा [10]वपेत् ।
[11]दिनमृत्युस्त्वंतिमांशे रक्तमेघस्य दर्शने ।। 266 ।।

---

केवलेऽथवा स्वोदयं विनेत्यर्थः । मूलोत्तरेत्यादिविहितयोगसद्भावे [12]तद्योगे वा नागवल्लिं स्थापयेत् । एतदुक्तं भवति मूलनक्षत्रे नन्दाजयान्विते शुभवारे अस्तगते [13]शुक्रे मूलोदये सति योगद्वये फलाधिक्यमत्र प्रदर्शितम् । अथवा वपेदिति - उक्तकाले बीजानि वापयेत् । न तु नागलताक्षेपणमेवेति । तथा च माधवीये - "ताम्बूलवल्ली निर्ऋतीन्दुलग्ने गुरुदये कन्दफलप्रदानि । बिजानि मूलोपगते हिमांशौ" इत्यादि ।

---

1. T सेनावत्या
2. M स्थितकर्माणि
3. T समेघदश
4. M पाठः । T निशा
5. $T_1$ दृष्टित
6. T ण्यङ्ववक्त्र
7. $T_1$ राजाली हिस्तु
8. T स्यान्नवफार्ण
9. M क्षिप्ता नागी
10. M पाठः । T भवेत् द्र.व्या.
11. $T_1$ निनमृत्यु
12. दुद्योगे
13. $T_1$ शुक्रो

अष्टाहाज्जा[1]यते वृष्टिर्मीनकार्मुकमासयोः ।
शून्यमर्के सुधायोगो [2]वरो नन्दा[3]कुजान्विते ।। 267 ।।

बुधे मृत्युर्ज्वरादौ तु यथा लाभं तु मूलकैः ।
[4]हुत्वाज्यसिक्तैर्विधिवत् कृसरेण बलिं हरेत् ।। 268 ।।

दशाहान्मासतो वापि सुखी स्यादुत्तमार्घता ।
[5]द्वितारं वा चतुस्तारं जलभं न्यङ्मुखं [6]शु(क): ।। 269 ।।

पक्षी द्रुमोऽथ वञ्जु स्यात् [7]बार्णं [8]वानरयो[9]नि(क)म् ।
वरनाड्याः परं क्ष्वेलं लग्ने त्वस्य खनेद्बुधः ।। 270 ।।

कूपादीन्निगलादीनि चोग्रकर्माणि कारयेत् ।
रक्ताब्ददृष्टावष्टाहाद्वृष्टिरुक्तविधाद्धुतात् ।। 271 ।।

अनन्तरं तिलान्नेन बलिर[10]ब्दैवतं त्विदम् ।
त्रिदिनाद्वा चतुरहान्नवाहा(द्)[11]विंशतेर्दिनात् ।। 272 ।।

मासाद्वा सुख[12]मल्पोऽर्घः सङ्क्रमे विश्वदैवतम् ।
द्वितारं वा चतुस्तारमुत्तराषाढभं मतः ।। 273 ।।

ऊर्ध्वास्यं पनसो वृक्षः शुको विर्गो नपुंसकम् ।
योनिर्भार्णो बीजपूररसं याने तु पीयताम् ।। 274 ।।

[13]हस्त्यारोहो हस्तिनश्च विक्रयोऽथ गजे सृणे ।
प्रयोगो नरनाड्यास्तु परं क्ष्वेलं ग्रहो गवाम् ।। 275 ।।

---

[14]ह(स्त्या)रोहो - यस्य गजस्य प्रथमं हस्तिक्रियारम्भः ।

---

1. M जायेत
2. M पाठः । T चरो
3. M पाठः । T कुजान्वये
4. $T_1$ हुत्वानृसिक्तै
5. $T_1$ द्वितारा
6. T शुक्रः
7. M पाठः । T बाणं
8. $T_1$ पानर
9. T योनितम्
10. $T_1$ देवतं
11. M द्विशतान् दिनात्
12. M पाठः । T मलूपाघेः
13. $T_1$ पाठः । T हस्तारोहो
14. T हस्तारोहो

इष्टोऽत्र [1]शौर्पमासे तु शून्यं सोमे मृतिर्भवेत्।
यमपूर्व[2]कण्टकश्च सिद्धयोगो रवौ मतः ॥ 276 ॥

शुक्रे सुखं [3]कलि(भू)जे मन्दे [4]मृत्युस्तु लोहिते।
मेघे दृष्टे [4a]व्ययदिनान्मान्याहाद्वा[5]पि वर्षणम् ॥ 277 ॥

वृषवृश्चिककन्यासु नवमी भद्रिके विना।
कुजार्येन्दूदयांशेषु भूप्रवेशो ज्वरादिके ॥ 278 ॥

कुल्माषेण तु गायत्र्या [6]पूर्ववद्धोमतः परम्।
[7]पायसेन [8]बलिर्हार्यो [9]विश्वेदेवास्तु देवता ॥ 279 ॥

दशाहतो जयदिना[10]न्नगाहाद्वा [11]सुखी भवेत्।
सङ्क्रमे वृद्धि[12]रर्घस्य श्रवणे देवता हरिः ॥ 280 ॥

[13]पुल्लिङ्गश्च त्रितारश्च ऊर्ध्वास्योऽर्कतरुर्मतः।
[14]ज?लारीपतत्यर्णो मकारः [15]क(पि)योनिकः ॥ 281 ॥

अर्के सिद्धन्तु पञ्चम्या षष्ठ्या वा सह भार्गवे।
नाश कर्क्यालिचापेषु चन्द्रांशे धान्यसङ्ग्रहः ॥ 282 ॥

व्यवहारे जयः पादे द्वितीयेऽर्कोदये सति।
निर्माय गेहं प्रविशेत् ज्वरादौ [16]रक्ततण्डुलैः ॥ 283 ॥

हुत्वाथ गन्धमाल्याभ्यां बलिः [17](स्वा)स्थ्यं दशाहतः।
मासद्वयाद्वा सङ्क्रान्तौ मध्योऽर्घोऽथ धनिष्ठिका ॥ 284 ॥

---

1. M शुचिमासे
2. M पाठः। T कण्डकश्च
3. T कलिभुजे
4. $T_1$ मृत्युश्च
4a. $T_1$ गयदिनात्
5. M विवर्षणम्
6. $T_1$ पूर्ववद्धामतः
7. $T_1$ वायसेन
8. M बलिं दद्यात्
9. M विश्वदेवास्तुं
10. $T_1$ न्नराहाद्वा
11. $T_1$ सूखी
12. M पाठः। T रर्थस्य
13. M पाठः। T पुल्लिङश्वितार
14. $T_1$ जलारीवतत्यर्णो
15. T कषियोनिक
16. $T_1$ मुक्ततण्डुलैः
17. T स्त्वस्थ्यं

चतुस्ताराथवा पञ्च तारा ऊर्ध्वमुखी वधूः ।
योनिः [1]पक्षी पिङ्गलः स्याद्वराणों वसुदेवता ॥ 285 ॥

कृसरं प्राश्य यात्रा च नटनाड्याः परं विषम् ।
वस्त्रभूषादिकर्तव्य[2]माषाढे शून्यता [3]वटे[A] ॥ 286 ॥

विषं कलिर्बुधे मन्दवारे मन्दोदये सति ।
निधीयतां [4]धनत्वस्य लग्ने युद्धजयं भवेत् ॥ 287 ॥

आद्यांशे दिनमृत्युः स्याद्रक्तेऽब्दे पढ्च[5]विंशतेः ।
दिनतो वर्षणं [6]जूर्तावश्वत्थसमिधोऽथवा ॥ 288 ॥

[7]औदुम्बरसमिद्भिर्वा न्यग्रोधसमिधोऽथवा ।
हुत्वा मुद्गैर्घृतयुतैर्बलिर्दशदि[8]नात्सुखी ॥ 289 ॥

पक्षाद्वा [9]सङ्क्रमेऽर्घर्द्धिर्वारुणं शततारकम् ।
नपुंसकं चोर्ध्वमुखं पिङ्गलो विः कदम्बकम् ॥ 290 ॥

[10]तरुरश्वस्तु योनिः स्याल्लार्णं तण्डुलमश्नतः ।
यात्रा च जयनाडीतः ऊर्ध्वं क्ष्वेलं तु सङ्ग्रहः ॥ 291 ॥

धान्यानां करणीयोऽत्र प्रोष्ठपादेऽस्य शून्यता ।
यमकण्टकता मन्दे सोमे मृत्युर्दिवाकरे ॥ 292 ॥

सनन्दे वरयोगः स्यात् सुधार्येऽस्योदये सति ।
आरण्यकर्षणं तस्मिन् कुलीरस्योदये सति ॥ 293 ॥

---

वटे विषमिति ।

---

1. M पक्षिः
2. $T_1$ माषार्द्धे
3. M कुजे for वटे
4. M धनत्वस्या
5. M विंशतः
6. $T_1$ ज्ञर्त
7. M औदुम्बराश्च समिधः
8. $T_1$ दिक्सुखी
9. $T_1$ पञ्चमे for सङ्क्रमे
10. $T_1$ तरुरुश्वस्तु

---

A. अत्र T मातृकायां वटे इति, व्याख्यानेऽपि तथैव पदं दृश्यते। किन्तु M मातृकायां तु कुजे इति दृश्यते। प्रकरणवशात् ग्रहबोधकपदमेव युक्तमिव दृश्यते।

सेवौषधीनां कर्तव्या ज्वरादौ पारिजातकैः ।
[1]पुष्पैर्घृताक्तैर्हुत्वाथ [2]पायसेन बलिं हरेत् ॥ 294 ॥

षडहाद्वादशाहाद्वा गयाहाद्वा सुखी भवेत् ।
मध्यमोऽर्घः [3]सङ्क्रमणे द्वितारैकाङ्घ्रिरिष्यते ॥ 295 ॥

न्यङ्मुखो विः कपोतः स्याच्चूतो [4]द्रुर्वशषार्णकः ।
योनिर्मर्त्यः क्षौद्र[5]गु(डे) प्राश्य [6]यात्रा तटात्परम् ॥ 296 ॥

विषं द्रव्यग्रहोऽत्रेष्टो न [6]दानं [7]त्वन्तिमे पदे ।
वपेत् भुजङ्गवल्यादि [8]शून्यमाश्वयुजे कुजे ॥ 297 ॥

[9]नाशस्त्वस्योदये बन्धः प्राकारस्य द्वितीयके ।
पादे शुक्रोदये कूप[10]वाप्यादि निखनेदथ ॥ 298 ॥

रक्ते[11]मेघस्य संदृष्टावष्टाहाद्वर्षणं भवेत् ।
दशाहतो ज्वरादौ तु मृत्युर्जीवत्यदृष्टतः ॥ 299 ॥

शुद्धोदनेन गायत्र्या हुत्वा जीवेच्चिरेण च ।
[12]सङ्क्रमेऽर्घो मध्यमः [13]स्यादहिर्बुध्न्यं त्रितारकम् ॥ 300 ॥

पुल्लिङ्गं भूरुहो निम्बं चूतो वा [14]षसहाक्षरः ।
पक्षी चक्राह्वयो यानं कोल[15]मांसाशिनः शुभम् ॥ 301 ॥

विषं तु [16]वरनाडीतः परं भूषाभिषेचनम् ।
वास्तु[17]न्यासश्च तत्रेष्टः [18]श्रावणे शून्यता रवौ ॥ 302 ॥

---

1. $T_1$ पुष्पै
2. M वायसेन
3. M सङ्क्रमे
4. $T_1$ दुर्वषणं
5. T गुले । $T_1$ गले
6. $T_1$ यत्रा तटा परं
7. $T_1$ दन्तिमे पदे
8. $T_1$ श्वन्य
9. $T_1$ नाशस्तस्योदये
10. T वाप्यादीनि खनेदथ
11. $T_1$ मेवस्य
12. M पाठः । T सङ्क्रमेऽर्को
13. $T_1$ तथा M स्यादाहि
14. M पाठः । T शषसहाक्षरः
15. M मांसाश्निनः
16. $T_1$ परनाडीतः
17. $T_1$ न्यासस्तु
18. $T_1$ श्रवणे

सिद्धः कुजदिने मृत्युर्ज्वरादौ होमपूर्वकम् ।
गन्धमाल्यैर्बलिः कार्यः सुखी जयदिनात् भवेत् ॥ 303 ॥

[1]सङ्क्रमेऽर्घो मध्यमः स्यात् पूषभं प्रियतारकम् ।
तिर्यङ्मुखी गजो योनि[2](र्ल)क्षव(र्णौ) स्त्रि[3]याकृतिः ॥ 304 ॥

तरुर्मधूकः [4]सरटः पक्षपावित्तगोत्र हि ?।
यात्रा क्षीरभुजस्त्रिंशन्नाडिकातः परं विषम् ॥ 305 ॥

गोसङ्ग्रहादि कर्तव्यं शनौ नाशो बुधे विषम् ।
ज्वरे फलै[5]रख(ण्डै)स्तु गायत्र्या होमतः परम् ॥ 306 ॥

गन्धमाल्यैर्बलिर्देयः पञ्चद्वादशवासरात् ।
ज्वराहतो वा शमनं [6]वरो नन्दाकुजान्वये ॥ 307 ॥

सङ्क्रमेऽर्घस्य वृद्धिः स्यादित्थं ताराफलं मतम् ॥

## अथ छायाप्रकरणम् ॥

[7]गोरधिपोऽग्निर्गुरुराग्नेयो वैभवपुष्टिर्देवमुनिश्रीः ।
गुणिना श्रेष्ठो विभुवलनाङ्गो लङ्घनयोगो [8]वलसारङ्गः ॥ 308 ॥

---

**फलैरखण्डैरिति** - अत्र फलैरिति सामान्यवचनाद्यथालाभं तु मूलकैरितिवत् सामान्यफलानि ग्राह्याणीत्येके। अखण्डहोमयोग्यानीत्यन्ये। विविधं हि होमफलमानम्। तथा च होमविधौ - "कदलीफल[9]ना(र)ङ्गफलान्यैकैकषो विदुः। मातुलुङ्गश्चतुः-खण्डं पनसं [10]दशधा (कृत)म् ॥ अष्टधा नालिकेराणि खण्डितानि विदुर्बुधाः। त्रिधाकृतं फलं बैल्वं कपित्थं खण्डितं द्विधा॥ [11]उ(र्वा)रुकफलं होमे चोदितं खण्डितं त्रिधा। फलान्यन्या-[न्य]खण्डानि समिधः स्युर्दशाङ्गुलम्॥" इत्यत्र सामान्यफलग्रहणे तु अत्र सर्वाण्यखण्डितानीति [12]वचनांशकम्। यत्र विषुवच्छाया द्व्यंगुलमिता तत्र श्रवणादिषु नक्षत्रेषु नभोमध्यं गतेषु क्रमात् प्रग्विलग्न[13]वा(क्या)न्याह **गोरधिपोऽग्निरिति**।

---

1. $T_1$ सङ्क्रमेऽर्घे
2. T र्लक्षवर्णा
3. M स्त्र्याकृतिस्तथा
4. $T_1$ संरम्भः for सरटः
5. T रखस्तु द्र.व्या.
6. M वारो
7. M गौरधिपो
8. $T_1$ वलसः for वलसारङ्गः
9. T नाराङ्ग
10. T दशधातुकम्
11. T उपारुकफलम्
    $T_1$ गुरुर्वारफलम्
12. $T_1$ वचनं for वचनांशकम्
13. T वात्यान्याह $T_1$ वान्याह

प्रतिमाससङ्क्रान्तिर्वटीं संगुण्य त्रिभिर्हरेत् ।
एकशेषेऽर्घवृद्धिः स्याद्द्विशेषे मध्यमं विदुः ॥ 309 ॥

[1]त्रिशेषे हानिकृद्द्रव्यं प्रतिमासं विदुर्बुधाः ।
गुणवान[2]श्वो धनसाध्यः [3]स्वसालधराभः शुरजरेशः ।
अग्निरनन्तो धीरातपातस्तारतरक्षः परनार्यर्थः ॥ 310 ॥

[4]स्वपुरप्रार्थी पाण्डव[5]नन्दनपुरपोराजा[6]स्तमदननीलः ।
पूर्वपयोधि धूलिविरुद्धः कलिवनकाकस्तवनकनम्यः ॥ 311 ॥

पुरनरनार्यः रवरनटपूज्यः
सवितारि युक्त्याङ्गुलयम[7]लाक्षे ।
उदयभ[8]मानान्युडुषु गतेषु
श्रवण[9]मुखेष्वित्युडुपथमध्यम् ॥ 312 ॥

गुरोर्द्धियाज्ञा सकलेन यज्ञं
बलेशपथ्यः [10]मृगसूनुरत्नम् ।
भागी स्वरश्रीर्मृगमीनलग्नं
दयेन्द्र[11]यागं हिम[12]सारगोगाम् ॥ 313 ॥

---

यत्र बालास्त्री विषुवच्छाया तस्मिन् देशे खमध्यं गतेषु श्रवणादिषु प्राग्विलग्नवाक्यान्याह – गुरोर्द्धियाज्ञा इति ।

---

1. M इयं "त्रिशेषे" इति पङ्क्ति मातृकण्यां नास्ति ।
2. $T_1$ नश्चो
3. M खःसाल for स्वसाल
4. $T_1$ स्वपुरं
5. $T_1$ नन्दा for नन्दन
6. M स्तथनशील
7. M लार्धे
8. $T_1$ मानान्युडुगतेषु
9. M पथेष्वित्यु
10. M मृगसज्ञिरत्नम्
11. $T_1$ सारं for यागं
12. M सारगोगा

करक्षिनाभिः [1]परकायभिन्नं
शिवाननात्मादिशदाय[2]मानम् ।
[3]दिनेन्द्रनीतिः शिवमायतानां
[4]श्रियो हि रक्षा हय[5]धेनुसेना ।। 314 ।।

शिशुर्नरार्थी जलशो नदीनां
पटुर्नरवेदस्ति[6]जलप्रदानम् ।
नयेन्धनादिर्जगराट्प्रधानं
[7]कुजेन्द्रनिम्नाय घनिर्द्धनं नृपः ।। 315 ।।

[8A]तपोऽङ्गरत्नायकरालनाटकं
[9]समन्त्ररूपाय कलांश[10]राशयः ।
मध्येऽम्बरस्य दृष्टासु तारासु श्रवणादिषु ।
[11]मेषादयो विलग्न[12]स्था राशयोऽत्र प्रदर्शिताः ।। 316 ।।

---

अत्रोदितेभ्यो वाक्येभ्यो भानि भिन्नानि कानिचिद्दर्शने । अतः पवीक्ष्यैव [13](भे) लग्नं कल्प्यताम् । [B]बुधैः श्रवणादीनि पञ्चार्द्रा रक्ता शरनिभः करः यामयं त्रिकोणं चाष्टौ । प्राग्याति खं प्रोक्त[14]कालतः हस्तभं यत्करनिभं तत्तु वाक्यसमं भवेत् । वृत्तं शूर्पं तूक्तकालात् पश्चाद्याति नभोमहत्तस्य पश्चिमगं स्वल्पवृत्तं तूक्तसमं भवेत् । [15]द्विशूलवत् स्थितं मूलद्वयं कुमभे वृषांशके रवं याति । तस्य प्राक्संस्थं द्वितयं तु यमांशके । ज्येष्ठात् गृह्यते । रक्तामित्रभं पश्चिमे ।

---

1. M कर for पर
2. $T_1$ माना for मानम्
3. M जनेन्द्रनीतिः
4. $T_1$ त्रियो
5. $T_1$ सेनुधेना
6. M लज for जल
7. $T_1$ कुजेन्द्रि
8. $T_1$ तपाङ्ग
9. M सुनीत for समन्त्र
10. $T_1$ कायः for राशयः
11. M मेषोदये
12. M स्वा for स्था
13. T भै for भे
14. $T_1$ कलातः
15. $T_1$ विशूलवत्

---

A. अयं श्लोकः सर्वासु मातृकासु अर्ध एव दृश्यते ।

B. अत्र व्याख्यानमस्फुटं दृश्यते ।

[1]ज्येष्ठादीनि त्वतीतानि रेवत्यादीन्यनागते।
[2]आर्द्रादीनि समं गच्छेन्नवषड्[3](द्वा)दश क्रमात्॥ 317॥

बालास्त्रीविषुवच्छाया यत्रात्रेदृक्स्थितिः किल।
एकैक[4](द्व्य)ङ्गुलप्रौढा च्छायोदक्था द्विघाततः॥ 318॥

## अथाश्वित्यादीनामुदयवाक्यानि॥

जनो दिनज्ञो नयतोऽरिनिघ्नो
विनीतनम्यो धनधान्ययज्ञम्।
अनेर्क[5]निद्रासनिना परज्ञो
मुनेरनङ्गाः प्रभुणा कुलेन॥ 319॥

हरिर्वराङ्गः सुखदो न भातु-
स्तनोनरूढं स्वरभिन्नमानम्।
हरिर्गुरुर्मे सुरमानतानां
क्षमासु कीर्तिः [6]सुररत्नसेना॥ 320॥

---

ततः ज्येष्ठादीनि इति। ज्येष्ठादीनि खमध्यमतीत्य वाक्यसाम्यं गच्छेयुः। रेवत्यादीनि खमध्यात् प्रागेव वाक्यसाम्यं गच्छेयुः। आर्द्रादीनि खमध्ये रवमध्येन समं रवमध्यं गतानि वाक्यसाम्यं गच्छेत् गच्छेयुरित्यर्थः। एवं कैश्चिदुदितम्। अन्ये तु ताराचन्द्रयोः समागमविषयोऽयं श्लोक इति वदन्ति। एकैक[7]द्व्यङ्गुलप्रौढा छायोदक्स्था द्विघाततः'' इति। योजनरवातगव्यूत्यादीनि देशमानानि पण्डितैः कल्पितानि। यस्मिन् देशे या [8]विषुवच्छाया तस्मात् देशादुत्तरतः खातद्वायान्तरे देशे सा विषुवच्छाया एकद्व्यङ्गुलाधिका भवति। नक्षत्रवाक्यपठितदेशस्वदेशयोरन्तराल[9]-[9]ज्ञापनार्थमिदं वचनम्। अथाश्वि[10]न्या(दी)नामुदयवाक्यान्याह - जनो दिनज्ञ इति।

---

1. M ''ज्येष्ठादीनि'' इति इयं पङ्क्तिः मातृकायां नास्ति।
2. M इयं पङ्क्तिः M मातृकायां नास्ति।
3. T वा दश
4. T व्यङ्गुल
5. $T_1$ निर्दा
6. $T_1$ सुरत्नसेना
7. $T_1$ द्युङ्गुल
8. $T_1$ विषयच्छाया
9. $T_1$ तापनार्थं
10. T न्यादिना

सुरारिकंसं पुरजस्य सेना
　यामयायनेन्दु[1]स्तनुवीर्यहीनम् ।
[2]परासरोजं सुरशोकधेनु-
　रनन्द[3]रुद्धः [4]वरसूनुनार्कः ॥ 321 ॥
[5A]नानाद्रिरत्नस्य ककुत्मिकण्ठ को धर्म धरापस्य भवन्ति भोदयाः ।
अल्पे[6][ग]तोऽधिके गम्यो भोदये चन्द्रतस्तयोः ।
[7]विवरात् विकलीभूतात् [8]भु(क्त्या) नाड्यादि लभ्यते ॥ 322 ॥
तनुज्ञ शूरज्ञ [9]शशोन साधुना निशास्य दानारिपुसाररावगः ।
प्रिये वहं सेव[10]नवांगधीदिशो शिवास्तु रामस्तुरतान्तजीवकाः ॥323॥
[11]सायनार्कभुजा राशे[12]ग्राह्याः षड्भागजीवकाः ।
[13]स्वदेशवलकर्णघ्नलसेशसहिता स्फुटाः ॥ 324 ॥

---

भोदयचन्द्रयोर्योगकालज्ञानार्थमाह - **अल्पे गत** इति । तत्कालचन्द्रात् भोदये पठितवाक्यात्मके अल्पे सति तयोर्योगो गतो भवति। तत्कालचन्द्रात् भोदये अधिके सति [14]तयोर्यो(गो) गम्य एष्यः भवति। तयोर्भोदय[15]चन्द्रयोर्विवरात् लिप्तीकृतात् चन्द्रस्य भुक्त्या लिप्त्यात्मिकया नाड्यादियोगकालो भवति । नक्षत्रावस्थितापमण्डलभागस्योदयकालेऽत्र भोदयकाल इत्युक्तः । अथ मुहूर्तकालपरिज्ञानाय तत्कालछायाङ्गुलानयनमपीह प्रदर्श्यते । तत्र सायनार्क [16]भुजायाः पट्सु भागेषु पठिताः पञ्चदशसंख्या जीवाः पठ्यन्ते - **तनुज्ञेति** । अयनचलनसंस्कृतस्य तत्कालार्कस्य भुजाया एता जीवा आनीय तासु लसेशा इत्येतां जीवां स्वदेशविषुवच्छायाकर्णाङ्गुलैर्निहतां प्रक्षिपेत् । तदा स्फुटा भवन्ति ।

---

1. $T_1$ स्तन
2. M परं
3. M रूद्धः
4. M परं
5. M अनादिरत्न
6. T नतो द्र.व्या.
7. $T_1$ विपरात्
8. T भुक्तानाड्यादि द्र.व्या.
9. M शशेन ----- साधुना
10. M नवांश
11. $T_1$ सायकार्क
12. $T_1$ गृह्याः
13. M "स्वदेशवलकर्णघ्न" इत्यारभ्य ततः नवमपङ्क्तिपर्यन्त "शघ्यरुपाक्षकर्णके" पर्यन्त मातृकायां नास्ति।
14. T तयोर्योगे
15. $T_1$ चन्द्रो for चन्द्रयो
16. $T_1$ गुजायाः

---

A. अयं श्लोकः अपूर्ण एव दृश्यते।

[A]इति स्वदेशे षट्पोषण द्वादशशाङ्कराच्च ------ ।
पौरन्दराहानि नव क्रमेण पूर्वार्धमध्या परभागयुञ्जः ॥ 325 ॥

जीविरन्तनरवज्योतिषिकैः स्मृता
पूर्वभागयुजिते पतिप्रिया ।
योषितामपरभागयोनिनिःस्त्री
नृणां भवति मध्ययोनिनी ॥ 326 ॥

[B]प्रेमनूनमुभयोः परस्परं-
सप्तसाहस्रसंयुक्ताः [C]शध्यरूपाक्षकर्णके ।
[1]ज्ञातेन धान्यस्य [2]ससस्यगो गुरु-
स्तदारिसद्वालगजाङ्ग[3]तारवम् ।
गतीव चूलीवगि[4]रीशमद्वशो
नतीशनिः सीम[5]लसेशजीवकाः ॥ 327 ॥

नतसंज्ञं हि सर्वत्र दिनार्ध[6](द्यु)गतान्तरम् ।
नतो नु शुक[7]नाडीनामेता [8]ज्याहीनसंयुताः ॥ 328 ॥

---

नीलातीरगतेऽस्मिन् देशेऽर्घ्यरुप इति विषुवच्छायाकर्णः पठ्यते। तेन हका लसेशाः सप्तसाहस्रसङ्ख्या भवन्ति । [8a]अतश्लाघ्यरुपाक्षकर्णकेऽस्मिन् अश्वत्थग्रामाख्ये देशे सप्तसाहस्रसंख्या[9]संयुक्ता सायनार्कभुजा राशिजीवा स्फुटा भवन्ति । लसेश इति वक्ष्यमाणजीवा त्वन्त्यज्या । अथ नाडीजीवा पञ्चदशाह - **ज्ञातेन इति ।** षड्भिर्भक्ता महाजीवा एवेह पठिताः । पद्छदशघटिकाभ्यो नतनाडिका विशोध्य शिष्टस्य ज्ञातेनेत्यादि जीवा आदाय तासु च चरार्धनाडीः संस्कुर्यात् ।

---

1. M जातेन द्र.व्या.
2. M सस्यगो for ससस्यगो
3. $T_1$ तारवत्
4. M गिरिश
5. M पाठः । T लतेश द्र.व्या.
6. T त्यु for द्यु
7. $T_1$ नीडी
8. M पाठः । T ज्यामेवसंयुताः
8a. $T_1$ अतश्चार्घ्य
9. $T_1$ संयुता

---

A. अयं श्लोकः अपूर्णः दृश्यते।
B. अपूर्णः श्लोकः मातृकाद्वये उपलभ्यते।
C. अत्र मूले "शघ्यरूप" इति तथा व्याख्याने तु "अर्घ्यरुप" इति च लभ्यते। समीचीनपाठः चिन्त्यः

[1]चरार्धाख्यविनाडीभिस्तुला[2]मेषादिषट्कयोः ।
[3]ए(वं वि)भज्या सूर्यज्या इष्टकर्णफलं भवेत् ॥ 329 ॥

[4]तद्वर्गाच्छङ्कु[5]वर्गो(नं) मूलं स्यादिष्ट [6]भाङ्गुलम् ।
शङ्कोरर्धयवाधिक्ये कर्णस्यैकाङ्गुला प्रभा ॥ 330 ॥

एकत्रिपञ्चवत्वीशयवाधिक्ये [7]ज्यवादिकम् ।
[8]द्वित्र्यङ्गुलातिरेके तु खररन्ध्राङ्गुलं भवेत् ॥ 331 ॥

पञ्चाङ्गुलातिरेके तु [9]सूर्याङ्गुलमिता प्रभा ।
अष्टाङ्गुलातिरेके तु षोडषाङ्गुलसम्मिता ॥ 332 ॥

---

तुलादिषट्के चरार्धविनाडिकाः शोधयेत् । मेषादि[10]षट्के योजयेत् । एवं [11]संस्कृतया नाडीजीवया पूर्वानीतां सूर्यस्य स्फुटजीवां विभजेत् । तत्र लब्धंमिष्टच्छायाकर्णाङ्गुलं भवति । शेषात् षष्टिघ्नात् व्यङ्गुलानि च ग्राह्याणि । तस्य छायाकर्णस्य वर्गात् शङ्कोर्द्वादसंख्यस्य वर्गं विशोध्य शिष्टस्य मूलमिष्टच्छायाङ्गुलं भवति । छायाङ्गुलत्रयोदशघ्नाच्चतुर्विंशत्या नरस्य छायापदानि च [12]भव(न्ति) । सूर्यजीवाः विलिख्यन्ते - रसा कामशराश्विनः भूतेषवः सप्तगावः खेष्वेता च सुखाश्विनः पञ्चापलाक्षीण्यश्वब्धिवह्नयो दिनाब्धयः अष्टाद्रिवेदाः शून्याब्धिबाणाः रन्ध्राहिसायका भूतवेदस्याद्विषुरसादव्यङ्गरसा इति । प्रोक्तानामेव शुध्यर्थमस्माभिश्चेह कीर्तिताः । वर्गमूलकर्म विना कर्णेन छाया[13]ज्ञाना(र्थमा)ह - शङ्कोरर्धयवाधिक्ये इति । एकाङ्गुलेत्यादिकं प्रभामानं स्थूलमिति वेद्यम् ।

---

1. M पाठः । T परार्ध द्र.व्या
2. M मेपालि द्र.व्या.
3. T एतद्विभज्य द्र.व्या.
4. M तद्वर्णात् द्र.व्या.
5. T वर्गोनां
6. $T_1$ भाङ्गलम्
7. M द्विकादिकम्
8. M पित्र्यांगुल
9. M शक्रांगुल
10. $T_1$ षट् योजयेत्
11. T संस्कृततया
12. T भवति
13. T ज्ञानार्थाह

कर्णे त्रिंश[1](त्र्यृ)क्षसंख्या प्रभा नाभौ जलाङ्गुलम्।
[2]दिगदिग्वृद्धावर्धशतात् क्रमेणाथ [3]दशादितः ॥ 333 ॥

एकैकयवहीना स्यात् प्रभैवं कल्पिता प्रभा।
पञ्चाशदङ्गुले कर्णे यवदशकहीना च ॥ 334 ॥

षष्ठ्यङ्गुले च [A]करणे भवेन्नवयवोनिका।
[4]सप्ततावष्टभिर्हीना यवैः सप्तभिरेव च ॥ 335 ॥

अशीतौ सप्तयवकैर्विहीनाशीतिरेव च।
एवमेव नवत्यादौ कर्णे कल्प्या प्रभा बुधैः ॥ 336 ॥

## (इति) छायाप्रकरणम् ॥ अथ मुहूर्तनामानि ॥

रुद्राहिमित्र[5]पितरो [B]वसुधारिविश्वे
वेधा[6]विधिः [7]शतमखः पुरुहूतवह्नी।
[8C]नक्तंचरश्च वरुणार्यमणौ भगश्च
प्रोक्ता दिने दश च पञ्च तथा मुहूर्ताः ॥ 337 ॥

---

त्रिंशतिकर्णे ऋक्षसंख्या प्रभा। [9]दि(ग)द्विवृद्धाविति। अर्धशतात् पञ्चाशतः कर्णस्य। [10]द(श)दशाङ्गुलवृद्धौ सत्यां कर्णमानात् [11]द(श)भिरेकैकहीनैर्यवै[12](र्व्यु)-त्क्रमसंख्यापरिमितैः क्रमेण हीनाः प्रभाः भवन्ति। यथा पञ्चाशदङ्गुले कर्णे कर्णतो [13]यवदशकहीना प्रभा, षष्ठ्याङ्गुले कर्णे कर्णतो [14]यवनवकहीना प्रभा इत्यादि वेद्यम्। अत्रोक्ताः यवाः कुत्रचित् स्थूलाः स्युः। अत्र सुबोधार्थं दशादितः एकैकयवहीनोना-प्रभेति पाठः। इति छाया। अथ मुहूर्तनामान्याह - रुद्राहीति। पुरुहूतवह्नी इत्येकः।

---

1. T त्रिशत्र्युक्ष M त्र्यंशत्युक्ष
2. $T_1$ दिदिग्वृद्धा द्र.व्या.
3. $T_1$ दर्शादितः द्र.व्या.
4. $T_1$ तप्तता
5. $T_1$ वितरो
6. $T_1$ निधिः for विधिः
7. $T_1$ शतमघः
8. M शतद्युतिश्च for नक्तंचरश्च
9. T दिदिगृद्धा द्र.मू.
10. T दर्श
11. T दशाभि
12. T युत्क्रम
13. $T_1$ यपदशकहीना
14. $T_1$ यपनकहीना

---

A. अत्र छन्दसः रक्षणार्थं कर्णे इति पदं करणे इति कृतं वा।
B. अत्र "वसुवारि" इति भवेद्वा।
C. अत्र पाठनिर्णयः सन्दिग्धः।

नैशामुहूर्ता गिरिशाजपादा-
हिर्बुध्नि [1]पूषे[A]न्द्रयमाग्नयश्च ।
विधातृचन्द्रादितिजीवविष्णु-
तिग्मद्युति[2]त्व(ष्ट्र)समीरणाश्च ॥ 338 ॥

दिनस्य यः पञ्च[3]दशो विभागो
रात्रेस्तथा तद्धि मुहूर्तमानम् ।
नक्षत्रनाथ[4]प्रतिमै[5]र्मुहूर्तै-
[6]मौहूर्तिकास्तत्समकर्म चाहुः ॥ 339 ॥

अष्टमो ह्यभिजिदाह्वयः क्षणो
[7]दक्षिणाभिमुखयानमन्तरा ।
कीर्तितोऽपरककुप्सु सूरिभि-
र्यायिनामभिमतार्थ[8]सिद्धिदः ॥ 340 ॥

अर्यम्णोऽर्के तुहिन[9]किरणे राक्षसब्रह्मसंज्ञौ
[10]पित्र्याग्नेयौ क्षितिसुतदिने चन्द्रपुत्रेऽभिजिच्च ।
[11]पित्र्यब्राह्मौ [12]भृगुसुतदिने [12a]राक्षसा(प्यौ) च जीवे
भौजङ्गेशौ [13]सवितृतनये वर्जनीयौ मुहूर्तौ ॥ 341 ॥

पौराणिका [14](रौ)द्रसुमाख्यमैत्राः
क्षणाः स्मृताश्चार[15]भगश्चतुर्थः ।
सावित्र्यवै[16]राजिकसंज्ञितौ च
गन्धर्वनामाभिजि[17]दष्टमश्च ॥ 342 ॥

---

1. M पूषाश्वियमा
2. T त्वाष्ट
3. $T_1$ दिशो
4. $T_1$ प्रतिमे
5. M पाठः । T मुहूर्तः
6. M पाठः । M मौहूर्तिकैस्त
7. $T_1$ क्षीणाभि for दक्षिणाभि
8. $T_1$ सिद्धदः
9. M करणे
10. M पाठः । T पित्राग्नेयौ
11. M पितृब्राह्मौ
12. क्षितिसुतदिने
12a. T राक्षसाप्यसौ । M राक्षसाव्यौ
13. $T_1$ सपितृतनये
14. T रोद्र
15. $T_1$ भटश्चतुर्थः
16. $T_1$ वैराजक
17. M दष्टम स्यात्

---

A. अत्र "पूषाश्वि" इति M पाठोऽपि साधुर्वा ।

रौहिणाह्वयबलौ विजयोऽन्यो
नैर्ऋतः शतमखो वरुणश्च ।
अन्तिमस्तु भृगुसंज्ञित उक्तो
योऽष्टमः [1]स च भवेत् [2]कुतपा(ख्यः) ॥ 343 ॥

[3]रौद्रो गन्धर्वनामा द्रविण[4]परिवृढः सारणो वायुरग्नी
रक्षो धाताथ सौम्यस्तदनुकमलजो वाक्पतिः पौष्णनामा ।
[5]वैकुण्ठोऽन्यः समीरो निऋतिरिति निशाचारिणोऽमी मुहूर्ताः
प्रोक्ताः त्रिःपञ्चसंख्या मुनिभिरिह [6]पुराणार्थचिन्ताप्रवीणैः ॥344॥

वैराजनामा विजयः सिताख्यः
सावित्रमैत्रावभिजिद्बलश्च ।
सर्वार्थसिध्यै कथिता मुहूर्ताः
मौहूर्तिकैरत्र पुराणविद्भिः ॥ 345 ॥

यस्मिन् धिष्ण्ये यच्च [7]कर्मोपदिष्टं
तद्दैवत्ये [8]तन्मुहूर्तेऽपि कार्यम् ।
दिक्छूलाद्यं चिन्तनीयं समस्तं
तद्वद्[9]दण्डः परिघश्च क्षणेषु ॥ 346 ॥

## अथ फलकुसुमलताध्यायः ॥

फलकुसुमसम्प्रवृद्धि[10]र्वै वनस्पतीनां विलोक्य विज्ञेयम् ।
सुलभत्वं द्रव्याणां निष्पत्तिं चापि सस्यानाम् ॥ 347 ॥

---

क्षणेषु मुहूर्तेषु । अथ मुक्ताकनकादि द्रव्याणां सुलभत्वज्ञानाय यवशाल्यादिसस्यानां निष्पत्तिज्ञानाय च संहितागतमध्यायं प्रदर्शयति फलकुसुमेति ।

---

1. $T_1$ स्व च
2. T कुतपाख्याः
3. $T_1$ रौद्रगन्धर्व
4. M पाठः । T परिवृणः
5. $T_1$ वैकुण्ठोऽन्त्यः
6. M पुरा---र्थ
7. M कर्मापदिष्टम्
8. M तन्मुहूर्ते च
9. M दण्डाः
10. $T_1$ "वैं" इति नास्ति

सालेन कलमशाली [1]रक्ताशोकेन रक्तशाली च ।
[2]मण्डूकं क्षीरिकया [3]नीलाशोकेन सूतरिकः ॥ 348 ॥

न्यग्रोधेन तु यवकस्तिन्दुकवृद्ध्या च षाष्टिको भवति ।
अश्वत्थेन ज्ञेया निष्पत्तिः सर्वसस्यानाम् ॥ 349 ॥

जम्बूभिस्तिलमाषाः शिरीषवृद्ध्या च मुद्गनिष्पत्तिः ।
[4]गोधूमाश्च मधूकैर्यववृद्धिः [5]सप्तपर्णेन ॥ 350 ॥

[6]अतिमुक्तककुन्दाभ्यां कार्पाससर्षपाण्यसनैः ।
बदरीभिश्च कुलत्थाश्चिरिबिल्वेनादिशेन्मुद्गान् ॥ 351 ॥

अतसी[7]वेतसपुष्पैः [8]पलाशकुसुमैश्च कोद्रवो ज्ञेयः ॥
तिलकेन शङ्खमौक्तिकरजतान्यथ [9]चेङ्गुदेन च शणाः ॥ 352 ॥

[10]करिणश्च हस्तिकरणैरादेश्या [11]वाजिनोऽश्वगन्धेन ।
[12]गावश्च पाटलाभिः कदलीभि[13]रजाविकं भवति ॥ 353 ॥

चम्पककुसुमैः कनकं विद्रुमसम्पच्च बन्धुजीवेन ।
कुरववृद्ध्या वज्रं वैडूर्यं नन्दकावर्तैः ॥ 354 ॥

विद्याच्च सिन्दु[14]वारैर्मौक्तिकं कारु[15]कुसुम्भेन ।
रक्तोत्पलेन राजा मन्त्री [16]नीलोत्पलेनोक्तः ॥ 355 ॥

---

1. $T_1$ रक्ताशौकेन
2. M मण्डूरं
3. M नीलशोकेन
4. $T_1$ गोधूमाश्व
5. M पाठः । T सप्तवर्णेन
6. M अतिमुक्ते कुन्दाभ्यां
7. M वेतसुपुष्वैः
8. $T_1$ पलश
9. M वेङ्गुदेन
10. $T_1$ करिणश्च
11. M वाजिनोश्चगन्धेन
12. M गावश्वपाटलाभिः
13. M रजापिकं
14. M वारेण मौक्तिकं
15. M कासम्भेन
16. $T_1$ नीलोत्पलं नोक्तः

श्रेष्ठी सुवर्ण[1]वृध्या पद्मैः विप्राः पुरोहिताः ।
कुमुदैः सौगन्धिकेन [2]बलपतिरर्केण हिरण्यपरिवृद्धिः ॥ 356 ॥

[3]आम्रैः [4]क्षेमो भल्लातकैर्भयं [5]पीलुभिस्तथारोग्यम् ।
खदिरशमीभ्यां दुर्भिक्षमर्जुनैः शोभना वृष्टिः ॥ 357 ॥

[6]पिचुमन्दनागकुसुमैः सुभिक्षमथ मारुताः [7]कपित्थेन ।
निचुलेनावृष्टिभयं व्याधिभयं भवति कुटचेन ॥ 358 ॥

दूर्वाकुटजकुसुमाभ्यामिक्षुर्वह्निश्च कोविदारेण ।
श्यामालताभि[8]वृद्ध्या वन्धक्यो वृद्धिमायान्ति ॥ 359 ॥

यस्मिन् काले स्निग्धनिच्छिद्र[9]पत्राः
संदृश्यन्ते वृक्ष[10]गुल्मालताश्च ।
तस्मिन् वृष्टिः शोभना सम्प्रदिष्टा
रुक्षाच्छिद्रैरल्प[11]मम्भः प्रदिष्टम् ॥ 360 ॥

**इति मुहूर्तरत्ने प्रकीर्णे [12]तृतीयोऽध्यायः समाप्तः ॥**

---

अत्रोक्ता वृक्षादिद्रव्य भेदाः लोकतोऽ[13](व)गन्तव्याः ।

इति गोविन्दशिष्यपौत्रेण परमेश्वरेण कृते मुहूर्तरत्नव्याख्याने प्रकीर्णकाध्यायस्तृतीयः समाप्तः ।

---

1. M पाठः । T वृध्यापकैः विप्राः
2. M बलवति
3. M पाठः । T आम्लैः
4. $T_1$ क्षमो
5. M पीलुकैः
6. M विचमन्द
7. $T_1$ कपित्थे for कपित्थेन
8. $T_1$ पाठः । T वृद्धाया
9. $T_1$ वक्राः
10. M पाठः । T गुल्मलताश्च
11. M मम्भाः
12. $T_1$ तृतीतोऽध्यायः
13. T वागन्तव्याः

## ॥ अथ चतुर्थोऽध्यायः ॥

### अथ वर्षलक्षणम् ॥

वर्षलक्ष्म च तत्प्रश्ने भूमिष्ठजललक्षणम् ।
[1]वास्तुस्त्रीपुंसलक्ष्मापि तुरीयाध्यायमाश्रितम् ॥ 1 ॥

जलराश्यंशके चन्द्रे [2]मिथुनं प्राप्यते रविः ।
भृगौ स्वान्त्य[3]स्थिते सूर्याद्वर्षभूता वसुन्धरा ॥ 2 ॥

राहुःशनैश्चरभौमा जलभे [4]सौम्यार्य भार्गवाः स्थलभे ।
[5]सूर्येन्दू च जलर्क्षे बहुवर्षसमागमः कालः ॥ 3 ॥

देवाचार्ये वृषभे कुम्भे वा तौलिनि स्थितः सूर्यः ।
[6]मौढ्यं प्राप्ते शुक्रे बहुवर्ष[7]समागमः कालः ॥ 4 ॥

जीवे मिथुनं प्राप्ते वक्रं यातौ शनैश्चरारौ च ।
सूर्यबुधौ सिंहस्थौ [8]वसुन्धरा वर्षभूता च ॥ 5 ॥

यदि जीवः कर्किस्थो जीवात्केन्द्रे शनैश्चरारौ च ।
मित्रत्रिकोणगेऽर्के [9]वहुवर्षसमागमः कालः ॥ 6 ॥

इन्द्राचार्ये सिंहे जीवात्केन्द्रे शनैश्चरारौ च ।
चन्द्रभृगू जलजर्क्षे बहुवृष्टिर्निर्दिशेत् प्राज्ञः ॥ 7 ॥

यदि कन्यां गतो जीवो मकरं वा महामुने ।
जीवा[10]दुपचये सौरो वर्षभूता वसुन्धरा ॥ 8 ॥

---

अथ तुरीयाध्याये वाच्यमाह – वर्षलक्ष्मेति । लक्ष्म लक्षणम् । मिथुनं प्राप्यते रविः सङ्क्रमकाल इत्यर्थः । महामुने इति श्रोतृत्वात्, तथा ब्रह्मन्निति च । अस्य मूलभूते शास्त्रे मुनिः श्रोतेत्यनेन गम्यते ।

---

1. $T_1$ वास्तुत्रिपुंस
2. M प्राप्ते तु मिथुनं रवौ
3. $T_1$ स्थितौ
4. M पाठः । सौम्यभार्गवःस्थलभे T
5. $T_1$ सूर्येन्दु
6. $T_1$ मूढे
7. $T_1$ समागमः काल इति ग्रन्थपातः
8. $T_1$ वसुधा for वसुन्धरा
9. M पाठः । T इह
10. $T_1$ दुपचयेसारा

आदित्यभौमावेकर्क्षे तदंशे भृगुसंयते।
मेदिनी वर्षपूर्णा च कामिनी यौवनं यथा ॥ 9 ॥

यदि जीवो वृश्चिकस्थः सूर्येन्दू स्थिरराशिगौ।
मौढ्यं याति [1]यदा शुक्रो वर्षभूता वसुन्धरा ॥ 10 ॥

[2]जल(ध)रा(न्) पश्येदाकाशे विवरवर्जितान् ब्रह्मन्।
प्रागुत्तराभिमुखगमना[3]द्वसुन्धरा वर्षभूता च ॥ 11 ॥

मूलत्रि[4]कोणगे जीवे [5]शुक्रज्ञौ जलराशिगौ।
स्थलराशिगते मन्दे बहुवृष्टिर्नसंशयः ॥ 12 ॥

बृहस्पति मृगे ब्रह्म[न्] स्थिरभे भौसूर्यजौ।
शुक्रज्ञौ मूढतां [6]प्राप्तौ सर्वराज्ये सुवृष्टिदौ ॥ 13 ॥

यदि मीनस्थितो जीवः सूर्यजारौ [7]द्विदेहभे।
[8]मौ(ढ्यं) याति यदा शुक्रो वर्षभूता [9]वसुन्धरा ॥ 14 ॥

यदि मेषं गतो जीवः शनिः स्वांशगतो यदा।
सूर्यशुक्रौ जलर्क्षे च क्रमाद्वृष्टिं विनिर्दिशेत् ॥ 15 ॥

[A][10]कन(काः) पक्षिणो ब्रह्मन् शकुनाः सुस्वरान्विताः।
जलराशिस्थानयुक्ता पश्चिमाभिमुखस्थिताः ॥ 16 ॥

स्निग्धाश्च मधुरा वाचा [11]तत्कालेन्दौ जलर्क्षभे।
शकुनज्ञो महाप्राज्ञो बहुवृष्टिं विनिर्दिशेत् ॥ 17 ॥

---

कनकः सुवर्णचञ्चुसंज्ञितः विहगः। शकुना रुवन्त इत्यर्थः।

---

1. $T_1$ तदा for यदा
2. T जलधारत्
3. M पाठः। T द्वसुधा
4. $T_1$ कोणजे
5. $T_1$ शुक्रज्ञो
6. $T_1$ प्राप्तो
7. $T_1$ विदेहभे
8. T मूढं
9. $T_1$ वयस्मित्
10. T कनकादि पक्षिणो
11. $T_1$ तत्कालेन्द्रौ

---

A. अत्र छन्दोभङ्गदूरीकरणार्थं कनकाः पक्षिण इति कृतम्।

यस्मिंश्चेन्द्र धनुः पश्येच्चन्द्रार्कौ [1]जलवर्गभे।
यदि पश्चिमभागे तु पश्येदिन्द्रधनुः स्फुटम् ।। 18 ।।

शुक्रज्ञौ [2]जलवर्गे च [3]सू(र्यो) वै स्थलभे मुने।
तत्कालेन्दु[4]र्जलर्क्षे च वर्षभूता वसुन्धरा ।। 19 ।।

पूर्वमिन्द्रधनुः पश्येज्जलवर्गे च चन्द्रमाः।
स्थलवर्गे सौरभौमौ बहुवृष्टिं विनिर्दिशेत् ।। 20 ।।

जलवर्गे [5]राहुशिखी तदंशके चन्द्रमायुताराश्च।?
भृगुभागे सौम्यर्क्षे [6]वसुन्धरा वर्षभूता च ।। 21 ।।

आचार्य[7]चन्द्रमार्क्यः स्थलभे चन्द्रात्त्रिकोणगे सूर्ये।
शुक्रज्ञौ जलवर्गे तच्चन्द्रे वसुधा वर्षभूता च ।। 22 ।।

राह्वार्यभौमशुक्रा जलभे वार्यंशकेऽथवा विद्वान्।
तद्वर्गे [8](क्षी)णचन्द्रे करोति वर्षं महाप्राज्ञः ।। 23 ।।

चन्द्राच्च यदि परिवेषस्तत्कालाच्चन्द्र[9]सूर्यजौ जलभे।
[10]जीवभृगू जलवर्गे ब्रह्मन् [11]वहुवर्षसमागमः कालः ।। 24 ।।

यदि चन्द्रो बलयुक्तः स्वांशे जलवर्गसंस्थितो वापि।
शुक्रज्ञौ जलवर्गे बहुवर्षसमागमः कालः ।। 25 ।।

स्थिरराशिगतौ सूर्यात् केन्द्रस्थाने शनैश्चरारौ च।
शुक्रेन्दू च जलर्क्षे [12]वसुन्धरा वर्षभूता च ।। 26 ।।

आदित्यशुक्रावेकर्क्षे त्वेकांशे बुधसंयुतौ।
मेदिनी [13]वर्षभूता च जलर्क्षांशे च निश्चयात् ।। 27 ।।

---

1. $T_1$ जवन भवे
2. $T_1$ बलवर्गे
3. T सूर्य वै
4. $T_1$ र्जलर्क्षौ
5. M शिखिराहू
6. M वसुधारा
7. M चन्द्रमन्दाः
8. T क्षणचन्द्रे
9. $T_1$ सूर्यभौ
10. $T_1$ जीवभुगू
11. M बहुवर्ग
12. M पाठः । T तत्रर्क्षे for वसुंधरा
13. M वर्षपूर्णा

एकांशकसमायुक्तौ शुक्रज्ञौ मूढतां गतौ ।
शुक्रादधस्ताद्भौमश्चेद्बहुवर्षसमागमः ।। 28 ।।

मूलत्रिकोणगो वक्रं प्राप्तो यदि शनैश्चरः ।
कुजे [A1]भ्रमति राहौ च वर्षहीना [2]वसुन्धरा ।। 29 ।।

रोहिण्यां च गते भौमे वक्रः स्वान्त्यगते भृगौ ।
बह्वनर्था भविष्यन्ति चाल्पवृष्टिर्न संशयः ।। 30 ।।

रोहिण्यर्क्षं विनिर्भिद्य यदि गच्छेच्छनैश्वरः ।
[3]द्वादशाब्दमनावृष्टिस्तदा [4]स्यादिति सूरयः ।। 31 ।।

मघां भित्वा विशाखे च [5]भिन्दन्मरककृद्रविः ।
भौमो दुर्भिक्षकृद्रूक्षः [6]क्रूरदृष्टश्च निश्चयात् ।। 32 ।।

आदित्यात् रवतृतीयस्थो भौमः[7] शुक्रेण वर्जितः ।
अल्पवृष्टिं विजानीयान्मण्डलं वाभिवर्षति ।। 33 ।।

आदित्यात्सप्तमस्थाने वक्रं याति यदा कुजः ।
अल्पवृष्टिरल्पधान्यं [8]क्रूरभे चेदसंशयः ।। 34 ।।

कनकः पुरतो गच्छेद्गुरुभार्गवयोर्यदि ।
प्रारम्भनाशी पर्जन्यो [9]मण्डलं चाभिवर्षति ।। 35 ।।

---

मूलत्रिकोणगो वक्रमित्यल्पवृष्टिलक्षणम् । भ्रमति चरति । मघां भित्वेति । मरककृत् जनक्षयाद्युपद्रवं करोति भौम इत्यर्थः । अत्र रविरिति पाठो न युक्तः, रवेस्तथाविधगत्यभावात् । अतस्तत्पदस्थाने पदान्तरं चिन्त्यम् । उपचयाद्रविज इति वा । अत्र कनको भौमः ।

---

1. M नभसि for भ्रमति
2. $T_1$ वसुन्धराम्
3. द्वादशाद्या अनावृष्टि M
4. M स्यदिति
5. M भिदन्मरणकृद्रविः
6. $T_1$ क्रूरदृकूच
7. $T_1$ भौमशुक्रेण
8. $T_1$ तूरभे
9. $T_1$ महीपञ्चाभिवर्षचि
   T मण्डलं चापि वर्षति

---

A. अत्र नभसि इति M पाठेऽपि वैशिष्ट्यं विद्यते । तथापि व्याख्यानानुसारेण "भ्रमति" इति पदं स्वीकृतम् ।

यदि भौमः पुरो गच्छेत्सौम्य [1]भार्गवयोस्तदा।
अल्पवृष्टिं द्विजश्रेष्ठ त्ववगच्छ महामुने ॥ 36 ॥

सूर्यात्स्वान्त्यगतौ ब्राह्मन् [2]शुक्र(ज्ञौ) वर्षभे ऋतौ।
[3]अल्पवृष्टिर्भवत्येव बह्वनर्थसमागमः ॥ 37 ॥

शुर्के व्ययद्वितीयस्थे आदित्यान्मूढवर्जिते।
अल्पवृष्टि बह्वनर्थं यथा दुर्वृत्त [स]ङ्गमात् ॥ 38 ॥

[4]रूक्षाश्च परुषावाता मेघा [A]विवर भान्विताः।
यत्र तत्रापि राज्येषु [5]वर्षहीनां विनिर्दिशेत् ॥ 39 ॥

अर्कवक्रावनावृष्टिं गुरुज्ञौ मन्दवृष्टिदौ।
चन्द्रशुक्रौ महावृष्टिं तत्प्रश्ने [6]कुरुतः क्षणात् ॥ 40 ॥

मूलत्रिकोणगे शुक्रे बुधसूर्यौ [7]जलर्क्षगौ।
मेदिनी वर्षपूर्णा च वृषभस्थौ तथैव च ॥ 41 ॥

भौमशुक्रौ [8]यदैकस्थौ तद्वर्गे बुधसंयुते।
तदंशकेक्षणे चन्द्रे तद्दृक्षे वृष्टिमाप्नुयात् ॥ 42 ॥

स्थिरराशिस्थिते वक्रे वक्रं प्राप्तो महीसुतः।
शुक्रज्ञौ जलवर्गे च [9](मौ)ढ्यं [10]प्राप्तौ सुवृष्टिदौ ॥ 43 ॥

दशमासात्परं गच्छेदादित्यान्ते कुजो यदि।
कुजे मूढ़विहीने च अनावृष्टिनिबोधतः ॥ 44 ॥

---

**अर्कवक्रा**विति। हिबुकेनाधः सलिलं नद्यागमन् तु सप्तमेनैव। दशमेन वृष्टिपतनं ब्रूयाल्लग्ने च तत्त्रितयम् ॥ इतिवचनाद्दशमलग्नयोर्ग्रहसम्बन्धात् तत्तत्फलं वाच्यम्।

---

1. M भार्गवयोर्यदि
2. T शुक्रजो
3. M पाठः। T अल्पवर्षं भवन्त्येव
4. M सूक्ष्माश्च for रुक्षाश्च
5. $T_1$ वर्षहीना
6. M कुरुतं
7. M पाठः T जलर्क्षभौ
8. $T_1$ यदेकस्थो
9. T मूढं
10. $T_1$ प्राप्ता

---

A. अत्र विवरभान्विता इत्यत्र वृत्तदृष्ट्या भकारस्योपयगः। किन्तु अर्थदृष्ट्या अनुपयुक्त इव भाति।

[1]यदि वर्षति पर्जन्यः कीटासङ्क्रमणे [2]रवेः ।
वर्षाधिक्यं विजानीयाद्यावद्धनुषि सङ्क्रमात् ।। 45 ।।

यदि वर्षति [3]पर्जन्यश्चापसङ्क्रमणे [4]र(वेः) ।
वर्षं नास्तीति विज्ञेयं यावन्मकरसङ्क्रमात् ।। 46 ।।

दिवसकृतः प्रतिसूर्यो जलकृदुद्र[द]क्षिणे [5]स्थितोऽनिकृत् ।
उभयस्थः सलिलभयं [6]नृपमुपरि [नि]हन्त्यधो जनहा ।। 47 ।।

चरराशि[7]गते वक्रे वक्रं प्राप्तौ तु भूमिजार्यौ च ।
[8]शुक्रो मूढविहीनो [9]नास्ति वृष्टिश्च धान्यं च ।। 48 ।।

शुक्रात्त्रिकोणगे भौमे चतुर्थे वा महामुने ।
अल्पवृष्टिं विजानीयाच्चन्द्रादपि च सप्तमम् ।। 49 ।।

यदि मिथुने जीवे झषगे वा शुक्रः वक्रताम् ।
स्थिरभे वक्रं प्राप्ते भौमे स्वल्प[10]वृष्टिर्विजानीयात् ।। 50 ।।

---

[11]व(र्ष)लक्षणाध्याये मध्ये प्रश्नप्रदर्शनात् प्रश्न[12]संवादे नियतं फलमिति प्रदर्शितम् । प्रतिसूर्यलक्षणमाह - **दिवसकृत** इति । अर्क[13]रश्मि(षु) मेघेन छादितेषु मेघविवरे यदा रश्मिसमूहोऽर्कइव दृश्यते तदासौ प्रतिसूर्य इत्याख्यायते । साक्षाद्दिवसकृतः उत्स्थितः प्रतिसूर्यो जलकृत् । दक्षिणे स्थितः अनिलकृत् । अनिलतः इति पाठेऽपि स एवार्थः । अनिलहेतोः स इति योज्यम् । उभयस्थः उभयपार्श्वगतौ चेदित्यर्थः । सलिलाधिक्यात् भयम् । चतुर्दिक्षु लोकनाशाय इति शास्त्रान्तरे पाठः ।

---

1. M यदि इत्यारभ्य ततः चतुर्थपङ्क्तिगात "सङ्क्रमात्" पर्यन्तं मातृकायां नास्ति ।
2. $T_1$ रवि
3. $T_1$ पर्जन्यश्वाप
4. T रवि
5. $T_1$ स्थितोऽनिलतः
6. M नृपमूधर्वे for नृपमुपरि
7. M स्थिते for गते
8. $T_1$ शक्रे
9. M न स्यात् for नास्ति
10. M वृष्टिं विजतीयात्
11. T वषलक्षणमध्ये
12. $T_1$ सम्पादे
13. T रश्मिशु

यदि जीवस्तु कुम्भस्थो वक्रं प्राप्तः [1]शनैश्चरः ।
[2]अल्पवृष्टिस्तदा ब्रह्मन् शनौ भौमेक्षिते स्फुटम् ॥ 51 ॥

कर्क्यालितौलिगे जीवे द्विदेहस्थो यदा कुजः ।
वक्रं प्राप्तौ [A]चान्द्रि[3]वक्रौ वर्षहीना वसुन्धरा ॥ 52 ॥

यदि मेषं गतो जीवो वक्रं प्राप्तौ कुजार्कजौ ॥
वक्रं प्राप्तौ भौमशुक्रौ वर्षहीना वसुन्धरा ॥ 53 ॥

यदि मेषं गतो जीवो वक्रं प्राप्तौ कुजार्कजौ ।
मूढहीनो भृगुर्ब्रह्मन् वर्षहीना वसुन्धरा ॥ 54 ॥

[4]प्रावृषि शीतकरो [5]भृगुपुत्रसप्तमराशिगतः शुभदृष्टः ।
सूर्यसुतान्नवपञ्चमगो वा सप्तमगश्च जलागमनाय ॥ 55 ॥

प्रायो ग्रहाणामुदयास्तकाले
समागमे मण्डलसङ्क्रमे च ।
[6]पक्षक्षये [7]तीक्ष्णकरायनान्ते
वृष्टिस्त[8]थार्द्रासु गते च भानौ ॥ 56 ॥

समागमे पतति जलं ज्ञशुक्रयो-
[9]र्ज्ञजीवयोर्गुरुसितयोश्च सङ्गमे ।
यमारयोः पवनहुताशजं भयं
ह्यदृष्टयोरसहितयोश्च सद्ग्रहैः ॥ 57 ॥

---

प्रायो ग्रहाणामिति । उदयास्तौ सूर्यमण्डलात् । समागमश्चन्द्रेण कुजादीनां समागमः । मण्डलानि शुक्र[10](चा)रोक्तानि । भरण्यादि नक्षत्रवशात् कल्पितानि । तानि च वक्ष्यमाणे चाप इत्यादिके श्लोके [11]सिध्य(न्ति) ।

---

1. $T_1$ शनेश्चरः
2. M अल्पवृष्टिं तदा
3. M शुक्रौ
4. M पाठः । T प्रावृषी
5. M भृगुपत्र
6. M पाठः । T पक्षक्षयो
7. $T_1$ M पाठः । T तीक्ष्णकरा भान्ते
8. M पाठः । T तक्षाद्रगते च
9. $T_1$ जजीव
10. T चरोक्तानि
11. T सिध्यति । $T_1$ सिध्यते

---

A. अत्र ''चान्द्रिवक्रौ'' इति वा अथवा M पाठः ''चान्द्रिशुक्रौ'' वा इति पाठनिर्णये सन्देहः ।

अमायां [1]पक्षतौ [2]चापि यदि वर्षेत् [3]प्रवर्षणम् ।
[4]अस्मिन् पक्षे समादेश्यं पूर्णायां पक्षतौ पुनः ॥ 58 ॥

यदि वर्षेण वर्षः स्यात्तस्मिन् पक्ष इति स्थितिः ।
आषाढ़मासे सित[5]पञ्चमीषु
रव्यादि वा[रेषु] यथाक्रमेण ।
अत्यल्पवृष्टिरतिवृष्टिरतीवयुद्धं
वायुः सुभिक्षं प्रलयं च [7]तापम् ॥ 59 ॥

[8]पञ्चम्यादिषु पञ्चसु कुम्भरवौ रोहिणीगते चन्द्रे ।
अधमतमाधममध्यमहदतिमहद्भवेदम्भः ॥ 60 ॥

पूर्वाषाढगतो [9]भा(नु)र्जीमूतैरभिसंवृत्तः ।
घोरात्प्रकुरुते वृष्टि[10](मार्द्रा)दीनि त्रयोदश ॥ 61 ॥

---

पक्षतिः प्रतिपत् । सितपञ्चमीषु शुक्लपञ्चम्यामित्यर्थः । पञ्चम्यादिष्विति । अत्र कुम्भमासि रोहिण्यां च पञ्चमी न सम्भवति । अतः पञ्चमी आदिः पूर्वायासां षष्ठ्यादीनां पञ्चानां ताः पञ्चाम्यादय इति योज्यम् । मेघगर्भमाह - **पूर्वाषाढेति** । पूर्वाषाढं त्रयोदशधा विभज्य तेषु प्रथमभागगतोऽर्को मेघैरभिसंवृत्तश्चेदार्द्रां गतः सन् वृष्टिं करोति । एवं द्वितीयादिभागेषु गतः सूर्यो जीमूतैरभिसंवृत्तः क्रमेण पुनर्वस्वादिषु स्थितः सन् वृष्टिं करोति । भानुर्जीमूतैरभिसंवृत्त इत्यनेन व्योम्नि सर्वत्र मेघसद्भाव उक्तः । अतो रात्रावपि मेघलक्षणं भवति । अस्मिन्नर्थे [11]वृद्धगर्गः - "पूर्वाषाढगतो भानु[12]र्जीमूतैः परिवेष्टितः । आर्द्रादीनि प्रवर्षन्ति नक्षत्राणि त्रयोदश ॥" इति । अस्य ग्रहचारादिलक्षणैः संवादश्चिन्त्यः । प्रधानलक्षणं तु गर्भाध्याये द्रष्टव्यम् ।

---

1. $T_1$ वक्षतौ द्र.व्या.
2. M पवापि for चापि
3. $T_1$ प्रवषणम्
4. M तस्मिन्
5. M पञ्चमी च द्र.व्या.
6. M वारैस्सहिताक्रमेण
7. M ताप
8. M "पञ्चम्यादिषु" इत्याभ्य ततश्चतुर्थपङ्क्तिगात "त्रयोदश" पर्यन्तं मातृकायां नास्ति ।
9. T भातुर्जीमूतै
10. T र्माद्रादीनि
11. $T_1$ वृद्धगर्भः
12. T जीमूतैरपरिवेष्टितः

पक्षद्वये पक्षतेश्च पादेऽन्त्ये [1]वा[पि] पक्षन्तेः ।
प्रथमे चरणे वापि यदि वर्षेत् प्रवर्षणम् ॥ 62 ॥

तस्मिन् पक्षेऽल्पकेऽल्पं स्यादवर्षेणैव वर्षणम् ।
[2]स्वल्पलक्षणसंयोगे शाक्रे तोये च तोयपे ।
शूर्पे च वर्षणं भूरि लक्ष्म[3]पूर्तौ तु का कथा ॥ 63 ॥

सूर्ये कुम्भगते धातृदिन[4]मिष्वादिपञ्चभिः ।
[5]युक्तं क्रमेण महतीं वृष्टिं कुर्यात्तदब्दके ॥ 64 ॥

माघे [6]पित्र्यदिने पूर्ववत्सराद्यदि [7]दक्षकः ॥
चन्द्रोऽर्धःस्यादल्पदाता सौम्यगस्तु विवृद्धिदः ॥ 65 ॥

[8][च च प]त्रिपषड्भाद्याः शुक्रस्यास्तमयोदये ।
[9]प(पौ) कष्टं [10](चचौ) मध्यं त्रिषट्के वर्षमुत्तमम् ॥ 66 ॥

---

पक्षतिः प्रतिपत् । सूर्ये कुम्भगते इति पूर्वोक्तमेव । [11]इ(ष्वा)दि पञ्चभिः पञ्चम्यादिभिः पञ्चभिः । अत्रापि पूर्ववत्समासः कल्प्यः । पञ्च भादि भरण्यादयः । चचपत्रिपषडिति । चत्वार्यपि च चत्वारि, [च]पञ्च, च त्रीणि, च पञ्च च षट् च मण्डलानि स्मृतानि । षडित्यनेन क्रमो वेद्यः । शुक्रस्यास्तमयोदयनक्षत्रमण्डलवशात् फलं वेद्यम् । तत्फलमाह - **पपौ कष्टं** चचौ मध्यं त्रिषड्के वर्षमुत्तममिति । पपौ पञ्चकद्वयं कष्टं दोषदं, चौ चतुष्कद्वयं, मध्यं मध्यमफलदम् । त्रिके षङ्के च वर्षमुत्तमं भवति ।

---

1. T वानि for वापि
2. M स्वल्पं
3. M पूर्णे for पूर्तौ
4. $T_1$ मिष्टादि
5. M युतं
6. $T_1$ त्रित्र्यदिने
7. M दक्षगः
8. T शलल for च च प
9. T पटौ द्र.व्या.
10. T पपौ for पचौ द्र.व्या.
11. T इष्यादि

आद्ये चे सस्यवृद्धिः स्याद्द्वितीये रोगवर्धनम् ।
[1]आद्ये पे नृपमृत्युश्च स्वल्पतार्घस्य च [2]स्फुटा ॥ 67 ॥

त्रिके [3]सुभिक्षं वृष्टेश्च पुष्टिः पे तु द्वितीयके ।
[4]क्षुत्पीडा त्वथ [5]षट्के तु कुधान्यादिविवर्धनम् ॥ 68 ॥

स्वातीमघेन्द्ररुद्राश्विविधितिष्योत्तरासु च ।
शूर्पे याम्ये च विचरन् भौमोऽत्यन्तमवृष्टिकृत् ॥ 69 ॥

किंस्तुघ्नकोलशकुनोपगतस्थितोऽर्को
नागेभगर्दभचतुष्पदगो निषण्णः ।
शार्दूलविष्टिहरिगोवृषगः शयानो
दातार्घवृद्धिसमतापचयात् क्रमेण ॥ 70 ॥

अलिप्रवेशे सूर्यस्तु पापयुक्तोऽथवेक्षितः ।
पापमध्यगतो वापि रन्ध्रे वा पापसंयुतः ॥ 71 ॥

---

**अस्य** विवरणमाद्ये चे इति । अस्मिन्नर्थे वराहमिहिरः - "भरणीपूर्वं मण्डलमृक्षचतुष्कं सुभिक्षकरमाद्यम् । (व)ङ्गाङ्गमहिषबाह्लीककलिङ्गदेशेषु भयजननम् ॥ भचतुष्ट(य) मार्द्राद्यं द्वितीयमभितात् सस्यसम्पत्यै । विप्राणामशुभकरं विशेषतः क्रूरवेष्टानाम् । वि(च)रन् मघादिपञ्चकमुदितः सस्यप्रणाशकृच्छुक्रः । क्षुत्तस्करभयजननो नीचोन्नतिसङ्करकरश्च ॥ स्वात्याद्यं भत्रितयं मण्डलमेतच्चतुर्थमभयकरम् । ब्रह्मक्षत्रसुभिक्षाभिवृद्धये मित्रभेदाय ॥ ज्येष्ठाद्यं पञ्चर्क्षं क्षुत्तस्कररोगदं प्रबाधयते । काश्मीराश्मकमत्स्यान्सचारुदेवीनवन्तींश्च ॥ षष्ठं पण्णक्षत्रं शुभमेततन्मण्डलं धनिष्ठाद्यम् । भूरि धनगोकुलाकुलमनल्पधान्यं क्वचित्सभयम् ॥" इति । **किंस्तुघ्नेति** । विषुवत्सङ्क्रमकालकरणवशादर्कस्य संज्ञा तत्फलं चानेनोच्यते । इति सम्प्रदायविदः । सङ्क्रमः सामान्यो वा इति केचित् । किस्तुघ्नः कृमिः । गोवृषः वृषभः । **अलिप्रशेश** इति । वृश्चिकादि[6]सं(स्थः) सूर्यः पापयुक्तः पापवीक्षितो वा लक्षणान्तरयुतो वा शारदसस्यानां नाशं करोति ।

---

1. M आद्ये चेन्नृपमृत्युः स्यात्
2. M स्फुटम्
3. $T_1$ नुभिक्षं
4. $T_1$ पाठः । T क्षुत्पीडावथ
5. M पाठः । T षष्ठे
6. T संस्थं

सस्यानां शारदानां तु [1]विहत्यै वृषगोऽपि च।
कुम्भ [2]ए(वं) ततो ग्रीष्मः सस्यानां विहतिप्रदः ॥ 72 ॥

रोहिण्यानलभन्तु वत्सरतनु [3]र्नाभिस्त्वषाढाद्वयं
सार्पं हृत्पितृदैवतं च कुसुमं [4]शुद्धैः शुभं तैः फलम्।
देहे क्रूरनिपीडितेऽग्न्यनिलजं नाभ्यां भयं क्षुत्कृतं
पुष्पे पुष्प[5]फलक्षयोऽथ हृदये सस्यस्य नाशो ध्रुवः ॥ 73 ॥

---

वृषगतः **सूर्योऽप्युक्त**लक्षणयुक्तः सस्यनाशं करोति। एवं कुम्भस्थितोऽम्भस्य नाशं करोति। **तत इति। सप्तम्यर्थे** तत्र। स्थितिस्तु ग्रीष्मसस्यानां [6]**वि(ह)तिं नाशं** प्रददाति। वृषगतोऽपिग्रीष्मसस्यस्ये[7]त्ये(के), वृषगतः शारदस्येत्यन्ये। कैश्चिदेवं व्याख्यायन्ते - **वृश्चिक**गतः सामान्यसस्यानां, वृषगतः शारदानाम्। अत्र शारदानामिति **विशेषप्रदर्श**नात् वृश्चिकगतोऽपि शारदे[8]तराणामिति सिध्यतीति। पापसम्बन्धात् **दोषोक्त्या** शुभसम्बन्धाच्छुभं भवतीति च प्रदर्शितम्। अत्र वराहमिहिरेण तु - "अष्टमराशिगतेऽर्के गुरुशशिनोः कुम्भसिंहसंस्थि[त]योः। सिंहघटसंस्थितयोर्वा निष्पत्तिर्ग्रैष्मसस्यानाम् ॥ मध्ये पापग्रहयोः सूर्यः सस्यं विनाशय[9]त्यलि[गः]। पापात् सप्तमराशौ जातं जातं विनाशयति ॥ [10]विधिनानेनैव [10a]र[वेर्वृ]ष प्रवेशे शरत्समुत्थानाम्। विज्ञेयः सस्यानां नाशाय शिवाय [11]वा तज्ज्ञैः ॥" इत्यादिफलं वहुधोक्तम्। अथ रोहिण्यादि नक्षत्रषट्कं संवत्सराख्यकालस्यावयवेषु प्रकल्प्य तद्वशात् फलं प्रधर्शयति - **रोहिणीति**। शुद्धैः ग्रहरहितैः। [12]**क्रूरनिपीडिते** तत्तत्स्थानगतनक्षत्रे क्रूरग्रहेण स्पृष्टे।

---

1. M पाठः। T विहत्ये
2. T एवान्ततो
3. M र्नाभिर्विश्वाम्बुद्वयं
4. M शुद्धः द्र.व्या.
5. $T_1$ फक्षयोऽद
6. T विहितं द्र.मू.
7. T त्येते
8. M तरणामिति
9. T त्यलिकः
10. $T_1$ विधिना नैव
10a. T रथेर्विष
11. $T_1$ पातज्ञैः
12. $T_1$ क्रूरनिपीडितैः

ज्येष्ठा धनिष्ठा श्रवणोत्तरासु
बृहस्पतिर्वक्रगतोऽतिवृष्टिम्।
करोति नानाविधसर्वसस्यं
तथैव शुक्रो भरणीगतश्च ॥ 74 ॥

त्वाष्ट्रेऽदितौ [1]वारुणपूर्वभेऽर्के
[2]श(नै)श्चरे वक्रगते च [3]युद्धे।
क्षीणं जगत् सर्व[4]गुणातिरिक्तं
[5]सन्तापमायाति नरेषु नित्यम् ॥ 75 ॥

यदा धनुर्मीनमृगेन्द्रगोपतौ
धरासुतः सूर्यसुतश्च वक्रगौ।
हयांश्च नागांश्च नरांश्च [6]गोकुलं
त्रिभागशेषां कुरुते वसुन्धराम् ॥ 76 ॥

कुलीरकुम्भालिवृषान्त्यराशौ
निशाकरे शुक्रयुते बुधे वा।
वृष्टिस्तदा स्यात् कुजचन्द्र[7]युक्तैः
क्रमात्तु [8]पञ्चर्क्षगतै[9]र्ग्रहैर्वा ॥ 77 ॥

स्वातीशुक्रे रोहिणीन्दौ शिवर्क्षे
सौम्ये मन्दे वैश्वभे देवपूज्ये।
तिष्यान्तस्थे मेदिनीजे सपौष्णे
वृष्टिस्तदा स्यात् रविऋक्षसन्धौ ॥ 78 ॥

---

त्रिभागशे[10](षां) कुरुते वसुन्धरामिति वसुन्धरायामेव भवतीत्यर्थः। स्वात्यां शुक्रः स्वातीशुक्रः। रोहिण्यामिन्दुः रोहिणीन्दुः। रविऋक्षसन्धौ नक्षत्रान्ते रविश्च वृष्टिदः। रविर्नक्षत्रान्ते चेदिति पूर्वशेषो वा।?

---

1. $T_1$ वारुण भूष भेऽर्के
2. T शनेश्चरे
3. M पाठः। T युद्धैः
4. M गुणोऽतिरिक्तं
5. $T_1$ सन्तापिमायाति
6. $T_1$ गोकुलां
7. M युक्ते
8. $T_1$ पक्षर्क्ष
9. M कुंजैर्वा for ग्रहैर्वा
10. T शेषात् कुरुते

[1]पर्यन्तेषु सुधा शशाङ्कधवला [2]मध्येऽञ्जना[3]लित्विषः
स्निग्धा नैकपुटाक्षरं जलकणाः सोपानविच्छेदिनः ।
माहेन्द्रीप्रभवाः प्रयान्त्यपरतः प्राग्वाम्बु[4]पाशोद्भवाः ।
[5]ये ते वारिमुच[6](स्त्य)जन्ति न चिरादंभः प्रभूतं भुवि ॥ 79 ॥

[7]उदयशिखरसंस्थो दुर्निरीक्ष्योऽतिदीप्त्या
[8]द्रुतकनकनिकाशस्निग्धवैडूर्यकान्तिः ।
तदहनि कुरुतेऽम्भस्तोयकाले विवस्वान्
[9](प्र)तपति यदिवोच्चैः स्वंगतोऽतीव तीक्ष्णः ॥ 80 ॥

विनोपघातेन पिपीलिकाना-
-मण्डोपसङ्क्रान्तिरहि[10]व्यवायम् ।
द्रुमाधिरोहश्च भुजङ्गमानां
[11]वृष्टेर्निमित्तानि गवां प्लुतिश्च ॥ 81 ॥

इति वर्षलक्षणम् ॥ अथ वर्षपश्नः ॥

जलवत्यजलेन गतेऽधस्ताज्जलमुपरि भवति ।
विपरीते जलवद्द्वयसम्पाते प्रभूतमुदकं [12]विनिर्देश्यम् ॥ 82 ॥

---

पर्यन्तेष्वित्यादि सद्यो वर्षलक्षणम् । द्रुतकनक[13]मत्यन्ताग्नितापात् द्रवीकृतं कनकम् । विनोपघातेन अग्निजलाद्युपद्रवेण विना । अण्डोपसङ्क्रान्तिः अण्डानां स्थानात् स्थानान्तरनयनम् । गवां प्लुतिर्गवामतिवेगेन गमनम् । तदप्युपघातेन विना । अथ वर्षप्रश्नः । जलवतीति । भूमिषु जलविषयोऽयं श्लोको वर्षेऽप्युपयुज्यते । जलवति राशौ अजलेन ग्रहेण प्राप्ते भूमेरधस्तात् भागे जलं, कालस्य पूर्वभागे वर्षं च । [14]अज(ले) राशौ लग्ने जलग्रहयुते भमेरुपरिभागे कालस्योपरिभागे वा जलम् ।

---

1. $T_1$ पर्यान्तेषु
2. M पाठः । T मध्यो
3. M नात्विषः
4. $T_1$ खाशोद्भवाः for पाशोद्भवाः
5. $T_1$ एते for ये ते
6. T स्त्वजन्ति
7. M इयं पङ्क्तिर्मातृकायां नास्ति ।
8. M पाठः । T द्रमकनक
9. T व्रतपति, M प्रतिपति
10. M व्यपायम्
11. M पाठः । T पृष्टेर्नि
12. $T_1$ विनिदेश्यम्
13. $T_1$ मत्यन्ताशितापात्
14. T अजलं

सौम्या जलराशिस्थास्तृतीयधनकेन्द्रगाः सिते पक्षे ।
चन्द्रे [1]वाप्युदयगते जलराशिस्थे भवेद्वर्षम् ॥ 83 ॥

पृच्छाकाले वित्त[2]दुश्चि(क्य)योश्चे-
देको राशिर्जायते तोयसंज्ञः ।
तदा नदीपूरकरस्य सक्ता
वर्षस्य विंशे दिवसे तु वाच्या ॥ 84 ॥

चन्द्रार्कयोः [3]सप्तमगौ सितार्की
सुखेऽष्टमे वापि [4]तथा विलग्नात् ।
द्वितीय[5]दुश्चि(क्य)गतौ तथा च
वर्षासु वृष्टिं प्रवदेद्द्विपश्चित् ॥ 85 ॥

वर्षप्रश्ने सलिलनिलयं राशिमाश्रित्य चन्द्रो
लग्नं यातो भवति यदि वा केन्द्रगः शुक्लपक्षे ।
सौम्यैर्दृष्टः प्रचुरमुदकं पापदृष्टोऽल्पमम्भः
प्रावृट्काले सृजति न चिराच्चन्द्रवद्भार्गवोऽपि ॥ 86 ॥

तोयप्रश्ने [6]सजले लग्ने तत्तद्विशेषकेन्द्रे वा ।
गुरुसितबुधशशिनो यदि शुभदृष्टा[A][श्चेज]जलं भूरि ॥ 87 ॥

यदि ते पापैर्युक्ता यद्वा तैरेव वीक्षिता स्वल्पम् ।
आरूढच्छत्रे वा सजले साम्बु[7]ग्र(हेऽ)म्बु भूरि स्यात् ॥ 88 ॥

---

अधो भागे पूर्वकाले च नैव जलम् । चिरात् आशु ।

---

1. $T_1$ वाघुदये
2. T दुश्चित्क
3. $T_1$ सप्तगौ
4. $T_1$ तथापि लग्नात्
5. T दुश्चित्क
6. $T_1$ सजले लग्ने इति ग्रन्थपातः
7. T साम्बुग्रहाम्बु

---

A. अत्र योगानुगुणानां पदानां सद्भावात् वृत्तपूरणार्थं चेदिति पदं मया स्थापितम् ।

आर्द्रद्रव्ये स्पृष्टे वारिणि तत्संज्ञके तथान्यस्मिन्।
आस्ये नेत्रे मेढ्रे स्पृष्टे तोयः प्रभूतं स्यात्॥ 89॥

मूत्रोत्सर्गे [1]क्ष(व)थौ निष्ठीवे नासिकाजलास्रावे।
जलकार्येष्वौन्मुख्ये सन्निहिते वा जले तदा प्रष्टुः॥ 90॥

मत्स्य[2]कुलीरौ मकरः कुम्भो
वृषतौलिर्वृश्चिकः सजलाः।
भृगुचन्द्रौ [3]सलिलमयौ
गुरुशशितनयौ तु तोयराशिस्थौ॥ 91॥

एतेषु पदवशेन न्यूनं जलं स्यात् [4]परः परः पूर्वाः।
शेषा विजला ज्ञेया ग्रहास्तथा [5]राशयो विदुषा॥ 92॥

प्रश्नवचनादिवर्णे वर्गचतुर्थेऽथवा [6]स्वरे दीर्घे।
भवति जलं तद्वर्गाद्येऽन्तिमे द्वितीये वा॥ 93॥

इत्थं सत्यपि वर्षस्य लक्षज्ञस्य संयुतिः।
दृष्टिर्वा तत्त्रि भागस्य तदंशस्यापि चोदयः॥ 94॥

यदि चेद्वृष्टि[7]रारब्धा पवनेन निहन्यते।
आरार्किराहुसौम्येषु केन्द्रस्थेष्वपि मारुतात्।
वृष्टेर्विघात [8]आदेश्य आरब्धाया[9]स्तथोल्बणात्॥ 95॥

इति वर्षप्रश्नम्॥

---

तत्संज्ञकेथवान्यस्मिन् द्रव्ये [10](स्पृ)ष्टे वा यथा द्विबेरादिकम्। पदवशेन यथा मत्स्यकुलीराभ्यां मकरो न्यूनजलः, मकरात्कुम्भो [11]न्यूनजलः इत्यादि। [12]तथो(ल्ब)णं उल्बणमारब्धाया इत्यर्थः।

---

1. T क्षपथौ
2. T₁ कुलिरो
3. M सजलमयौ
4. M पाठः। T परः परा पूवान्
5. T₁ राजयो
6. T₁ खरे for स्वरे
7. T₁ राब्धा for रारब्धा
8. T₁ आदेश्च
9. T₁ तथोद्वणात्
10. T स्पष्टे
11. T₁ न्यूनफल्
12. T तथोद्वणं

## अथ भूमिष्ठजलविषयप्रश्नः ॥

[1]अत ऊर्ध्वं कथ्यतेऽधोजलविषयं लक्षणं [2]प्रश्नम् ।
हिबुकेनाधः सलिलं नद्यागमनं तु सप्तमेनैव ।
दशमेन वृष्टिपतनं ब्रूयाल्लग्नेन तत्त्रितयम् ॥ 96 ॥

कूपपरीक्षामासाश्चत्वारश्चै[3]त्रतः क्वचिन्मा[4]घात् ।
[5]वक्ष्येऽधोजल[6]योगान् [7]प्र(त्यार्या)र्धं विभेदेन ॥ 97 ॥

राहुयुतश्चन्द्रश्चेत् चरलग्नस्थो भवेदम्बु ।
दशम[8]गते भानौ चेत् पातालस्थो गुरुस्तादृक् ॥ 98 ॥

लग्ने [9]जल(व)ति सेन्दौ प्रष्टा जलराशिगो भवेदम्भः ।
पातालस्थे [A]वाते [10]पृच्छकचन्द्रौ सहस्थितौ तद्वत् ॥ 99 ॥

[11]तद्वत्प्रष्टृयुता कन्या चेद्गुरुसितदृष्टेन्दुसंयुते मत्सये ।
आरुढः कन्या चेत् तत्पार्श्वस्थे भृगौ शशाङ्के वा ॥ 100 ॥

---

अथ भूमिष्ठजलविषयः प्रश्नः । अधोजलविषयं प्रश्नं प्रति लक्षणं कथ्यते इति योज्यम् । कूपपरीक्षामासाः कूपपरीक्षायां विहिता [12]मासाः। क्वचिदिति देशविशेषणं, अथवा शास्त्रविशेषणम् । एतदुक्तं भवति मकरादिषु चतुर्षु मासेषु मीनादिषु वा [13]प्रश्नलक्षणेन भूमिषु तृणवृक्ष[14]वल्मीकादिलक्षणेन वा जलपरीक्षा कार्या । न तु सर्वदेति । भूम्यादौ [B]वृष्टिस्तुकविकारे नष्टे सत्येव लक्षणं संवदतीत्यर्थः । प्रत्यार्यार्धं विभेदेन [15]अत्रार्यार्धं प्रति योगभेदो भवतीत्यर्थः । तादृक् अम्बु भवेत् । तत्पार्श्वस्थे आरुढस्य व्ययधनस्थे ।

---

1. $T_1$ अथ
2. M प्रश्नौ
3. M पाठः । T चैत्रिकः
4. $T_1$ मघात्
5. M वृक्षे
6. $T_1$ योगां
7. प्रत्ययार्धं T
8. $T_1$ गतो
9. T जलपति
10. $T_1$ पृच्छतः चन्दौ
11. $T_1$ तद्वप्रष्टु
12. $T_1$ मासः
13. $T_1$ प्रश्नलग्नेन क्षणेन भूमिषु
14. $T_1$ चल्मीकादि for वलमीकादि
15. $T_1$ अत्यायार्धं

---

A. अत्र "पाते" इति भवेद्वा ।
B. अत्र "वृष्टिस्तृणविकारे" इति भवेद्वा ।

[1]प्रष्टरि मकरं [2]याते यदि पतियुक्तास्तुलाझषकुलीराः ।
[3]राहुगते भृगुतनये मिथुनगतश्चेच्छशी जलं भूरि ।। 101 ।।

स्वोच्चगतौ भृग्विन्दू नीचगतैः प्रेक्षितौ पृथक्जलदौ ।
उदयति वृषभगतेन्दौ यद्यारूढस्थिरोऽम्बुकूपोऽपि ।। 102 ।।

स्थिरराशौ लग्नगते यदि सितकृष्णौ सहस्थितौ तद्वत् ।
सिंह[4]गते शशिनि यदि प्रष्टा जलराशिगोऽम्बु मन्दं स्यात् ।
झष[5]नारीमिथुनगताः पृच्छकशशिमन्त्रिणः क्रमेणैवम् ।। 103 ।।

इति जलयोगा गदितास्तन्त्रेणोक्तौ तु कूपयोगौ द्वौ ।
वृषगते चन्द्रमसि राहुर्जामित्रगो [6]ज(लं नै)व ।। 104 ।।

प्रष्टुः क्षेत्रे प्रश्नादित्थं सामान्यतो जले ज्ञाते ।
देशविशेषं ब्रूयाद्दैवज्ञश्चन्द्र[7]गुप्तिचक्रेण ।। 105 ।।

मध्याह्नादस्तमयाद्दोषार्धात् प्राग्रवेरुदयात् ।
प्राग्दक्षिणा प्रतीची कौबेरी दिङ्मुखः [8]क्रमात् भूत्वा ।। 106 ।।

---

पृथक्जलादौ एकैकेन योगो भवतीत्यर्थः । उदयतीत्यार्यादिनार्यार्धयुग्मेन द्वौकूपयोगौ उक्तौ । अम्बुकूपोऽपीति अम्बु भवति [9]कूपयोर्योगोऽपि भवतीत्यर्थः । कूपयोगो पुराणकूपश्च वाच्यः । अम्बु मन्दं स्यात् मध्यमं भवतीत्यर्थः । तन्त्रेणोक्तौ तु कूपयोगौ द्वौ । प्रधानत्वेन द्वौ कूपयोगाविहोक्तौ । अथवा अधोजलविषयकथनेनैव कूपयोगावप्युक्तौ भवत इति । जलयोगेषु प्रधानत्वेनेत्यर्थः । एवं प्रश्नवशात् । प्रष्टुरभिमते क्षेत्रे सामान्यतो जलमस्तीति ज्ञाते सति तस्मिन् क्षेत्रे । देशविशेषं जलस्थितस्थानं चन्द्रगुप्तिचक्रेण वक्ष्यमाणविधिना वदेत् । तत्प्रकारमाह- **मध्याहनादिति** । दोषा रात्रिः । दिनस्य पूर्वार्धे प्राङ्मुखो भूत्वा, अपरार्धे दक्षिणमुखः, रात्रै पूर्वार्धे पश्चिममुखः, रात्रेरपरार्धे उदङ्मुखः ।

---

1. $T_1$ प्रष्टरि
2. $T_1$ वाते for याते
3. $T_1$ राहुतनये for राहुगते
4. $T_1$ गतौ
5. $T_1$ नीरी
6. T जलन्नैव
7. $T_1$ पाठः । T गुप्तिश्चक्रेण
8. M स्थले क्रमशः for क्रमात् भूत्वा द्र.व्या.
9. $T_1$ कूपयोयोऽपि

परतो रेखा विलिखेद्दक्षिणतः सव्यमायताः पञ्च ।
अष्टावूर्ध्वं तासा[1]मष्टाविंशतिकोष्ठं तदा भवेच्चक्रम् ।। 107 ।।

आदिमपङ्क्तावाद्ये कोष्ठे प्रारभ्य पञ्चकं गत्वा ।
प्रतिलो[2](म)तश्चतुष्कं [3]तदधस्तादधोऽनुलोमतः ।। 108 ।।

तदुपरि गत्वा द्वितयं गणयेत् सर्वं प्रदक्षिणम् ।
यावत्सर्वत्रैवं [4]ज्ञेयो मार्गो नक्षत्रविन्यासे ।। 109 ।।

---

एवं स्थिता तिर्यग्गतखण्डसप्तकयुताभिश्चतुर्भिः खण्डपङ्क्तिभिरन्वितं चतुरश्रं चक्रं विलिखेत् । एवं कृते अष्टाविंशतिकोष्ठं चक्रं भवेत् । अस्मिन् चक्रे अभिजिद्युतानामष्टाविंशतिनक्षत्राणां विन्यासक्रममाह - आदिमपङ्क्ताविति । पूर्वाभिमुखस्य पुरुषस्य चक्रे नक्षत्रगणनाय प्रथमं कल्प्यते । आदिमपङ्क्तौ पूर्वपङ्क्तावाद्यकोष्ठे चक्रस्य [5](ई)शखण्डे प्रथमनक्षत्रं विन्यस्य तस्य दक्षिणखण्डेषु द्वितीयतृतीयचतुर्थ पञ्चमभानि न्यस्य पञ्चमभस्य अधः खण्डमारभ्य द्वितीयपङ्क्तौ खण्डचतुष्के प्रतिलोमेन षष्ठादीनि चत्वारि भानि न्यसेत् । यथा नवमर्क्षं द्वितीयपङ्क्तौ द्वितीयखण्डे भवति । पुनर्नवमभस्याधःखण्डमारभ्य तृतीयपङ्क्तौ [6]पञ्चसु खण्डेषु क्रमेण दशमादीनि पञ्चनक्षत्राणि न्यस्य, पुनस्तस्य चतुर्दश[7]भस्योध्वा-[6](धः)खण्डयोर्द्वितीयप्रथमपङ्क्तितयोः क्रमात् पञ्चदशभं च न्यस्य पुनराग्नेयखण्डादिषु [8]द्वादशसु बाह्यखण्डेषु सप्तदशादीनि द्वादशनक्षत्राणि न्यसेत् । दक्षिणाभिमुखस्य आग्नेयखण्डमाद्यं, पश्चिमाभिमुखस्य नैऋतं, उत्तराभिमुखस्य वायव्यं, सर्वत्रैवं चन्द्रगुप्तिचक्रे नक्षत्रविन्यासे एवं मार्गक्रमो वेद्यः ।

---

1. M पाठः । T मष्टविंशति
2. T प्रतिलोपतश्चतुष्कं
3. $T_1$ तदधस्तदधोऽनुलोमतः
4. $T_1$ शोमार्गो
5. T रंशखण्डे
6. $T_1$ पञ्चरखण्डेषु
7. T भस्योर्ध्वातखण्ड
8. $T_1$ पाठः । T द्वादशेषु

[1]अष्टाविंशतिभेदं [2]प्रविभज्यार्कोदयाद्यहोरात्रम् ।
क्रमश [3]दस्रभादिकमभिजिद्युक्तं दिनर्क्षमित्याहुः ॥ 110 ॥

उदयति यन्नक्षत्रं पूर्वाद्रेर्मस्तके तु तत्काले ।
[4]उदयर्क्षात् गदितं सर्वैः ज्योतिषिनां त्रैनक्षत्रमित्याहुः ॥ 111 ॥

उदयर्क्षमिन्दुयुक्तेऽन्यस्य परेषु न्यसेत्तदादीनि ।
यस्मिन् कोष्ठे चन्द्रस्तत्र जलं प्रोच्यते भूरि ॥ 112 ॥

---

नक्षत्रविन्यासार्थं दिनर्क्षोदयर्क्षयोः स्वरूपमाह । **अष्टाविंशतीति** । अर्कोदयाद्यहोरात्रमानषष्टिनाडि-कात्मकमष्टाविंशतिभेदं प्रविभजेत् । यथा अष्टाविंशतिभेदा भवन्ति तथा विभजेत् । [5]ते(ष्वे)कै [क]स्मिन् भागे अश्विन्यादिष्वेकैकं नक्षत्रं क्रमात् भवति । तत्र द्वाविंशोऽभिजिन्नक्षत्रं भवति । अनेन विधिना वर्तमानकाले [6](यन्न)क्षत्रं भवति तद्दिनर्क्षमित्युच्यते । उदयादतीतनाडिकामष्टाविंशत्या निहत्य षष्ठ्या विभज्य लब्धं दिनर्क्षं भवति । उदयलग्ने [7](यन्न)क्षत्रं भवति तदुदयर्क्षमित्युच्यते । अथ नक्षत्रविन्यासमाह - **विन्यस्येति** । पूर्वोदिते आद्यखण्डे दिनर्क्षं विन्यस्य पूर्वोदितक्रमेण शिष्टानि नक्षत्राणि शिष्टेषु खण्डेषु गणयेत् । तदा [8]यस्मिन् खण्डे [9]इन्दुयुतं नक्षत्रं भवति [10]तत्र तस्मिन् खण्डे उदयर्क्षं वित्यस्य पुनरपि तदादीनि [A]दूर्ध्वगतनक्षत्राणि परेषु खण्डेषु पूर्वोक्तक्रमेण गणयेत् तदा यस्मिन् खण्डे इन्दुर्भवति तत्र भूरि जलं भवति । अभीष्टक्षेत्रे तद्भागे भूरि जलं भवतीत्यर्थः ।

---

1. M पाठः । T अष्टविंशति
2. $T_1$ प्रविभाज्यार्कादयोद्यहो
   M प्रविभज्याघहो
3. $T_1$ तथा M दस्रभेदिकेमभि
4. $T_1$ तथा M मातृकायां पङ्क्तिरियं न वर्तते ।
5. T तेष्वैकैस्मिन्
6. T यं नक्षत्रं
7. T यं नक्षत्रं
8. $T_1$ तस्मिन् for यस्मिन्
9. $T_1$ इन्दुर्भवति for इन्दुयुतं नक्षत्रं भवति ।
10. $T_1$ "तत्र तस्मिन्" इत्यारभ्य ततस्तृतीयपङ्क्तिगात "भूरि जलं भवति" पर्यन्तं मातृकाया नास्ति ।

---

A. अत्र "तूर्ध्वगतनक्षत्राणि" इति भवेद्वा ।

इन्दुप्रदर्शनं स्याज्जलवत्सर्वग्रहाणां [1]च यस्तेषु।
बलयुतस्स्यात्तेन ब्रूयाज्जलं न चान्येनेति ॥ 113 ॥

चन्द्रगुप्तिमार्गः सदिनर्क्षं प्रोच्यते महाचार्यैः।
अपरैस्त[2]दन्यथोक्तं प्राज्ञैस्तच्चापि कथ्यते सम्यक् ॥ 114 ॥

प्रथमे कोष्ठे सततं नक्षत्रं चाश्विभं न्यस्य।
[3]पूर्ववदुदयर्क्षस्य न्यासं वाञ्छन्ति नो दिनर्क्षस्य ॥ 115 ॥

[4]एतावदन्यथोक्तं [5]सर्वमतोऽन्यत् समं प्राहुः।
आद्ये तृतीयकोष्ठे नित्यमुदयर्क्षमेव विन्यस्य।
जलवद्ग्रहयुतकोष्ठे जलमाहुर्नेतरे किञ्चित् ॥ 116 ॥

इति तिस्रोविधा च्छत्रविद्भिः सम्प्रदर्शिताः।
चतुर्थ्यपि विधान्यैस्तु कीर्तिता [6]सा च लिख्यते ॥ 117 ॥

---

अत्रोक्त इन्दुः सर्वेषां जलवद्ग्रहाणां प्रदर्शनं स्यात्। शुक्रस्य, जलराशिगतयोर्गुरु-बुधयोश्च प्रदर्शक इत्यर्थः। तेषु ग्रहेषु यस्य बलाधिक्यं तेन जलं ब्रूयात्। न चान्येन [7]बलहीनेन एवमाचार्यैः कैश्चिदुक्तम्। अन्यैः पुनरन्यथोक्तं, तत्प्रकारमाह **प्रथमे कोष्ठे** इति। पूर्ववदुदयर्क्षस्येति। प्रथमर्क्षो काष्ठादिषु नक्षत्रेषु गणितेषु यत्र बलखण्डलग्रहो भवति तत्रोदयर्क्षं न्यस्य [8]शि(ष्ट)षष्ठकोष्ठेषु शिष्टनक्षत्राणां [9](च)न्यासमिच्छन्ति। अत्र दिनर्क्षस्य परिग्रहं न वाञ्छन्ति। दिनर्क्षेण व्यापारोऽत्र नास्तीत्यर्थः। एतावदन्यथोक्तमिति। अश्वित्यादिपरिग्रहो दिनर्क्षत्याग-श्चेत्येतावदेवात्रान्यथोक्तम्। अन्यत्सर्वं गणनाक्रमजलग्रहपरिग्रहादिकं पूर्ववदेव। अथान्यमतमाह - **आद्ये** तृतीयेति। इति तिस्र विधा मार्गा [10]च्छत्रविद्भिः सम्प्रदर्शिता इति। छत्रवशादपि जलसद्भावे निश्चिते एभिस्त्रिभि[11]र्मार्गैः देशविशेषो वाच्य इत्यनेन प्रदर्शितं भवति। [12]सजलच्छत्रयोगादपि जलं वाच्यमिति हि प्रश्नशास्त्रे कथितम्।

---

1. $T_1$ तु for च
2. $T_1$ तदन्यतोक्तः
3. M पूर्ववदुभयर्क्षस्य द्र.व्या.
4. M एतावदन्यथात्वं
5. M पाठः। T सर्वमथोऽन्यः
6. M सापि for सा च
7. $T_1$ बलहीनेन इति ग्रन्थपातः।
8. T शिखषष्ठ
9. T चान्या समिच्छन्ति।
10. $T_1$ अत्र विद्वाद्भिः
11. $T_1$ वर्गैः for मार्गैः
12. $T_1$ सजलच्छययोगादपि

[1]प्राच्याद्यकोष्ठे दस्रादि गणयेद्या[2]वदिन्दुयुक्।
यन्नक्षत्रं पुनश्चेन्दुयुतस्थाने तु विन्यसेत् ॥ 118 ॥

दिवसर्क्षं ततश्चापि यावदिन्दुयुतर्क्षकम्।
गणयित्वेन्दुसंयुक्ते लग्नर्क्षमथ विन्यसेत् ॥ 119 ॥

ततोऽपि सेन्दुक्षत्रपर्यन्तं गणयेदथ।
तत्र [3]स्यान्निश्चयाद्वारिपर्यायेऽत्र तृतीयके ॥ 120 ॥

शुक्रो गुरुर्वा यत्र स्यात् तत्राप्यस्ति महज्जलम्।
मध्याह्नात् प्राक् [4]प्राच्यपङ्क्तौ तृतीयं हि [A][तु] वह्निभम् ॥ 121 ॥

मध्याह्नात् परतो दक्षपङ्क्तौ पित्र्यं तृतीयकम्।
[5]पूर्वरात्रे तु पङ्क्तौ तु वारुण्यां [6]मैत्रभं तथा ॥ 122 ॥

---

अथान्यमतमाह - **प्राच्याद्येति**। यावदिन्दुयुक् यन्नक्षत्रमिति। [7]यन्नक्षत्रमिन्दुयुक् स्यात् तद्यावत् भवति तावद्गणयेदिति योज्यम्। अत्र तृतीयपरिवृत्तौ सजलग्रहस्थितौ भागे जलं वाच्यम्। अत्र गणने प्रथमनक्षत्रस्य भेदोऽस्ति। तत्प्रदर्शयति - **मध्याह्नादिति**। दिनस्य पूर्वार्धे [8]ईशखण्डेऽश्विभं न्यस्य [9]गणना कार्या। अपरार्धे वह्निखण्डेषु पुष्यभं न्यस्य रात्रेः पूर्वार्धे निर्ऋतिखण्डे स्वातिभं न्यस्य अपरार्धे वायुखण्डे अभिजिन्नक्षत्रमारभ्य, इत्ययं भेदोऽस्मिन् पक्षे तैरेवाचार्यैरुक्तः।

---

1. M पाठः। T प्राच्याद्यधोष्ठे
2. $T_1$ वदिङ्नियुक्
3. $T_1$ स्यान्निश्चयेश्चारिपर्या
4. $T_1$ व्याप्यपक्तौ
5. M मध्यरात्रे for पूर्वरात्रे
6. $T_1$ वैत्रभं
7. $T_1$ य सक्षत्रमिन्दुयुक्
8. $T_1$ पाठः। T राशखण्डे
9. $T_1$ गणनार्या for गणना कार्या।

---

A. अत्र छन्दसः रक्षणार्थं "तु" इति पूरितम्।

**रात्रेः परार्धे [1]वस्वृक्षमुदक्पडक्तौ तृतीयकम् ।**
**इति [2]भेदस्तु तैरुक्तः उपदेशात्तु निर्णयः ।। 123 ।।**
**प्रश्ने चरे [3](शि)रा स्यात् बहुधारजलं स्थिरे द्वयं हि ।**
**उभये [4]उ(त्त)म[शि]रा सितः स्यात्त्रिदशगुरुर्मध्यमा ज्ञेया ।।124 ।।**
**स्थूलसिकतो[5]त्थमम्भश्चन्द्रश्चान्द्रश्च सूक्ष्मसिकतोत्यम् ।**
**पाताल[6]लग्नवर्तिग्रहकिरणवशादगाधतामानम् ।। 125 ।।**
**[7]बूयादरत्निदोर्नृभि[8]रनूपेजाङ्गलेमरौ क्रमशः ।**
**षोडष[9]वेदादशकं नवसप्तशरास्तथैकविंशच्च ।। 126 ।।**

---

अयमेव क्रमः तृतीयं वह्निभमित्यादिनोक्तः । [10](प्र)कारेषु बहुषु सत्सु कथं जलनिश्चयः स्यादित्यत्राह - [11]**उपदेशा**(त् तु)निर्णय इति । उपदेशोऽत्र बहुजलग्रहसंवादोऽपि जलग्रहराहित्यं चेति केचिद्वदन्ति । तथा च प्रश्नशास्त्रे चन्द्रगुप्तौ मार्गद्वयं प्रदश्र्य तत्प्रयोजनं च प्रदर्शितम् । तत्रोभयोस्तु सजलस्थानान्यम्बुग्रहैः पृथक् ज्ञात्वा [12]यत्रोभ(योर्वि)रोधस्तत्र वदेत्तोयमस्तीति । विजलग्रहसम्बन्धात् विप्रतिपत्तिर्द्वयोर्यत्र जलमिति नैव[13](प्रवदे)त्, [14]शास्त्रार्थेष्वेव संशयो यस्मात् ।? अथ सद्भिरुक्तमेकैरन्यद्वक्ष्याम्यधोजलज्ञानं पूर्वोक्तचन्द्रगुप्तिं वहुसंवा[दा]त् दृढीकर्तुं इत्यादि तथोपदेशशब्देन ग्रहबलाबलनिरुपणे सप्तवर्गसिद्धाभीष्टजलपरिग्रहश्च प्रदर्शितः । प्रश्ने चरे सिरा स्यादिति । चरे[15][शि]रा स्यात् । एकेति यावत् । बहुधारजलं स्थिरे सिरबह्वम् । द्वयं ह्युभये शिराद्वयम् । [16][शि]रेति जलनाडी । षड्राशियुतमध्यलग्नं पाताललग्नं स्यात् । अनूपदेशे ग्रहकिरण-समैररत्निभिरगाधतामानं भूपृष्ठजलस्थानयोरन्तरालमानमित्यर्थः । अरत्निस्तु निष्कनिष्ठेन मुष्टिना इत्यमरसिंहः । जाङ्गलप्रदेशे किरणसमैर्दोर्भिः, मरुदेशे किरणसमैर्नृभिः । अधोजलविषये भावादीनां षोडश संख्याः किरणाः स्युः ।

---

1. M पाठः । T पस्वृक्ष
2. M भेदास्तु
3. T सिरा, M स्थिरा
4. T उत्तमसिरा
5. M पाठः ।T महीश्चन्द्र
6. M लग्नवर्तीग्रह
7. $T_1$ पाठः । T ब्रूयादरत्नदो
8. M पाठः । T रात्रपे for रनूपे
9. $T_1$ वेदादेकं for वेदादशकं
10. T प्राकारेषु
11. T उपदेशास्तु
12. T यत्रोभयां विरोध
13. T पवलेत्
14. $T_1$ शास्त्रार्थेस्येव
15. T सिरा for शिरा
16. T सिरा for शिरा

## अथ पुराणकूपयोगाः ॥

किरणा भान्वादिनामुच्यन्तेऽधोजले विषये ।
अथ कथयामि पुराणान् [1]कूपान् शास्त्रदृष्ट्यैव ।
स्थिरराशावारूढे कूपो वृषलग्नगश्चन्द्रः ॥ 127 ॥
वृश्चिकगते शशाङ्के वृषभगतः प्रष्ठ्रसंयुतः शुक्रः ।
दशमगते देवगुरौ भृगुचन्द्रौ बन्धुगौ पृथक्कूपौ ॥ 128 ॥
उच्चगतौ शशिशुक्रौ कूपौ नीचस्थवीक्षितौ भवतः ।
अर्के सप्तमसंस्थे गच्छन्नस्तं शशी [2]ततोऽन्यच्च ॥ 129 ॥
[3]लग्नगतं चन्द्रमसं राहुयुतं कूपमिच्छन्ति ।
आरुढगे तु कुम्भे [4]उद्यन्निन्दुसुतश्च कूपः स्यात् ॥ 130 ॥
स्थिरलग्नस्थश्चन्द्रः शुक्रसुतः कूप एव स्यात् ।
गुरुसंयुतश्च शुक्रः पातालस्थो भवेत्कूपः ॥ 131 ॥
दशमगते शशिनि तथा नारीयुक्तोशनाः कूपः ।
[5]सप्तमगे भृगुतनये बन्धुगतश्चन्द्रमाश्च परिविष्टः ॥ 132 ॥
एते तु कूपयोगाः प्रश्ने साधारणे कृते ज्ञेयाः ।
अथ भूतलैकदेशं निर्दिश्या[6]दावधोजले पृष्टे ।
अभ्यधिकान्युक्तेभ्यः [7]कूपनिमित्तानि सम्यगुच्यन्ते ॥ 133 ॥
छत्रे [8]सलिले लग्ने सेन्दु[9]गतः पृच्छकः कूपः ।
साकं पातेनार्के लग्नगते तद्वदेव स्यात् ॥ 134 ॥

---

अथ पुरण[10]कूपा(ख्या)न् योगानाह **स्थिरराशाविति**। यथोक्तयोगसद्भावे पुराणकूपं जलाश्रितस्थानमस्तीति वाच्यम् । छत्रे सलिले लग्ने छत्रात्मके सलिलात्मके च लग्ने । सेन्दुगतः [11]पृच्छकः [12]इन्दुसहितराशिगतः पृच्छक इति योजना । अथवा छत्रे सलिलात्मके [13]इन्दु(यु)तराशिगः [14]पृच्छ(कः) लग्ने च इति भवति ।

---

1. M शास्त्रोक्तष्ट्यैव for कूपान् शास्त्रदृष्ट्यैव
2. M पाठः । T तकोऽन्यच्च
3. $T_1$ लग्नगं for लग्नगतं
4. $T_1$ उद्यन्निन्दुः सुतश्च
5. $T_1$ सप्तहते
6. $T_1$ दावयो जले
7. M कूपानि तानि
8. M ससिते द्र.व्या.
9. M सेन्दुगकः
10. T कूपाख्यन्
11. $T_1$ पृच्छतः
12. $T_1$ इन्दुगतः for इन्दुसहितरशिगतः
13. T इन्दुर्युतराशिगः
14. T पृच्छतः

**उदयगते मन्दगतौ दशमगतश्चन्द्रमाश्च तादृक् ।**
**हिबुकादि[1]केन्द्रगेषु क्रमशो गुरुराहुभानुषु त्वेवम् ॥ 135 ॥**

**रविशशियोगे पातः पातलस्थो भवेत्कूपः ।**
**अथवार्कं परिविष्टस्तत्समये निश्चितः कूपः ॥ 136 ॥**

**उदयारूढच्छत्रैः सजलैर्लग्नं[2] स्थिरोऽपि [3]चेत्कूपः ।**
**भवति तदा चण्डालो यद्यागच्छेत्तदाशु वेश्या च ॥ 137 ॥**

**प्रभुषितधनको यदि वा तत्र गच्छेद्द्विजः किरातो वा ।**
**इन्द्रधनुस्तत्काले यदि भवति तदा वदेत्कूपम् ॥ 138 ॥**

**स्यात्कूपस्तत्काले [4]प्रष्टा चेत् [5]स्पृशति [6]कर्णमास्यं वा ।**
**कण्ठस्पेर्शे शान्तिः कार्या स्यात्कारणे मृतिस्तस्य ॥ 139 ॥**

**एवं पुराणकूपा ज्ञात्वा [7]तत्तीरकरणं तु [A][8](भू)जयोगादेः ।**
**पातालराशि[9]युक्ता(त्) ग्रहयोगात् दर्शनाद्वापि ॥ 140 ॥**

---

तदेति - कूपो भवतीति योज्यम् । कारणे मृतिस्तस्य तस्य कूपस्य कारणे पुरुषे मृतिः स्यात् । छन्नस्य कूपस्य खननकर्तुर्मृतिर्भवतीत्यर्थः । अतोऽत्र शान्तिः कार्या । एवं योगैः पुराणकूपान् ज्ञात्वा तेषां [10]ज्ञानं [11](भू)जयोगादेः सारुजयोगादिना ? सारुजयोगादिना वदेत् । [12]पातालराशेः कुजयोगादिसद्भावे कूपस्य छादनं वदेत् । आदिशब्देन दृष्टिः गृहीता ।

---

1. $T_1$ केनद्रकेषु
2. M र्लग्नः
3. $T_1$ चेत्कोपः
4. $T_1$ स्पृष्टा
5. $T_1$ स्पृशन्ति
6. M कण्ठमास्यं
7. $T_1$ ततितिरकरणं
8. T भुजयोगादेः द्र.व्या.
9. T युक्तान्
10. $T_1$ छादनं for ज्ञानं
11. T भजयोगादेः
12. $T_1$ "पातालराशेः" आरभ्य वदेत् पर्यन्तं मातृकायां नास्ति ।

---

A. व्याख्यानगत "कुजयोगादिसद्भावे" इति पदं दृष्ट्वा अत्र शोधितम् ।

[1]कूपस्याम्बुरसमाहुर्लग्ननवांशेशरसतुल्यं वा।
कटुकलवणतिक्तमिश्रा मधुराम्लौ च कषाय[2]मर्कादेः।
प्रश्नवचनादिवर्णादपि रसभेदास्तथा वाच्याः ॥ 141 ॥

अकचट[3]तपयशवर्गाश्चन्द्राद्यर्कान्तरसतुल्याः।
स्पृशति यदि वामभागे नै[4]ऋतभागे विनिर्दिशेद्वारि ॥ 142 ॥

ऐशान्यामूर्ध्वाङ्गे शिष्टेषु स्पर्शतोऽनिलस्थाने।
[5]सा(स्थ)नि देशे [6]स्पर्शो नेष्टः शिष्टेषु पुष्टिसंयुक्तः ॥ 143 ॥

मांसाड्येवं पङ्क्युतः फाले पाषाणसं[7]युक्तम् ॥
[8]द्विपदचतुष्पदो वा मूत्रं स्रवतीत्यत्र वारि स्यात् ॥ 144 ॥

मण्डूकवृषमयूरद्विपधनशूद्रको यदाशायाम्।
तद्दिशि तस्मिन् क्षेत्रे दैवविदा [9]वारि वक्तव्यम् ॥ 145 ॥

ऊरूदरमुष्कास्यस्पर्शे सरसाम्बु सुलभं स्यात्।
करचरण[10]गुल्फनासानाभिगलस्पर्शनेऽपि तद्वत्स्यात् ॥ 146 ॥

---

योगकर्तृरहितात् पापात् तथा पातालराशेर्ग्रहयोगदर्शनाभ्यां कूपस्याम्बुरसं ब्रूयात्। लग्ननवांशेशतुल्यं अकचटतपयशवर्गा इत्यत्र वर्णानामष्टसंख्यत्वात् [11](अष्टमो) राहुरसतुल्यमिति कल्प्यते। कटुकलवणतिक्तमिश्रं च मधुरं क्रमात् आम्लं कषायं [12]हि) रसमर्कादीनां विनिर्दिशेदिति प्रश्नशास्त्रे कथितम्। सास्थनि अस्थिसहितदेशे। यदाशायां मण्डूकायदयः शूद्रान्ता दृश्यन्ते तस्मिनिष्टक्षेत्रे तद्दिशि वारि वक्तव्यम्।

---

1. M कूपे जलरसमाहु
2. M पाठः। T अर्कभेः
3. M तपया वर्गा
4. $T_1$ नैऋतभागे इति ग्रन्थपातः
5. T सार्थनि
6. $T_1$ स्पर्शा
7. M संयुतः
8. M द्विपद इत्यारभ्य षट्पङ्क्तयः मातृकायां न सन्ति
9. $T_1$ पारि for वारि
10. $T_1$ गुल्म
11. T सप्तमो for अष्टमो
12. T वि for हि

जङ्घभूजानुशिरस्पर्शने जलमत्यधोऽश्मनो भेद्यम् ।
उरसि बलाद्भेत्तव्यं भेदे जलमस्त्यधो भागे ॥ 147 ॥

[इति] भूमिष्ठजलचिन्ता ॥ अथ वास्तुलक्षणम् ॥

जलेशरक्षसोर्मध्यमुच्चनीचं शिवेन्द्रयोः ।
वास्तु [1]किंस्तिपुरस्योक्त[स्त]त्रवासः [2]सुपुत्रदः ॥ 148 ॥

[3]त(द्वास्तुनि) देवतांस्ति [4]नत्वा तस्य बलिं हरेत् ।
विपरीतं [5]कृष्णभूः स्यात् तत्र नैव वसेत् पुमान् ॥ 149 ॥

वासे तु बहुकन्यात्व[6]मनर्थं चाभिशस्तथा ।
अग्निरक्षोन्तरं तुङ्गं [7]निम्नमीशानिलान्तरम् ॥ 150 ॥

तत्र वासस्तु शुभदः सुरुपा चात्र देवता ।
स्वल्पोन[A][8]कुडूबैः [9]शुक्लतण्डुलैर्द्रोणसूनकैः ॥ 151 ॥

घृतैश्च [10]सम्मितैः [11]सम्यगालोड्यास्यै बलिं हरेत् ।
एवं कृते [12]बलौ तत्र निवासः पुष्टिदो भृशम् ॥ 152 ॥

ईशसोमान्तरं तुङ्ग [13]नीचं [14](र)क्षोऽग्नि मध्यमम् ।
तत्र वासे तु वन्ध्या स्त्री दुःशीला दुःखसंयुता ॥ 153 ॥

---

भेद्यम[B]श्वबलाद्भेत्तव्यम् । चाश्व । अथ वास्तुलक्षणमाह - जलेशेति । राज्ञो व्याधेश्च वा वृतिरिति राज्ञो व्याधेश्च स्थानम् । ताभ्यामुपद्रवः स्यादित्यर्थः ।

---

1. M किर्तिपुराख्यः स्यात्तत्र
2. $T_1$ सपुत्रदः
3. T तत्वासिनी
4. M विधिनास्या बलि हरेत्
5. M पाठः । T कृष्णपुं स्यात्
6. $T_1$ मनर्थं इति ग्रन्थपातः
7. M पाठः । T निम्नमीशशिवान्तरम्
8. M पाठः । कुटुम्बैः
9. M तत्र for शुक्ल
10. M तन्मितैः
11. M पाठः । T सम्यगापाध्यास्यै
12. M बलैः
13. M निजं
14. T राक्षोऽग्नि

---

A. कुडुप, कुडव इति Moneir Williams कोशे शब्दद्वयं वर्तते । वबयोः अभेदन्यायेन अत्र कुडव इति भवेद्वा ।

B. अत्र अश्वबलादित्युक्ते अर्थः अस्पष्टः । चाश्व इत्यत्र चाश्म इति वा ।

इन्द्राग्न्योरन्तरं तुङ्गं नीचं च [1]यमरक्षसोः ।
[2]तत्रो[A]रुजातिरिक्ताभ्यां निवासोऽतीव गर्हितः ॥ 154 ॥

वारीड्[3]वा(य्व)न्तरं तुङ्गं नीचमिन्द्रानलान्तरम् ।
कुलक्षयकरस्तत्र निवासो निन्दितो बुधैः॥ 155 ॥

सोम[B][4]वा(य्व)न्तरं तुङ्गं निम्नं [5]स्याद्यमरक्षसोः ।
तत्र नैव वसेद्[6]धीमान् राज्ञो व्याधेश्च वा [7]वृतिः ॥ 156 ॥

ईश[8]वाय्वन्तरं तुङ्गं [9]निम्नं रक्षोऽन[10]लान्तरम् ।
नीचस्थानाह्वयं वास्तु नारोग्यार्थी वसेदिह ॥ 157 ॥

[11]अग्निरक्षोन्तरं तुङ्गं नीचमीशानिलान्तरम् ।
मध्यमस्तत्र वासः स्यादिति विद्भुदुदीरितम् ॥ 158 ॥

आशानां विदिशां चापि चतुष्कं यत्र नीचताम् ।
प्राप्तं मध्यं च तुङ्गं स्यात्तत्र नैव [12]वसेन्नरः ॥ 159 ॥

देवप्रतिष्ठा तत्रेष्टा यदि तत्र वसेन्नरः ।
कुलहीनो भवेत् स्पष्टं [13]स्थाप्यातोऽत्रेष्टदेवता ॥ 160 ॥

सन्निधिर्भूरुहां पुत्रनिहन्ता क्षेत्रसन्निधिः ।
द्रव्यहन्ता निम्न[14]मध्यसन्निधिः स्त्रीविनाशनः ॥ 161 ॥

---

**आशानामिति** । दिशां चतुष्कं यत्र निम्नं मध्यं तुङ्ग च । भूरुहां [15]सन्निधिः वृक्षाणां व्रीह्याद्याकारस्य नीचस्थलस्य विस्तृतस्य सन्निधिः । तद्धि वास्तुविद्भिरनिष्टमित्युक्तम् ।

---

1. $T_1$ यमरक्षसोः इति ग्रन्थपातः
2. $T_1$ तत्रोरुरतिरिक्ताभ्यां
3. T वार्यन्तरं
4. T वार्यन्तरं
5. M पाठः । T स्याद्यामरर्क्षसोः
6. $T_1$ दीमान्
7. M मृतिः
8. $T_1$ वारवन्तरं
9. $T_1$ निमं
10. $T_1$ लाह्वयम्
11. $T_1$ अनिरक्षो
12. $T_1$ वसेत्तरः
13. M पाठः । T स्थाप्य तत्रेष्टद्वता
14. $T_1$ मद्य
15. $T_1$ सभिधिः

---

A. अत्र तत्रोरुजातिरिक्तानां इत्यनेन स्फुटार्थो भवति ।

B. अत्र प्रकरणे सन्निहितदिग्द्वयकथनात् "सोमवाय्वन्तरं" इति शोधितम् ।

ऐन्द्रनिम्नं नृपस्येष्टं सोम[1]निम्नं [2]द्विजन्मनाम् ।
[3]वारीण्णिम्नं [4]वि(शामि)ष्टं शूद्रस्यापि तदिष्यते ॥ 162 ॥

[5]दक्षनिम्नं न [6]कस्यापि शस्यते मृत्युदं यतः ।
[7]ईशाग्रतस्त्वीशदक्षे विष्णो[8]र्वामे च पृष्ठतः ॥ 163 ॥

निम्नभागस्थरेवन्ते काल्या दक्षेऽगतस्तथा ।
[9]कलसीसंज्ञ[10]मन्दारैरन्वितेऽ[11]नर्चभाषितैः ॥ 164 ॥

[12]गुल्मैर्युक्ते गेहमालाशून्ये [13]कण(ट)क[14]युग्द्रुमैः ।
अन्विते दक्षवृद्धे च नष्टसन्ततिभिर्नरैः ॥ 165 ॥

[15]दूषिते चापि न वसेद्देशे श्रेयो यदीच्छति ।
भूभागे तु [16]चतु(र्भ)क्ते नराणां खण्डमीशकम् ॥ 166 ॥

---

कलसीसंज्ञमन्दारो रक्तपुष्पमन्दारः । पीतपुष्पमन्दारश्च नेष्टः किल । अनर्च भाषितै [17]र्गुल्मैः वेदबाह्यैः भाषितानि यानि [18]गुल्मानि तैर्युक्तः । [19]अयाज्ञीयैः स्वल्पतरुभिरित्यर्थः । गेहमालाशून्ये । गेहानां पङ्क्तयो न [20]विद्यन्ते तत्र च न वसेत् । दक्षवृद्धे दक्षिणभागविस्तृते । वृद्धिरत्र बाह्यस्थभूपरि[21]ग्रहादित्येके वदन्ति ।

---

1. $T_1$ निवनं for द्विजन्मताम्
2. M पाठः । T द्विजन्मताम्
3. M पाठः । T वारिनिम्नं
4. T विशमष्टं M पशमष्टं
5. $T_1$ द्रक्ष
6. $T_1$ तस्यापि
7. M ईशाग्रतश्चेत्वीश
8. $T_1$ र्यामे
9. M पाठः । T कलसि द्र.व्या.
10. $T_1$ मन्दारोरन्वितो
11. $T_1$ नार्च
12. $T_1$ गुन्मै
13. T कण्डक
14. $T_1$ युद्रुमैः
15. $T_1$ उषिते
16. T चतुर्भुक्ते
17. $T_1$ र्गुन्मैः
18. $T_1$ गुम्नानि
19. $T_1$ आयाज्ञीयैः
20. $T_1$ विद्यते
21. $T_1$ ग्रहादित्थेके

**यमस्य वह्निखण्डं स्यादसुराणां तु नैऋतम् ।**
**देवानां वायुखण्डं [1]स्या(दी)शखण्डे मिते पुनः ॥ 167 ॥**

**यमरज्जौ शत्रुपीडा कुष्ठं स्यादग्निरज्जुके ।**
**प्राच्यरज्जौ शत्रुपीडा नैऋते पुत्र[2]नाशनम् ॥ 168 ॥**

**वारीड्पाशे द्रव्य[3]ना(शो) [4]वायव्ये वर्गनाशनम् ।**
**कुलनाशः सोमरज्जावैशाने द्रव्यनाशनम् ॥ 169 ॥**

**परिहृत्योदितान् दोषान् स्थानेऽपि निवसेद्बुधः ।**
**ब्रह्मस्थानस्य [5]तुङ्गत्वे दशाब्दं वृद्धिरीर्यताम् ॥ 170 ॥**

---

[6]ईशखण्डे मिते पुनः इति अभीष्टचतुरश्रक्षेत्रे पूर्वापरसूत्रे दक्षिणोत्तरसूत्रे च कृते चत्वारि खण्डानि भवन्ति । तेष्वीशखण्डे मिते चतुरश्रक्षेत्रतया कल्पिते तस्य मध्यादष्टसु दिक्षु तद्बाह्यरेखान्तं अष्टौ रेखाः कुर्यात् । [7]ताः प्राच्यादिरज्जवः तासु नेह स्यात् । तत्फलमाह - **प्राच्यरज्जौ** [8]स्वामिपी(डे)ति । यदि नैऋतखण्डे वेश्म क्रियते तदा तत्राप्येता रज्जवः परित्याज्याः । ऐशनैऋतखण्डयोरेव वेश्म शुभदम् । आग्नेयवायव्यखण्डयोः एव वेश्म न शुभदम् । [9](ई)शखण्डेऽपि चतुर्भक्ते तेष्वीशखण्डनैऋतखण्डं च विशेषेण शुभदम् । एवं निर्ऋतिखण्डेऽपि वेद्यम् । तथा क्षेत्रस्य मध्ये पूर्वापरगतं सूत्रं ब्रह्मसूत्रम् । दक्षिणोत्तरगतं सूत्रं यमसूत्रम् । एतद्द्वयं सर्वत्र त्याज्यम् । तथा कोणात् कोणगतं कर्णसूत्रम् । [10]एतद्द्वयं च सर्वत्र त्याज्यम् । तथा क्षेत्रस्य बाह्यपरिधिगता पिशाचवीथिः गृहकर्मणि त्याज्या । सा[11](क्षे)त्रस्याष्टादशांशविस्तृता । तथा मध्यगतं ब्रह्मदण्डं च त्याज्यं, तच्च क्षेत्रस्यैकाशीत्यंशमितम् । चतुषष्ठ्यंशमितमित्येके । अन्याश्च दण्डि भुजगाभ्यां निन्द्याः वीथ्यः सन्ति ।

---

1. T स्यादिशखण्डे
2. $T_1$ पुत्रनाशकम्
3. T नाशौ
4. $T_1$ वायवो
5. M तुङ्गस्थे
6. $T_1$ पाठः । T रंशखण्डे
7. $T_1$ ताः इत्यारभ्य ''नेह वदेत्'' पर्यन्तं मातृकायां नास्ति ।
8. T स्वामिपिण्डेति
9. T रंशखण्डेऽपि
10. $T_1$ एवं द्वयं
11. T चात्रस्या

शताब्दं बह्नितुङ्गत्वे [1]यमोच्चे [तु] शताब्दकम् ।
यत्रोन्नतं भवेद्देशं तत्र द्वारं [2]वरं स्मृतम् ॥ 171 ॥

प्लवते च [3]तद्वद्द्वारं न कदाचिद्विधीयते ।
न [4]चाष्टमगते राशौ द्वारमत्र तु कारयेत् ॥ 172 ॥

समे द्वार[5]विधिस्त्वत्र [6]वरुणः प्राह निश्चयम् ।
न कुर्याद्दक्षिणे भागे पुष्पारामजलाश[7]या(न्) ॥ 173 ॥

तथा [8]चाम्लतरून् वृक्षान् दक्षिणे वरुणोऽब्रवीत् ।
सङ्कटानि दश प्राहुः क्षेत्रं [9]शैलं शिवास्तथा ॥ 174 ॥

पनसाश्च तटाकाश्च [10]य(ति)देवालयं तथा ।
गोष्ठं नदी समुदं च दश प्राहुर्मनीषणः ॥ 175 ॥

एकद्वारं तथा मेषे द्वितीयं कर्किसं[11]युतम् ।
तुलागतं तृतीयं तु चतुर्थं मकरे [12]स्थितम् ॥ 176 ॥

कूपं कुम्भगतं श्रेष्ठं मध्यमं मीनसङ्गतम् ।
अ[13]ध(मं) मकरस्थं हि कूपाण्येवं विदुर्बुधाः ॥ 177 ॥

---

प्लवते [14](चेति) । अष्टमगतराशौ [15]कर्तुरष्टमराशौ । आम्लतरून् वृक्षान् [16]आम्लतरुन् इति पठितान् वृक्षानित्यर्थः । सङ्कटानि दश प्राहुः । समीपे निष्ठानि [17A]पदार्थानि दश सन्तीति तद्विदः प्राहुरित्यर्थः । कानि तानि इत्यत्राह - क्षेत्रमिति । मनीषिण एतानि दश सङ्कटानि इति प्राहुः । क्षेत्रं व्रीह्यादिवापस्थानम् । शिवा जम्बुकाः वा । षष्ठं यतीनामालयं, सप्तमं देवानामालयम् । एवं यतिदेवालयमिति पाठे योजना ।

---

1. $T_1$ मध्यनिब्दे प्रवासनम्
2. $T_1$ वारं
3. $T_1$ तद्वदाद्वारं
4. M नवाष्टमगते for न चाष्टमगते
5. $T_1$ विधिस्तत्र
6. $T_1$ वारुणः
7. T यात्
8. $T_1$ चाम्लतरु
9. M शैवं
10. T यदि देवालयं द्र.व्या.
11. $T_1$ सुयुतम्
12. M स्मृतम्
13. T अधर्मं
14. T नीचे for चेति
15. $T_1$ कर्तृरष्टमराशौ इति ग्रन्थपातः
16. $T_1$ आम्लतरुन् इति ग्रन्थपातः
17. $T_1$ पदानि

---

A. "पदार्थानि" इति नपुंसकलिङ्गे प्रयोगः कृतः । अथवा $T_1$ "पदानि" इति पाठः साधुर्वा ।

**विषभागे विषं विद्यादमृतेऽमृतमुच्यते।**
**वामदक्षिण भागौ तु तस्यामृत[1]विषाख्य[कौ] ॥ 178 ॥**

---

विषभागे मृतभागे। वास्तुपुरुषस्तु अधोमुखो निर्ऋतिन्यस्तपादो ईशमूर्द्धा शेते। तस्य दक्षहस्त[2]पाद[दोर्जानूनि] आग्नेय्याम्। वामहस्त[3]पाद[दोर्जानूनि] वायव्यां दिशि। एवं क्षेत्रात्मकश्चतुरश्रतनुर्वास्तुपुरुषो भवति। तस्मिन् क्षेत्रे मध्याच्चतसृषु दिक्षु नव नव[4]वी(थ्य)श्च भवन्ति। अतः पूर्वापरगता अष्टादश, याम्योदग्गताश्चाष्टादश। तत्र एकाशीति पदं कृत्वा कोणात् कोणगतं कर्णसूत्रद्वयं च कृत्वा चतुर्दिक्षु कर्णसूत्रद्वयान्तरालगतवत्यर्धेषु नवसु नव [5](वी)थ्यः क्रमात् कल्प्याः। बाह्यात् क्रमेण मध्यतश्चोत्क्रमेण। अत्राह विश्वकर्मा - "एकाशीति पदाढ्ये क्षेत्रे वीथ्यस्तथाष्टादशसहिताः। आद्या पिशाचवीथी गीर्वाण धनेश [A]भण्डिभुजगापः ॥"

वह्निविनायकसंज्ञा विरिञ्चिनामा पुनः पुनः क्रमशः।
प्राग्दक्षिणा प्रतीची कौबेरीदिग्गतास्तु [6]मध्यान्ताः॥
अवृतिनवकं [7]तस्मिन् वास्त्ववाङ्मुखः शेते।
ऐशान्यामूर्द्धां पादौनिर्ऋतौ च संस्थाप्य॥" इति। अपि च एवं दिशां विभागं कृत्वा क्षेत्रं समन्ततश्चतुरश्रं पश्चात् सूत्रत्रितयं विज्ञाय गृहाणि कारयेद्विद्वान्। अत्रोदग्यामयातं यमसूत्रं क्षेत्रमध्य[8]समं तद्व(ज्ज)लेशवासवदिग्यातं ब्रह्मणः सूत्रम्। [9]नि(र्ऋ)तीशगतं मध्यं, पवनानलदिग्गतं तद्वत् एतद्धि कर्णसूत्रम्। सूत्रत्रितयेण कारयेद्वेश्म इति। [10]दण्ड्युरगबह्निवीथ्यः पिशाचसहिता न शोभना। नित्यंनिन्द्या पिशाचवीथिवह्नेः खण्डो विशेषेण॥" इति। वास्तुसंज्ञा चाभीष्टस्य चतुरश्रस्य भवति।

---

1. T विषाख्यतौ
2. T पादयोजानुनी
3. T पादयोजानुनी
4. T वीत्थश्च
5. T मीथ्यः
6. $T_1$ मध्यान्तः
7. $T_1$ तन्निवासस्तुत्वाङ्मुखः
8. T समन्तद्वर्ज्यलेश
9. T निऋति
10. $T_1$ दण्युरग

---

A. अत्र दण्डि भुजगादयः इति वा।

**वंशे वंशक्षयं विद्यात् स्तम्भस्थे वर्णसङ्करम्।**
**कर्णसूत्रे मृतिः कर्तुः [1]नभः सूत्रेषु विस्मृतिः ॥ 179 ॥**

---

अत्र च विश्वकर्मा - "सूत्रद्वितयेन भवेच्छैवाग्नेयासुरानिलं [2]खण्डम्। तेषु तथा प्रत्येकं खण्डचतुष्कं तु वास्तु षोडकं ऐशान्यामतिशुभदं हि आग्नेये गृहे च तैर्विनाशाय इष्ट्याप्त्यै नैऋत्यामाशुविनाशाय वायव्ये उत्तरकाष्ठेषु तथा ज्ञेयं वेशमक्रियासु सर्वत्र शिष्टं वास्तुस्थानं तत्रापि न कारयेत् वेश्म इति।"

**वंशे वंशक्षयमिति**। एकाशीतिपदे पूर्वापरायतानि यानि दशसूत्राणि याम्योदग्गतानि च दश तानि दश वंशा इत्युच्यन्ते। दिग्भेषु मध्यमः स्तम्भ इतिवदत्रापि [3]मध्यगतदिक्सूत्रद्वयं स्तम्भशब्देनोच्यत इति कल्प्यते। बहिःसूत्रं समतलात् बहिर्गतं, सीमाख्यसूत्रं वेशमस्थानात् पूर्वापरगतं, दक्षिणोत्तरगतं च सूत्रं गृहसूत्रम्। वास्तोर्मर्मस्थानानि च विशेषा[4]द्वर्ज्यानि। यथोक्तं [5]मर्मादीनि निषिद्धानि। वास्तुकर्माण्यनेकधा सन्ति संक्षेपत[6](स्ता)नि द्विधा वक्ष्यामि साम्प्रतं "नाड्यः स्युः दश पूर्वगा दश तथा वस्तुन्युदक्संस्थिता, एकाशीतिपदेषु कर्णनिहते ताभिश्च सूत्रे लिखेत्। अष्टौ षट्त्रिपदस्थिताश्च परितस्तत्पार्श्वतो रज्जवः, [7]म(र्मा)दीनि विभज्य षष्टि बहुधा तन्नाडिकारज्जुभिः ॥ अष्टाभिः सङ्गतिर्यत्र नाडीरज्जुविमिश्रितैः। सूत्रैस्तत्र महामर्म ब्रह्मस्थानस्य कोणतः ॥" इत्यादि। नाडीरज्जुसूत्राणां [8]सम्पातो मर्मेत्युच्यते। बहूनां [9]सम्पातो महामर्म। स्वल्पानांमुपमर्म। तत्र पादमध्ये रज्जुसम्पातो न दोषदः। यथोक्तं पदमध्यस्थितंमर्मरज्जुभ्यां दोषवर्जितमिति। अत्रोक्ता[10]नधोवांशा इत्युच्यन्ते। तथा च [11]मर्मवि(दः) वराहमिहिरस्य वचनं - [12]सम्पा(ता)द्वंशानामिति।

---

1. M बहिःसूत्रेषु
2. $T_1$ रवङ्तेषु तथा
3. $T_1$ मध्यमगतसूत्रद्वय
4. $T_1$ र्द्वस्यानि
5. $T_1$ वर्मादीनि
6. T स्थानानि for स्तानि
7. T मर्वादीनि
8. $T_1$ पातो for सम्पातो
9. $T_1$ सम्पादो
10. $T_1$ पाठः। T नाध्योवंशा
11. T मर्मविद्यः
12. T सम्पादाद्वंशा

चोरशत्रुग्रहोत्पाता [1]गृहसूत्रे विदुर्बुधाः ।
कन्यायां निखनेद्यस्तु कूपमेषु मृतिं व्रजेत् ।। 180 ।।

कोणसूत्रं च दिक्सूत्रमतिलङ्घ्य नवा ग्रहाः ।
एका चेद्दक्षिणा शाला द्वे[2] च दक्षिणपश्चिमे ।। 181 ।।

उदीचीं नैव कुर्वीत [3]यावत्पूर्वां न कारयेत् ।
[4]इष्टदीर्घाष्टगुणितमिष्टदिङ्मानसं युतम् ।। 182 ।।

---

अत्र कोणसूत्रे सर्वनाडी[5A]सम्बन्धोऽस्तः [6]पुन(स्त्रि)पदस्थितानि कोणगतानि चत्वारि, षट्पदस्थितानि चत्वारि, एवमष्टौ मर्मपरिमाणं च वराहमिहिरेणोक्तं - "यत्तु पदस्याष्टांशं तत्तत्प्रोक्तं मर्मपरिमाणम्" इति। उदीचीं नैवेति। अत्रोक्तगृहस्य निषेध इत्येके। पूर्वगृहस्य निषेध इत्यन्ये। वराहमिहिरेण तदुभयमपि परिगृहीतम्। तथा च तद्वाक्यं - "उत्तर[7]शाला(ही)नं हिरण्यनाभं त्रिशालकं धान्यम् । [8]प्राक्(शा)लया वियुक्तं सुक्षेत्रं वृद्धिदं वास्तु ।।" इति । अथ गृहस्येष्टयोनि[9]प्रद(दै)र्घ्यकल्पनायामुपायमाह - **इष्टदीर्घाष्टगुणित** इति । अभीष्टदीर्घस्याष्टगुणितं मान[10](मि)ष्टगृहस्य दिङ्मानेन च युतं त्रिभिर्विभज्य लब्धस्यार्धं गृह्णीयात् । तद्दैर्घ्यविस्तरयोर्योगमानं भवति । तस्मात् स्वाभिमतदैर्घ्यहीने शिष्टं विस्तारमानं भवति। इष्टदिङ्मानं तु पूर्वगृहस्यैकं, दक्षिणस्य त्रीणि, पश्चिमस्य पञ्च, उत्तरगृहस्य सप्त इति।

---

1. $T_1$ ग्रहसूत्रे
2. M द्वौ च
3. $T_1$ यावत्पूर्वं
4. M पाठः । T इष्टदीघोऽष्टं
5. $T_1$ पाठः । T सम्बधे
6. T पुनस्त्रीपद
7. T शालाहिनं
8. T प्राक्छालया
9. T प्रददेऽर्घ्य
10. T मृष्ट

---

A. अत्र सम्बन्धोऽत्रः अथवा सम्बन्धस्ततः इति भवेद्वा।

[1]त्रिभागार्धं तु [2]सङ्ग्राह्य दीर्घशेषस्तु विस्तरः ।
[A]दीर्घत्रयोदशांश[3]युक्त्या द्वित्र्यादिसंगुणम् ।। 183 ।।

दी[4]र्घार्धादधिकतरं व्यासं नेच्छन्ति गर्गाद्याः ।
विस्तारायामराशौ वसुगुणित इनैर्भाजिते शेष आयः
[5]रामघ्ने मन्ववाप्ते व्यय इति वसुभिर्भक्त शेषस्तु योनिः ।
अष्टाभिर्वर्धितेऽस्मिन् [6]त्रि[B]णवहृतफलं तद्वयः शेषमृक्षं
[7]पर्यन्ते त्रिंशताप्ते तिथि ऋषिभाजिते वार आदित्यपूर्वः ।। 184 ।।

---

विस्तारकल्पनामाह - **दीर्घत्रयोदशांशमिति** । [8]युक्त्या एव तन्मानं वेद्यमित्यर्थः । तत्प्रयोगस्तु विस्तारदैर्घ्ययोगादिष्टेन घदिनाहताद्विश्वै । इष्टैर्युतं लब्धं स्याद्विस्तारो दैर्घ्यसिद्धिरपि तेन इति ?। अथवा युक्तिशब्देन स्वाभिमतविस्तृतिसमीपस्थ-[9]गुणाकारपरिग्रह उक्तः । अत्र केचिदाहुः - "विस्तारदैर्घ्ययोगाद्वेदंहताद्द्वादशभिः सख्याप्तम् । विस्तृतिमानं प्रोक्तं शिल्पिजनैर्द्विगुणदैर्घ्यादौ ।। द्विगुणे सांघ्रि द्विगुणे सार्धद्विगुणे त्रिपादयुग्मद्विगुणे । त्रिगुणादौ च तथा स्यात् क्रमशो निन्द्यं किलात्र [10]पादोनम् ।।' इति । अत्र दैर्घ्यार्धादूनमेव व्यासमानं भवति । तदधिकं तु नेष्टमित्याह - **दीर्घार्धादिति** । अथ गृहस्य पर्यन्तमानसिद्धानामायादीनामानयनमाह - **विस्तोरति** । विस्तारायामराशिशब्देन गृहस्य पर्यन्तमा[नं] हस्तात्मकमुच्यते । सर्वत्र हृतशेषसंख्या गृह्यते । हारसमे शेषे आयादयः पूर्णा एव भवन्ति । वसुभिरित्यत्र अपिशब्दो रामघ्नसिध्य्यर्थः । पर्यन्ते रामघ्ने वसुभिर्भक्ते शेषो योनिर्ध्वजादिसंज्ञो

---

1. $T_1$ त्रिजागार्धं
2. M विज्ञेयं for सङ्ग्राह्य
3. $T_1$ युवत्या
4. M पाठः । T दीर्घाद्वाधिक
   $T_1$ दीर्घाद्वादधिक
5. $T_1$ रामघ्नेरन्ववाप्ते
6. M त्रिघनहृतफलं
7. M पर्यङ्के
8. $T_1$ युवत्यैव
9. गुणकर $T_1$
10. वादोनं

---

A. अयं श्लोक छन्दोरहितः अस्फुटार्थश्च विद्यते । व्याख्यानेऽपि स्फुटता नास्ति ।

B. अत्र यद्यपि मद्रास् मातृकापाठः तथा व्याख्यानगतपाठश्च "त्रिधनहृतफलं" इति षाठोपि साधुरेव, तथापि विशेषात् T पाठ एव स्वीकृतः ।

**रामघ्नस्य परामर्शसिध्यर्थमिति [1]गीरियम् ।**
**[2]अष्टाभिरिति तस्यैव चादेशोऽन्यविधित्सया ॥ 185 ॥**

**ध्वजो धूमश्च सिंहश्च सारमेयो वृषः खरः ।**
**गजश्च ध्वाङ्क्ष इत्येवमायाष्टकमुदीरितम् ॥ 186 ॥**

---

भवतीत्यर्थः । अस्मिन् गृहस्य पर्यन्ते अष्टाभि[3]र्वर्धिते त्रिघनहृते [4]सप्तविंशत्या **हृते** फलं तस्य गृहस्य वयो भवति। तत्र हृतशेषं ऋक्षं नक्षत्रं भवति। पर्यन्ते अष्टाभि[5]र्वर्धिते त्रिंशताप्ते शेषःशुक्लप्रतिपदादितिथिर्भवति । तथाष्टाभिर्वर्धिते ऋषिभाजिते सप्तभिर्भाजिते शेषः सूर्यादिवारो [6]भवति । एवं सम्प्रदायविदः आहुः । केचित्तु केवलादेव पर्यन्तात् तिथिवारौ कल्पयन्ति ।

शास्त्रविदः रामघ्नस्येति विवरणम् - इदमिति कथित परामर्शसिध्यर्थं पूर्वत्रोदितस्य रामघ्नस्य परत्रापि सम्बन्धसिध्यर्थमिति । अष्टाभिरित्युद्देशो [7]अष्टगुणनविधिस्तस्यैव केवलस्य पर्यन्तस्यैव अन्यविधित्सया च [8]साष्टाभिरित्युद्देशः । अन्यौ तिथि[9]वा(रा)वप्यष्टगुणितात् [10]साध्यावित्यर्थः । पूर्वाद्यष्टदिक्षु संस्थितानायान् योनिसंज्ञितान् क्रमेणाह - **ध्वज** इति ।

---

1. M गीरितम्
2. M अष्टाभिर्गुणितस्यैव त्रिंशता हरणं स्मृतम् ॥
3. $T_1$ वर्धते
4. $T_1$ सप्तविंशत्या हृत्या हृते
5. $T_1$ वर्धते
6. $T_1$ भवन्ति
7. $T_1$ अष्टगुणविधिः
8. $T_1$ सेष्टाभि
9. T वारवण्यष्ट
10. $T_1$ सन्ध्या

**ध्वजो हरौ तौच णजे वृषे ते**
**वृषो हि नान्यत्र समाश्रितः स्यात् ।**
**प्रत्यग्ध्वजे द्वारमतोष्णिपूर्व**
**हरावुदक् [1]स्याद्द्विरदे च याम्यम् ॥ 187 ॥**

**(इति) वास्तु चिन्ता ॥ अथ शरीरलक्षणम् ।**

**[2]अस्वे[A]दि(नौ) मृदुतलौ [3](कम)लोदरभौ**
**[4]श्लिष्टा[ङ्गुली]रुचिरताम्रनखौ सुपार्ष्णी ।**
**उष्णौ [5][शि] राविरहितौ विनिगूढगुल्फौ**
**कूर्मोन्नतौ च चरणौ [6]मनुजेश्वराणाम् ॥ 188 ॥**

---

स्वदिग्व्यतिरिक्तासु दिक्षु शुभदानायानाह - **ध्वजो हराविति** । याम्ये ध्वजः शस्तः । सौम्ये ध्वजसिंहौ शस्तौ । पश्चिमे ध्वजसिंहगजाः शस्ताः । [7](वृ)षः पश्चिमदिश्येव शस्तः । ध्वजसिंहगजाः स्वदिशि च शस्ताः । अत्र विश्वकर्मा - "[8]वृ(षा)दयः स्वदिक्षु [9]क्षेमकराः सर्वदिक्षु [10]वृ(ष)श्च । [11]वृ(ष)रहितेषु केसरिभो वृषेऽन्यत्र शोभनो न वृषः" इति । [12]धूमश्चाखुखरवायसाः सर्वत्र वर्ज्याः । पूर्वपश्चिमदक्षिणसौम्य-गेहानां द्वारदिशं क्रमेणाह - **प्रत्यग्ध्वजे** इति । एकाशीतिचतुःषष्ट्यादि[13]म(त)भेदेषु एकं पक्षमाश्रित्य वास्तुदेवतापूजां कृत्वा तत्पक्षमाश्रित्य मर्मविभागादिकं च कृत्वा [14]वेश्मादिकर्म कार्यम् । अथ शरीरलक्षणमाह - **अस्वेदिनाविति** । एतत् पादलक्षणम् । [15]श्लिष्टाङ्गुली अविरलाङ्गुली । कूर्मोन्नतौ कूर्मपृष्ठ[16]वदुन्न(तो)परिभागौ । मनुजेश्वराणां [17]नरस्य राज्यप्रदावित्यर्थः । अत्र गर्गः - "पद्मरक्तोत्पलनिभैस्तथा क्षतजसन्निभैः । नृपः पादतलैः ज्ञेयो ये चान्ये सुखभोगिनः ॥" इति ।

---

1. M पाठः । T स्याद्विरदेश्च
2. T अस्वेदिना द्र.व्या.
3. T मकलोद
4. T श्लिष्टान्नधीरुचिर द्र.व्या.
5. T सिरा
6. $T_1$ मनुचेश्वराणाम्
7. T विषः
8. T वृक्षादयः
9. $T_1$ क्षेमकाराः
10. T वृक्षश्चं
11. T वृक्षरहितेषु
12. $T_1$ डूमश्चारवु
13. T मदभेदेषु
14. $T_1$ वेश्यादि
15. $T_1$ शिष्टाङ्गुली
16. T दुन्नतौ परिभागौ
17. $T_1$ तरन्य

---

A. वृहत्संहिता अ. 68 श्लो. 2.

[A]शूर्पाकार[1]विरूक्षपाण्डुरनखौ वक्रौ [2][शि]रासन्ततौ
संशुष्कौ विरलाङ्गुली च चरणौ दारिद्र्यदुःखप्रदौ।
मार्गे [3]चोत्कुटिकौ कषायसदृशौ वंशस्य विच्छित्तिदौ
[4]ब्रह्मघ्नौ परिपक्व[5]मृद्द्युतितलौ पीनावगम्या [6]रतौ ॥ 189 ॥

प्रवि[B]ल[7]तनुरोमवृत्तजङ्घा
द्विरदकरप्रतिमाभिरूरुभिश्च।
उपचित[8]समजानवश्च भूपा
धनरहिताश्च सृगालतुल्यजङ्घाः ॥ 190 ॥

---

दोषमाह - शूर्पेति। [9]शू(र्पा)कारावग्रे विस्तीर्णौ। रुक्षौ अस्निग्धौ। संशुष्कौ देहमानावनुगुणकार्श्यौ। विरलाङ्गुली [10]विश्विष्टाङ्गुली। उत्कुटिकौ मध्यादुन्नतौ, पादुकाकारपदभूस्पृङ्मध्यतलौ। मार्गे मार्गायासकराविति [11]निरुपमबोधशिष्येण संहिताव्याख्याकृता व्याख्यातम्। कषायसादृश्यं वर्णतः। दग्धमृत्तिकावत् विवर्णकान्तिमत्तलौ ब्रह्मवधाय। प्रविरलेति। प्रविरलतनुत्वं [12]जङ्घा[स्थ]रोमाणां, जङ्घाया वृत्तत्वं समत्वं निम्नोन्नतराहित्यम्। अत्र समुद्रवाक्यम् - ''जङ्घाभिरभिवृत्ताभिरैश्वर्यमभिनिर्दिशेत। सृगालजङ्घा दुःखार्ताः [13](श्व)जङ्घा नित्यमध्वगाः॥'' इति।

---

1. M विरुपपाण्डु
2. T सिरा
3. $T_1$ पाठः। T चोत्कुटिलौ द्र.व्या.
4. M पाठः। T ब्रह्मघ्नोऽपरपक्व
5. M मुघतितलौ
6. $T_1$ रते
7. $T_1$ ततानु for तनु
8. $T_1$ सजानवश्य तथा M
9. T शूर्पकारा
10. $T_1$ विश्लिष्टाङ्गुली इति ग्रन्थपातः
11. $T_1$ निरुपबोधशिव्येण
12. T जङ्घास्फरोमाणां
13. श्चजङ्घा

---

A. बृहत्संहिता अ. 68 - श्लो.3.
B. बृहत्संहिता अ. 68 - श्लो.4.

[A]रोमैकैकं [1]कूपके पार्थिवानां
द्वे द्वे ज्ञेये पण्डितश्रोत्रियाणाम्।
त्र्याद्यैर्निःस्वा मानवा दुःखभाजः
केशाश्चैवं पूजिता निन्दिताश्च ॥ 191 ॥

[B]निर्मांस[2]जानुर्म्रियते [3]प्रवासैः
सौभाग्यमल्पैर्विकटैर्दरिद्राः।
स्त्रीनिर्जिता[4]श्चापि भवन्ति निम्नैः
[5]राज्यं समांसैश्च [6]महद्भिरायुः ॥ 192 ॥

[C]लिङ्गेऽल्पे धन[7]वानपत्यरहितः [8]स्थूले विहीनो धनैः
[9]मेढ्रे [10]वामनते सुतार्थरहितो वक्रेऽन्यथा पुत्रवान्।
दारिद्र्यं विनते [11][त्वधो]ऽल्पतनयो लिङ्गे [12][शि]रासन्तते
स्थूलग्रन्थियुते सुखी मृदुतरे त्वार्तः प्रमोहादिभिः ॥ 193 ॥

---

रोमेति। कूपके रोमकूपके। पण्डितो विद्वान्। जन्मसंस्काराभिविद्याभि[13]र्युतः श्रोत्रिय इति निरुपबोधशिष्येणोक्तम्। केशाः शिरसिजाताः। निर्मांसेति। अल्पैरित्यादौ जानुभिरिति विशेष्यम्। विकटैः पृथुभिः। लिङ्गेऽल्पे इति। [14]स्थू(ले) धनैर्विहीनः। अत्र नारदः - "दीर्घलिङ्गे च दारिद्यं स्थूललिङ्गे च निर्धनः। कृशलिङ्गे च सौभाग्यं ह्रस्वलिङ्गे [15]च भूपतिः ॥" इति। अन्यथा वक्रे दक्षिणभागे नते पुत्रवान्। अत्र समुद्रः - "यस्य दक्षिणमावर्ते स नरः पुत्रवान् भवेत्। वामावर्ते तथा लिङ्गे नरः कन्यां प्रसूयते ॥ अधोन्नतेन दारिद्र्यं मृदुलिङ्गं प्रमेहकृत्" इति।

---

1. T रुपके
2. T जारं for जानु
3. M प्रवासे
4. M श्रापि for श्चापि
5. M पाठः। T राज्यः
6. $T_1$ महद्भिरायुम्
7. M वापश्यरहितः
8. M स्थूलोऽपि हीनो
9. $T_1$ म्रद्रे
10. M वामनके
11. T व्ययोल्पतनयो
12. T सिरा
13. T र्य न for युतः
14. T स्थूल
15. $T_1$ चमूपतिः

---

A. बृहत्संहिता अ.68 - श्लो. 5
B. बृहत्संहिता अ.68 - श्लो. 6
C. बृहत्संहिता अ.68 - श्लो. 7

[A][1]कोशनिगूढैर्भूपा दीर्घै[2](भग्नै)श्च वृत्तपरिहीनाः ।
ऋजुवृत्तशेफसोर्लघु[3][शि]राल[4]शिश्नाश्च धनवन्तः ॥ 194 ॥

[B]जलमृत्युरेकवृषणो विषमैः स्त्री[5]मण्डलः[6]समैः क्षितिपः ।
[7]ह्रस्वायुश्चोद्बद्धैः प्रलंबवृषणस्य शतमायुः ॥ 195 ॥

निःस्वो [8]निःशब्दमूत्रः स्यात् सशब्दे सौख्यभाक् स्रवे ।
[9]विकीर्णमूत्रो [10]निःस्वनो [11]द्वित्रिचतुर्दक्षधारकः ॥ 196 ॥

श्रीमान् स्यात् कटिविस्तारः पुत्रभोगसमन्वितः ।
उरो विशालो धनवान् निःस्वो विस्तीर्णजङ्घकः ॥ 197 ॥

मांसलस्कन्धको [12]भूपपूज्यः सर्पोदरः पुनः ।
[13]वह्वाशी श्रीर्विहीनश्च ऊर्ध्वोरस्कस्तु शस्त्रतः ॥ 198 ॥

---

**कोशनिगूढैरिति** । कोशच्छन्नैर्लिङ्गाग्रैः [14](भूपाः) स्युः । भग्नैः वक्रैर्लिङ्गैः । जलमृत्युरेकवृषणे । विषमे स्त्रीचञ्चलः । समैः क्षितिपः । ह्रस्वायुश्चोर्ध्वाण्डः । प्रलम्बवृषणस्य शतमायुः । इति संहितायां पाठः । स्त्रीमण्डल इति पाठे च स्त्रीचञ्चलत्वं सिध्यति । उद्बद्धैः ऊर्ध्वगतैः । **निःस्व इति** । निःशब्दत्वं सशबदत्वं च स्रवे स्रवणकाले चिन्त्यम् । विकीर्णमूत्रोनिःस्वो भवति । द्वित्रि[15]चतुर्धारकः श्रीमान् स्यात् । अत्र वराहमिहिरः - "द्वित्रिचतुर्धाराभिः प्रदक्षिणावर्तवलितमूत्राभिः । पृथिवीपतयो ज्ञेया विकीर्णमूत्राश्च धनहीनाः ॥" इति । कटिविस्तारो विस्तृत[16] कटिः, पुत्रभोगसमन्वितः स्यात् ।

---

1. M शोकनिगूढै
2. T भूंवनैश्च द्र.व्या.
3. T सिरा
4. M पाठः । T शिश्नोऽवश्यं धनवन्तः
5. स्त्रिमण्डल M
6. M सवैः
7. M ह्रस्वोऽल्पायुश्चोद्बद्धैः
8. M निशब्द
9. M पाठः । T कीर्णं for विकीर्ण
10. M पाठः । T निसो
11. $T_1$ द्वित्रि । T द्वित्री
12. M पाठः । T भूपः पूज्यः
13. $T_1$ बह्वांशी
14. T सूषाः द्र.मू.
15. $T_1$ चतुर्दक्षयो
16. $T_1$ घटिः for कटिः

---

A. बृहत्संहिता अ.68 - श्लो.8.
B. बृहत्संहिता अ.68 - श्लो.9.

[1]मृतिं [2]यायात्पार्श्वनिम्नस्त्यक्तभोगः समे पुनः ।
पार्श्वे धनाढ्यता कक्ष उन्नते [3]तु नृपो भवेत् ॥ 199 ॥

[4]नेत्रवर्त्मोर्ध्वे[5]विवरौ कठिणौ रोमशावुरु ।
[6]कर्णावायुष्करौ नेत्रे समे नासान्तलोहिते ॥ 200 ॥

उद्बुद्धनिभे तूर्णं निमेषरहिते तथा ।
तुङ्गायतदृढा नासा विशालविवरा तथा ॥ 201 ॥

नासोष्ठमध्यो विपुलः [7]श्लेषहीने भ्रुवौ मिथः ।
अच्छिन्नदीर्घ भूयिष्ठवलिशालिः क्रमोच्छ्रितम् ॥ 202 ॥

फालमायुष्यमेतस्य त्वादिमध्यान्तनिम्नता ।
तत्त[द्द]शामयकरी शङ्खदेशश्च संवृतः ॥ 203 ॥

---

भूपपूज्यो भूपेन पूज्यः स्यात् । उदरे वराहमिहिरः "सम[8]जठ(रा) भोगयुताः घटविवरनिभोदरा निःस्वाः" इति । घटपिठरनिभोदरा इति च पाठः । ऊर्ध्वोरस्क इति । अत्र वराहमिहिरः "-[9]समवक्षसोऽर्थवन्तः पीनैः [10]शूरा [ह्य]किञ्चनास्तनुभिश्च । विषमं वक्षो येषां ते निःस्वाः [शस्त्र]निधनाश्च ॥" इति । पार्श्वनिम्नो निम्नपार्श्वः । अत्र वराहमिहिरः - "अविकलपार्श्वा धनिनो [11]निम्नैर्वक्रैश्च भोगसन्त्यक्ताः ।" इति ॥ नेत्रवर्त्मेति कर्णलक्षणम् । नेत्रे समे इति नेत्रलक्षणम् । तुङ्गेति नासालक्षणम् । नासोष्ठमध्यो नासोष्ठयोरन्तरालप्रदेशः । श्लेषहीने इति भ्रूलक्षणम् । उक्तलक्षणयुतानां नेत्रादीनामायुष्करत्वं स्यात् । अचिछन्नेति ललाटलक्षणम् । अच्छिन्नदीर्घभूयिष्ठैः वलिभिर्युतं क्रमेणोच्छ्रितं च [12]फालं ललाटम् । आयुष्य[13]रेखाविशेषस्य वलिसंज्ञा । एकस्य [14]फालस्य तत्तद्दशामयकरी आदिमध्यान्तवयस्यामयकरी । शङ्खदेशे

---

1. M मृती यायांत्
2. M पाठः । T यायाल्पानिम्न
3. तु --- पो भवेत् । M
4. $T_1$ पाठः । T नेत्रपद्मोर्ध्व द्र.व्या
5. $T_1$ विचरौ
6. M पाठः । T कर्णावचायुष्करौ
7. M पाठः । T श्लेष्महीने द्र.व्या.
8. T जठर भोगमुता
9. $T_1$ पाठः । T समवक्षसोऽर्धवन्तः
10. T शूराश्चकिञ्चना
11. $T_1$ निम्नैर्वक्त्रैश्च
12. $T_1$ फलं
13. $T_1$ रेखे विशेषस्य
14. $T_1$ फलस्य

**केशै[1]र्दीक्षाकरो बाल्ये तथा सङ्कुचितालिकम् ।**
**जिह्वोष्ठदन्तमूलानां रक्तिमोत्तमस[2](म्प)दे ॥ 204 ॥**

**एतेषां नीलिमा भूयो विपरीतफलप्रदाः ।**
**[A]कनिष्ठिकामूल[3]भवागता या**
**प्रदेशिनीमध्यगतान्तरालम् ।**
**करोति रेखा परमायुषः सा**
**प्रमाण[4]मू(नं) तदब्दमायुः ॥ 205 ॥**

**अङ्गुष्ठमूले तु [5]प्रसवस्य रेखाः**
**पुत्रा बृहत्यः प्रमदास्तु [6][सूक्ष्माः] ।**
**अच्छिन्नदीर्घा [7]बृहदायु(ष)स्ताः**
**स्वल्पायुषः छिन्नलघुप्रमाणाः ॥ 206 ॥**

**[8]स्वरः सत्वं च नाभिश्च त्रिगम्भीरं [9]प्रशस्यते ।**
**उरो ललाटं [10]वक्त्रं च त्रिविस्तीर्णं तथा मतम् ॥ 207 ॥**

---

दक्षिणवाम [11]भागेन अलीकं ललाटम् । [12]कनिष्ठिकामूलभवेति । मध्यगता मध्यमाङ्गुलिः । प्रदेशिनीमध्यमिकान्तरालभुविति संहितायां पाठः । या रेखा कनिष्ठिकामूलात् प्रदेशिनीमध्यमिकयोरन्तरालमद्यमं गता का परमायुषः प्रमाणम् । परमायुः प्रमाणमायुः करोति । ऊनं तु [13]तदब्दमायुरिति । यतोक्तादूनं रेखामानं तु तदब्दमायुः करोति । रेखा यावदूना सा परमायुःप्रमाणतः तावदूनमायुः करोतीत्यर्थः । ऊना तु तदूनमायुरिति संहितायां पाठः ।

---

1. $T_1$ दीक्षान्तरे
2. T सम्वदे
3. T भवाङ्गनाया
4. T मूलं for मूनं द्र.व्या.
5. $T_1$ प्रचयस्य
6. T तस्याः for सूक्ष्माः
7. T बृहदायुषांस्ताः
8. $T_1$ स्वरां
9. $T_1$ प्रशस्येत्
10. M वदनं च पुंसां विस्तीर्णमेतत्रत्रितयं प्रशस्तम्
11. $T_1$ भागौ
12. $T_1$ कनिष्ठना
13. $T_1$ तदष्टमायु

---

A. बृहत्संहिता अ.70 - श्लो.13.

ग्रीवा प्रजननं पृष्ठं ह्रस्वजङ्घा च पूज्यते ।
सूक्षान्यङ्गुलिपर्वाणिकेशरोमनखत्व[च]म् ।। 208 ।।

[1]दन्ताश्च कुक्षिर्वक्षश्च घ्राणः स्कन्धो ललाटिका ।
षडुन्नतानि येषां स्युस्ते नरा दीर्घजीविनः ।। 209 ।।

अधरोष्ठे च नेत्रान्तं जिह्वापाणिपदोस्तले ।
नखं च सप्त रक्तानि श्रीमतां महतां नृणाम् ।। 210 ।।

रेखाभिर्बहुभिः क्लेशः स्वल्पाभिर्धनहीनता ।
रक्ताभिर्धन[धा]न्याप्तिः [2][कृ]ष्णाभिः प्रेष्यतां व्रजेत् ।। 211 ।।

अगम्यगामी पीताभिर्विच्छिन्नाभिः [3]प्रमादता ।
कनिष्ठाङ्गुलिदेशात्तु तर्जनीं मध्यमामथ ।। 212 ।।

अनामिकां च रेखा चेद्गच्छेन्नि[4][ध]नतां नरः ।
अब्दमायुर्ललाटे चेच्चतस्रः छेद[5]व[र्जि]ताः ।। 213 ।।

तिस्रो द्वे चाथ [6]वल्यश्चेदवनी[शं] नरं तथा ।
सर्पोदरा दरिद्रा भवन्ति बह्वाशिनश्चैव ।। 214 ।।

[A]शस्त्रान्तं स्त्रीभोगिनमाचार्यं बहुसुतं यथासंख्यम् ।
[7]ए(क)द्वित्रिचतुभि[8]र्वलिभिर्विन्द्यान्नृपं त्ववलिम् ।। 215 ।।

अनामिका पर्वमतिक्रमेति चेत्
[9]कनिष्ठिका वर्षशतं प्रदिष्टम् ।
समेत्वशीतिर्विषमे च सप्तति-
र्यवार्धहीने खलु [10]षष्टिमादिशेत् ।। 216 ।।

---

1. M दन्तश्च
2. T तृष्णाभिः
3. $T_1$ प्रमाददाः
4. T नितनतां
5. T छेदवर्धिताः
6. $T_1$ बल्यश्चेयनीजं
7. T एतत्रि
8. $T_1$ बलिभिर्विन्द्या
9. $T_1$ कनिष्ठिता
10. M पाठः । T पुष्टिमादिशेत्

---

A. बृहत्संहिता अ.68 - श्लो.24.

अङ्कुशं कुण्डलं चक्रं [1]यस्य पाणितले भवेत् ।
स मर्त्यो मनुजेन्द्रैश्च [2]पूज्यपादः पुरारिवत् ।। 217 ।।

[A]मयूरचापध्व[3][छ]त्रतोरणं
करे पदे वा धनवान् भवेत्सः ।
[4]यवाब्दशङ्खासि कारणमाला
रन्त्ये च त्र्यन्दुतर्के ।। 218 ।।

[5B]सपालिका कुम्भ[6]गजाश्वसिंह
वरासनं पीठमथाङ्कुशं च ।
वज्रं शरं राजगृहं [C][च] चक्रं
करे पदे संक्षितिपैश्च पूज्यः ।। 219 ।।

[7]ऋक्षवृक्षनदी[8]नाम्नीं [9]नरेफोपान्तनामिकाम् ।
अतिदीर्घामतिह्रस्वामतिस्थूलां तथा कृशाम् ।। 220 ।।

---

स्त्रीलक्षणाध्याये पठितोऽध्याहार्थ योज्यम्? । अथवा न वर्जयेदित्येव योजना । तत्र वर्ज्यत्वप्राप्तिरप्यनूदिता । प्राप्तस्यैव हि निषेधो युक्तः । अथ ऋक्ष्यादिनामविशिष्टाकन्या नातीव [10]वर्ज्येत्युक्तं भवति । अतिदीर्घादयो वर्ज्या एव ।

---

1. M पाठः । T यस्याः
2. M पाठः । T पूज्यपादं
3. T मत्र for छत्र
4. M यवाधनद्वदेत्सा for यवाब्दशङ्खासि --- त्र्यन्दुतर्के ।।
5. $T_1$ सापालिका
6. M गजाश्चसिंह
7. M नृक्ष
8. M नामिं
9. M रफलोपान्त
10. $T_1$ वर्जत्युक्ते

---

A. अस्य श्लोकस्य तृतीयचतुर्थपादौ अस्फुटौ छन्दोरहितौ च ।
B. अत्र पालङ्क्यार्थकशब्दो वा ।
C. अत्र छन्दसः रक्षणार्थं "च" पदं योजितम् ।

अतिगौरीं भृशं कृष्णामन्धां [1]मूकां च कुब्जिकाम्।
अत्यङ्गीं च [2]व्रणाङ्गीं च व्यङ्गां च [3]विषमस्तनीम् ॥ 221 ॥

दुःशीलां चैव [4]मुण्डां च स्वापशीलां च [5]कुष्ठिताम्।
काकस्वरां चातिहासां वर्जयेत् कन्यकां नरः ॥ 222 ॥

सरोमकोत्तरो[6]ष्ठीया यापि चास्निग्धदन्तिका।
एकायत[7]भ्रूर्या च स्त्री सा पतिघ्नी [8]परार्थिनी ॥ 223 ॥

विरलाङ्गुली च [9]छिद्रा(ङ्गी) रोमराजिचिताङ्घ्रिका।
सरोमकस्तनी तद्वद्वली[10]सञ्छिन्ननाभिका ॥ 224 ॥

[11]रोमोपचितजङ्घा च पतिघ्नी सम्प्रकीर्तिता।
[12]पुलकान्वितवक्त्रा च पृष्ठरोमा च या वधूः ॥ 225 ॥

यस्याः प्रदेशिनी पादे त्वङ्गुष्ठादूर्ध्वगामिनी।
[13]कनिष्ठिकानामिका वा भूम्यां नैव प्रतिष्ठिता ॥ 226 ॥

---

यतस्तानि लक्षणान्य-कृतानि ? यस्याः स्तनद्वयं [14]परस्परमतुल्यं सा [15]विषमस्तनी। मुण्डा छिन्नकेशा। एकायत[16](भ्रूः) सन्दृष्टभ्रूः। छिद्राङ्गी रेखाविभक्ताङ्गीत्यर्थः। पिलका सूक्ष्मपिटका। प्रदेशिनी अङ्गुष्ठसमीपगा। सा [17]अङ्गुष्ठादूर्ध्वगामिनी। कनिष्ठिका अनामिका च पादे भूम्यां नैव प्रतिष्ठिता, गमनकाले अभूमिस्पृष्टेत्यर्थः।

---

1. M पाठः। T दूतां
2. $T_1$ प्रणाङ्गी
3. M विषमस्तिनीम्
4. $T_1$ मुञ्चां
5. M कुष्ठिकाम्
6. M पाठः। T रोष्ठी for रोष्ठीया
7. $T_1$ भूया for भ्रूर्या
8. M वरार्थिनी
9. T छिद्राङ्गी द्र.व्या.
10. M सञ्छन्न
11. M रोमापचित
12. पुलिकान्वित
13. M कनिष्ठानामिका वापि
14. $T_1$ परस्परतुल्यं
15. $T_1$ विषमस्तानि
16. T ब्रूः for भ्रूः
17. $T_1$ अङ्गुष्ठामूर्ध्व

करालाक्षी भ्रान्तनेत्रा निस्तनी [1]स[शि]रा तथा।
उद्बद्धपिण्डिका [2]वापि रोमराजिनिरन्तरा ॥ 227 ॥

कुदन्ती कुनखी चापि [3A]वक्रवादातिकोपिनी।
महागुल्फी [4]रुदन्ती च [5]स्थूलजङ्घा च या वधूः ॥ 228 ॥

स्वप्ने च कटुकालापा लम्बोष्ठा लम्बवक्त्रिका।
[6]झर्झरस्वरयुक्ता च तथा विनयवर्जिता ॥ 229 ॥

प्रज्ञाशून्या च या नारी सा च नित्यं विगर्हिता।
[B]स्निग्धोन्नताग्रतनु[7]ताम्रनरवौ कुमार्याः
पादौ समौ च सितचारुनिगूढगुल्फौ।
[8](श्लिष्टा)ङ्गुली कमलकान्तितलौ च यस्याः
तामुद्वहेद्यदि भुवोऽधिपतित्वमिच्छेत् ॥ 230 ॥

[C]मत्स्याङ्कुशाब्जयववज्र[9]हलासिचिह्ना-
वस्वेदिनौ मृदुतलौ चरणौ प्रशस्तौ।
जङ्घे च रोमरहिने [10]वि[शि]रे [11]सुवृत्ते
जानुद्वयं सममनुल्बणसन्धिदे[12](शः) ॥ 231 ॥

---

करालाक्षी असौम्यदृष्टिरित्यर्थः । उद्बद्धपिण्डिका जङ्घायाः पृष्ठभागः । स्वप्ने च कटुकालापा कटुकभाषिणी, स्वप्ने च कटुकभाषिणीत्यर्थः । शुभलक्षणमाह - स्निग्धेति। कूर्मवदुन्नतौ अग्रे। तनुताम्रनरवौ यस्याः पादाविति संहिताव्याख्याकारेण व्याख्यातम्। समत्वमन्योन्यतः ।

---

1. T ससिरा
2. $T_1$ चापि
3. M वक्रपादा
4. M कुदन्ती
5. M तूलजङ्घा
6. $T_1$ सर्झर
7. M पाठः। T मात्र for ताम्र
8. T शिष्ठाङ्गुली
9. M हलाग्नि
10. T विसिरे
11. M सिवृत्ते
12. T देशम्। M देशे

---

A. अत्र वक्रपादा इति M पाठोऽपि साधुर्वा।
B. बृहत्संहिता अ.70 - श्लो.1.
C. बृहत्संहिता अ.70 - श्लो.२.

रविचन्द्रादितिमिङ्गिललोल-
ज्योतिषदुग्ध[1]महाम्बुधिमध्यात् ।
गोविन्देन मुहूर्तमहामणि-
रुद्धृत एष तु लोकहिताय ॥ 232 ॥

सूर्यादि सर्वग्रहेभ्यो नमः ॥
अमावास्या च सौम्येन आदित्यो सप्तमी सह ।
चतुर्थ्यङ्गारकश्चैव अक्षयं च दिनत्रयम् ॥ 233 ॥

इति मुहूर्तरत्नं समाप्तम् ॥

श्रीकृष्णाय नमः ॥

॥ शुभमस्तु ॥

---

अग्निशब्देन अग्निहोत्रसाधनंवा परिगृहीतम् । "कुर्वन्ति चमूनाथं यज्वानमुलूखलाकाराः" इति वराहमिहिर[2]वचनं चास्ति। वेदनिभेनै वाग्निहोत्रिणः इति च हलासिचिह्नाविति संहितायां पाठः । तथा [3]वि[शि]रे सुवृत्ते इति च तत्र पाठः । [4]अनुल्बणसन्धिदेशः अव्यक्तसन्धिभा[5](गः) । अथोपसंहति
रविचन्द्रादितिमिङ्गिललोलज्योतिषदुग्धमहाम्बुधिमध्यात् ।
[6]मुहूर्त(महा)मणिरुद्धृत एष [7]तु लोकहिताय ॥ चेति ।

इति गोविन्दशिष्यपौत्रेण परमेश्वरेण कृते मुहूर्तरत्नव्याख्याने चतुर्थोऽध्यायः ॥

॥ शुभमस्तु ॥

---

1. M माहाम्बुधि
2. $T_1$ वचनं इति ग्रन्थपातः
3. T विसिरे, $T_1$ पिसिदे
4. $T_1$ अनुद्व्रण द्र.मू.
5. T भागम्
6. T मुहूर्तमणिरुद्धृतः द्र.मू.
7. $T_1$ तुकहिताय for तु लोकहिताय

# उपयुक्तग्रन्थसूची - (Bibliography)


| ग्रन्थस्य नाम | ग्रन्थकर्तुर्नाम | मुद्रणसंस्था |
|---|---|---|
| केरळीयसंस्कृतसाहित्य-चरित्रम् | कवितिलक वटक्कुङ्कूर-राजराजवर्मा | मङ्गलोदयं मुद्रणालयं त्रिच्चूर 1962 |
| बृहज्जातकम् वराहमिहिरविरचितं, भट्टोत्पलव्याख्यायुतं | श्री सीताराम झा (सारार्थदीपिकाव्याख्या) | मुकुन्दलाल अगरवाल बाम्बेमुद्राणसंस्था लखनाऊ 1975 |
| बृहत्संहिता वराहमिहिरविचचित | श्री अच्युतानन्द झा (विमलाटीका) | चौखम्बाविद्याभवनम् वारणासी 1959 |
| भारतीय ज्योतिष | विश्वनाथ झारखण्डी | हिन्दी समिति उत्तरप्रदेशशासन लखनाऊ 1975 |
| भारतीय ज्योतिष का इतिहास | डा.गोरखप्रसाद | हिन्दी समिति उत्तरप्रदेश शासन लखनाऊ 1974 |
| मुहूर्तचिन्तामणिः श्रीरामदैवज्ञाविरचितः | कपिलेश्वरशास्त्री (माणिप्रभाटीका) | चौखम्बा अमर भारती प्रकाशनम् वारणासी 1982 |
| संस्कृतसाहित्यविमर्शः | द्विजेन्द्रनाथशास्त्री | भारतीप्रतिष्ठानम् मयराष्ट्रप्रदेशः उत्तरप्रदेशः 1954 |
| सिद्धान्तशिरोमणिः भास्करविरचित | मुरलीधरठाकुरः | चौखम्बासंस्कृतसिरीज् वारणासी 1950 |

| | | |
|---|---|---|
| लघुसङ्ग्रहः | श्रीगणेशदत्तपाठकः | ठाकुरप्रसाद एण्ड सन्स् बुक्सेलर्स वाराणसी 1972 |
| The Goladeepika By Parameswara | K.V. Sharma | Adyar Library Series No.32 1956 |
| A History of The Kerala School of Hindu Astronomy | K.V. Sharma | Visweswarananda Institute Hoshiarpur 1972. |
| प्रश्नमार्गः | पुन्नश्शेरिनम्पिः नीलकण्ठशर्मा | आर. सुब्रह्मण्योपाध्यायः श्रीगीर्वाणवाणीपुस्तकशाला पालघाट 1926 |


